# कार्यकारणभाव

## (विद्वत्परिचर्चा)



**आधिदैविक**

सच्चिदानन्द परब्रह्म साकार अपरिच्छिन्न

सत्

चित्

आनन्द

समष्टि-अन्तर्यामिन्

व्यष्टि अन्तर्यामिन्

**आध्यात्मिक**

ईषत् तिरोहितानन्द अक्षर ब्रह्म निराकार अपरिच्छिन्न

बहुभवनसंकल्प

सर्वभवनसामर्थ्य

आविर्भाव

तिरोभाव

**आधिभौतिक**

ब्रह्माण्ड जडजीवेश्वरात्मक साकार परिच्छिन्न

कालकर्मस्वभाव प्रकृति की चोखट

२३ प्राकृत द्रव्य

पुरुष समष्टि

व्यष्टि जीव

**प्रकाशक :**
श्रीवल्लभाचार्य ट्रस्ट,
कंसारा बजार, माण्डवी, कच्छ, गुजरात ३७० ४६५.
☎ : (02834) 231463, 224306.
Email : gosharadad1@sancharnet.in
Website : http://www.pushtimarg.net

Vidvatparicarcā : Papers And Proceedings on
Kārya-Kāraṇbhāva
during the Seminar on the Vāllabha theory of Causation.

**प्रथम संस्करण :** वि. सं. २०६०. वल्लभाब्द : ५२७.

**प्रति :** ५००.

**ग्रन्थप्रकाशन सहाय :** Rs. 150/-



**मुद्रक :** श्रीवल्लभ बुक मेन्युफेक्चरिंग् कं., ५५/४६ सिटिमील कम्पाउंड,
कांकरीआ रोड़, अमदावाद, गुजरात.

# श्रीवल्लभाचार्य ट्रस्ट, (मांडवी - कच्छ) के कार्य

## ➪ सेमिनार :

आयोजित :

१. शब्दखण्डीया विद्वत्परिचर्चा, गांधीनगर-गुजरात

२. कार्यकारणभावविचार, वडोदरा-गुजरात

३. अन्यख्यातिवादीया विद्वत्सङ्गोष्ठी, पुणे

४. प्रत्यक्षप्रमाण सङ्गोष्ठी, पुणे

५. वार्तापरिचच हालोल-गुजरात

६. अधिकारपरिचर्चा, हालोल-गुजरात

७. पुष्टिभक्तिमार्गीय साधनाप्रणाली, मुम्बई

८. "कथायां वा" / गुणगान साधना, मुम्बई

९. World Philosophy Conference, Delhi (Cosponsored with Indian Philosophical Congress)

१०. International Conference on World Peace, Ahmedabad (Cosponsored with Uni. of Gujarat)

११. अन्धकारवाद विद्वत्परिचर्चा, पुणे

आयोज्य :

अनुमानप्रमाण

शरणागति

## ➪ आचार्यवंशजोंकेलिये अध्ययनसत्र

१. तर्कामृतम् - न्यायसिद्धान्तमुक्तावली

२. वेदान्तसार

➪ ग्रन्थप्रकाशन :

| ग्रन्थ | प्रकाशनसहाय |
|---|---|
| १. प्रवेशिका ( गुज. ) | १० |
| २. प्रवेशिका ( अंग्रेजी ) | नि:शुल्क |
| ३. प्रमेयरत्नसंग्रह ( गुज. ) | |
| ४. शब्दखण्डीया विद्वत्परिचर्चा ( संस्कृत-हिन्दी-अंग्रेजी ) | २०० |
| ५. अन्यख्यातिवादीय विद्वत्सङ्गोष्ठी ( संस्कृत-हिन्दी-अंग्रेजी ) | १५० |
| ६. तत्वार्थदीपनिबन्धान्तर्गत शास्त्रार्थप्रकरणम् ( व्रजभाषाटीका) साधारणसंस्करण / राजसंस्करण | ५०/७० |
| ७. तत्वार्थदीपनिबन्धान्तर्गत सर्वनिर्णयप्रकरणम् ( व्रजभाषाटीका )साधारणसंस्करण / राजसंस्करण | ८०/१०० |
| ८. वार्तापरिचर्चा | अनुपलब्ध |
| ९. पुष्टिविधानम्-१ ( पाठावली, व्रजभाषा ) | नि:शुल्क |
| १०. पुष्टिविधानम्-१ ( पाठावली, गुज. ) | २५ |
| ११. पुष्टिविधानम्-२ ( व्याकरणम् ) | १०० |
| १२. पुष्टिविधानम्-३ ( व्रजभाषाविवृति ) | ५० |
| १३. अधिकारपरिचर्चा ( गुज.-हिन्दी-व्रज ) | १०० |
| १४. श्रीभागवत महापुराण ( गुर्जरभाषानुवाद )शीघ्रप्रकाश्य | अनुपलब्ध |
| १५. Manual of the Devotional Path of Pushti | 65 |
| १६. सेवा और व्रजलीला ( व्रजभाषा ) | नि:शुल्क |
| १७. श्रीगोपीनाथप्रभुचरण( गुज.-हिन्दी ) | २५ |
| १८. Computer CD, www.pushtimarg.net | 50 |
| १९. साधनाप्रणाली( गुज.-हिन्दी-अंग्रेजी ) | ५० |
| २०. पुष्टिप्रवाहमर्यादाभेद ( गुज.-हिन्दी ) | नि:शुल्क |
| २१. रसदृष्टिनी तरफेणमां ( गुज. ) | नि:शुल्क |
| २२. कार्यकारणभावमीमांसा विद्वत्सङ्गोष्ठी( संस्कृत-हिन्दी-अंग्रेजी ) | २०० |
| २३. पुष्टिप्रवेश - १( गुजराती ) | १० |

◇ सहयोगप्रकाशन :

| ग्रन्थ | प्रकाशनसहाय |
|---|---|
| २४. वेदान्तचिन्तामणी( संस्कृत-गुज. ) | अनुपलब्ध |
| २५. सहस्रीभावना( संस्कृत-गुज. ) | १०० |
| २६. नवरत्नम्( संस्कृत-गुज. ) | अनुपलब्ध |
| २७. पत्रावलम्बनम्( संस्कृत-गुज. ) | अनुपलब्ध |
| २८. ब्रह्मसूत्राणुभाष्यम्, .खण्ड १-५( गुजराती अनुवाद ) | १००० |
| २९. श्रीयमुनाष्टकम्( संस्कृत-गुज.-हिन्दी ) | २०० |
| ३०. भक्तिहंस( संस्कृत-गुज. ) | १०० |
| ३१. शास्त्रार्थप्रकरणम्( गुज. ) | अनुपलब्ध |
| श्रीभागवत-सुबोधिनी; स्कन्ध १० पूर्वार्ध, श्रीनानुलाल गांधी कृत गुजराती अनुवाद | |
| ३२. अध्याय १-४ | २०० |
| ३३. अध्याय ५-१४ | ३०० |
| ३४. अध्याय १५-२० | २०० |
| ३५. अध्याय २२-२८ | २०० |
| ३६. अध्याय २९-३५ | ३०० |
| ३७. श्रीभागवत-सुबोधिनी; स्कन्ध १० उत्तरार्ध, गुजराती अनुवाद अध्याय ६४-८४ | ३०० |
| ३८. Shrimad Vallabhācāryaji, His Philosophy & Life, Prof. Jethalal Shah | 300 |
| ३९. Doctrines of Sri Vallabhācārya, Dr. Helmuth Von Glassenapp | 100 |
| ४०. Sri Vallabhācārya & His Teachings, Dr. Chimanlal Vaidya | 100 |
| ४१. Ocean of Jewels, Sri Shyamdas | 100 |

- गोपाल गोशाला
- संस्कृत माध्यमसे अध्ययन करते छात्रोंकेलिये छात्रालय

  संचालन : श्रीवल्लभाचार्य व्रजसंस्कृति विकास ट्रस्ट समिति, गोकुल
- छात्रवृत्ति
- हस्तप्रतसंग्रह - संरक्षण; पुस्तकालय
- यावत्प्राप्य साम्प्रदायिक श्लोकोंकी पादानुक्रमणिका
- पुष्टिमार्गीय वेबसाईट : http://www.pushtimarg.net/
- Digitalization of the manuscripts
- Catalogus Catalogorum of the manuscripts of Śuddhādvaita - Puṣṭibhakti - Sampradāya.
- Encyclopedic CD ROM of Śuddhādvaita Puṣti-bhakti Sampradāy comprising of entire original Sanskrit writings of Acharyas along with Vraj, Hindi, Gujarati & English literature written on the base of such writings.

# PREFACE

Its a matter of great pleasure by presenting, though belatedly, the report of the seminar on the most discussed problem of philosophy : 'Causality' organised by the Trust at Vadodara, Gujarat in year 2000.

To the best of our knowledge this is perhaps the first book published on Causation, which covers comparative and critical analysis of the subject in such great detail along with live discussion from the viewpoint of almost all leading Indian philosophical systems and also some western philosophical systems advocated by philosophers like David Hume, Benedict De Spinoza, John Stuart Mill and Bertrand Russell.

Unlike our previous reports in which papers were published in the chronological order i.e. day wise and session wise, papers are set in this report in the sequence of following Vādas of Causation : Ajātivāda, Saṁghātavāda, Vivartavāda, Ārambhavāda and Pariṇāmavāda (Vikṛta & Avikṛta). Papers dealing with diverse systems or do not follow strictly to any definite system are set under the title of 'Sarvasaṁgrahavāda'.

Some papers, though very important but not befitting with the desired format and prescribed subject, are not

incorporated in this report. We wish to publish them in the coming volume of the seminar. We are thankful to Prof. Vashishtha Narayan Jha, Pune for doing English translation of the chapter related to the theory of causation from the treatise 'Prasthānaratnākara' for the participants that are not well versed in Sanskrit. Such English translation also will be published in the succeeding volume.

Two works of Ācārya Srī Puruṣottamacaraṇa i.e. Āvirbhāva-tirobhāva-vāda, one of 24 Vādas from the treatise 'Avatāra-vādāvalī', and a chapter related to the theory of causation from the treatise 'Prasthānaratnākara' have been published in this book for the reference of fresh readers.

We are indebted to Dr. B. K. Dalai, Pune and Dr. Meera Rastogi, Lakhnau for writing scholarly article for this report from the viewpoint of Jainism and Śaivism of Kāśmīr respectively in due time. Both the papers are published under the title of 'Pariśiṣṭha'. However, we feel so sorry of not being able to incorporate any article from very important philosophical schools of Mīmāṁsā.

Similar to our earlier reports, entire proceedings of the seminar had been taped for documentation. With the help of recorded tapes proceedings of the seminar were composed and dispatched to the respective participants

to ensure its legitimacy and to provide opportunity for further addition and alteration in their papers and discussions in the light of the dialogue, which was held in the course of seminar. All the addition, alteration and deletion are made in papers and discussions according to the written instruction of the very speaker.

Internal discussions, inaudible and un-understandable wordings caused by noise etc., narration which was given by the scholars at the time of presentation of their papers and unrecorded portion of the discussion while changing the sides of the cassettes could not be incorporated in the report. Such portions are indicated by '...' three dots wherever the case is. Except these cases wordings are kept as it were spoken.

Since we wish to carry on dialogue of Śuddhádvaita Puṣṭibhakti Sampradāya with other philosophical systems even after seminar, revered Goswami Sri Shyam manoharji has written postscript under the title of 'Saṁgoṣṭyuttara-lekha-nam' in which he has undertaken the job to answer questions that remained unanswered during the seminar and to clarify doubts to spell out the stand of Śuddhádvaita Puṣṭibhakti Sampradāya. Moreover, intended but unexpressed or partially expressed thoughts are also being added in the same.

We are grateful to the trustees of Shri Vallabhavidyapitha-

-Vittaleshaprabhcharana Ashram Trust, Kolhapur for making us available valuable Sanskrit books of Śuddhádvaita Puṣṭibhakti Sampradāya for the presentation of the participants of this and succeeding seminars.

Generous thanks are due to following volunteers who worked for the success of seminar without seeing day and night. Sri Jagadishbhai Katariya, Sri Janakbhai Shah, Sri Rasikbhai shah, Sri Dahrmendrsinh Jhala, Sri Niraj Shah, Sri Pankaj Gor, Sri Hitesh Gor, Sri Madhubhai Bhatiya, Sri Pravinbhai Dadhaniya, Sri Kiran Thakkar and Late Sri Shaileshbhai Shah.

In the end we express our gratitude to all the scholars for their cooperation for the success of the seminar.

**On behalf of Sri Vallabhacharya Trust**

*Sharad Goswami*

**http://pushtimarg.net/**

# अनुक्रमणिका

## *विवर्तवाद*



## *आरम्भवाद*

## सर्वसिद्धान्तसंग्रहवादः



## परिणामवादः (१)



## परिणामवादः (२)

## उपसंहार



## परिशिष्ट

# ।। अ व ता र वा दा व ल्यां ।।

## षष्ठः

## ।। आविर्भावतिरोभाववादः ।।

( मङ्गलाचरणेन उपक्रमः )

यदाविर्भाव आनन्द(१) आविर्भवति सर्वतः ।।
तिरोभवन्ति सन्तापास् तं श्रये गोकुलेश्वरम् ।।१।।

( असत्कार्यवादिनाम् आविर्भाव-तिरोभावयोः दुर्निरूपत्वाक्षेपः )

( योग्यतायोग्यते ज्ञप्तेः बहिरन्तःप्रवेशतः ।।
भिन्नतावस्थयोर्वा स्यान्नित्यतानित्यते किमु ? ।।२।।
आविर्भावतिरोभावौ दुर्निरूपौ ततो मतौ ।।
उत्पत्तिनाशौ स्वीकार्यौ ह्यसत्कार्यावलम्बनात् ।।३।। )

❋ ननु इदम् अनुपपन्नं कार्योत्पत्तिनाशौ अनुपगच्छतां कार्याविर्भाव-तिरोभावयोरपि दुर्निरूपत्वात्, तयोः अनुभवयोग्यता-तदयोग्यतात्मकत्वेन उत्पत्तिम् अन्तरेण कार्यवर्तमानतायाः च अशक्यवचनत्वात्. अन्यथा प्रागभावदशायामपि तत्प्रत्यक्षप्रसङ्गात्. नच *प्रागभावएव प्रतिबन्धकः* इति वाच्यं, तस्य कारणत्वात्. नच *नियतावधिकत्वेन कार्यस्य कारणे सत्ता अनुमातुं शक्या* इति वाच्यं, तत्प्रागभावसत्तयैव नियतावधिकत्वसिद्धेः. किञ्च कारणे कार्यसत्तायां, पश्चाद्भावित्वेन अभिमतस्यापि कार्यस्य कारणात् पूर्वं सत्त्वेन, सिद्धत्वाद् दर्शनयोग्यत्वमात्रं वाच्यं नतु जननम्. तथासति शक्तस्य शक्यकरणाभावाद् अशक्तिप्रसक्ति. ततश्च कार्यानुत्पादस्य आकस्मिकवादस्य वा प्रसङ्गः. एवं सहजशक्त्यसिद्धौ कार्यकारणभावस्यापि

असिद्धेः 'कारणा'दिपदेषु तत्तदभिधायिकायाः पदशक्तेरपि अपायः. ततश्च लौकिकवैदिक-व्यवहारोच्छेदापत्तौ प्रयोजनस्यापि अभावे प्रसक्ते आधेयशक्तेरपि वैयर्थ्यापत्तिः च.

नच *कारणाद् बहिर्भावरूपा उत्पत्तिः अभ्युपेयतएवेति न दोषः* इति वाच्यं, यत्र एकस्मिन् फले बहूनि बीजानि तेभ्यः च अनन्तानि फलानि, तेभ्यः च तथैव बीजानि इत्येवं परम्परा, तत्र एकस्मिन् मूलभूते फले वा बीजे वा तावतां सत्त्वाद् युगपद् बहिर्भावापत्तेः क्रमासङ्गत्यापत्तेः च. नच *निमित्तान्तर-समवधानाभावात् न दोषः* इति वाच्यं, तथापि उत्पत्तेः बहिर्भावरूपत्वसिद्धौ कार्यस्य पूर्वकाले सत्त्वसिद्धिः, तत्सिद्धौ च उत्पत्तेः बहिर्भावरूपत्वसिद्धिरिति अन्योन्याश्रयेण तदुपगमस्यैव असङ्गतिः.

नापि *"*विमतः प्रवाहो अनादिः प्रवाहत्वाद्, बीजाङ्कुरप्रवाहवद्*" इति अनुमानेन अनादिसृष्टिम् उपगम्य क्रमोपपत्तिः* इति वाच्यं हेतोः साध्यसमत्वात्. अस्यैव प्रवाहरूपतायाः विचार्यत्वात्. यत्र गोधूमादिबीजनाशे वेणुगोधूमैः गोधूमानां, लुलायशृङ्गात् कदल्याः, काशाद् इक्षोः च अङ्कुरोत्पत्तिः, ततः तेभ्यो गोधूमादिभ्यो वेण्वाद्यनुत्पत्तिः तत्र आदौ पश्चात् च विच्छेदेन व्यभिचारात्. "*विमतः प्रवाहः सादिः प्रवाहत्वाद् वैणवगोधूमप्रवाहवद्*" इति हेतोः साधारणत्वात् च. नच व्यतिरेकदृष्टान्तेन निर्वाहः, क्षुद्रनदीप्रवाहादौ अनादित्वाभावेऽपि प्रवाहत्वदर्शनेन व्यतिरेकव्यभिचारात्. नच *महत्त्वेन हेतौ विशेषिते न कोऽपि दोषः* इति वाच्यं, गङ्गादृष्टान्तेन तत्रापि व्यभिचारात् पुराणादौ गङ्गोत्पत्तिस्मरणात्, शब्दस्य प्रमाणत्वात्. तस्मात् न क्रमसङ्गतिः.

अथ *उत्पत्तिः न बहिर्भावः किन्तु मृदवस्था गता पिण्डावस्था जाता, सा गता घटावस्था जाता इत्यादिप्रतीतेः तन्त्ववस्थानुपमर्देन पटावस्थादर्शनात् च अवस्थाविशेषएव सा* इति विभाव्यते, तदापि अवस्थाविशेषस्य कादाचित्कत्वाद् जन्यत्वं वाच्यमेव, तत् सुतरामेव दुर्वचम्,

उत्पत्तेः अनिरुक्तत्वात्. किञ्च अवस्थान्तरं कार्यम् इत्यपि असङ्गतं, तथा सति पुत्रोऽपि पित्रवस्थान्तरं स्यात्. तथाच पिण्डावस्थावत् पितुः नाशः स्यात्. तन्तुवद् अनाशाङ्गीकारेऽपि सर्वो व्याप्रियेत. अतो अंशएव पुत्रः. एवम् अङ्कुरादिरपि बीजांशएव नतु अवस्थान्तरम् समानन्यायात्. तथाच विभागेन बहिर्भावद्वारा हेतुत्वमात्रं बीजादौ सेत्स्यति. तावतापि न अभिमतसिद्धिः बहिर्भावरूपायाः उत्पत्तेः पूर्वमेव दूषितत्वात्. अतो वैशैषिकप्रतिपन्नः उत्पत्तिवादएव साधीयान्. अथ अस्तु या काचिद् उत्पत्तिः; तथापि, भवद्रीत्या तौ आविर्भाव-तिरोभावौ दुर्वचौ.

तथाहि — तौ नित्यौ अनित्यौ वा ? न आद्यो घटादिवस्तूपलम्भानुपलम्भयोः सातत्यप्रसङ्गात्. नच इष्टापत्तिः, तयोः विरुद्धत्वेन सहावस्थानायोगात्. ग्रहिलतया तथा अङ्गीकारे वस्त्वनिर्वाच्यत्वप्रसङ्गात्. घटाद्याविर्भावनाय तिरोभावनाय च साधने प्रवृत्तिदर्शनेन प्रत्यक्षविरोधात्. तादृग्विरुद्धधर्माश्रयभूतस्य धर्मिणो असिद्धौ तयोरपि अशक्यत्वेन शून्यवादापत्तेः च. नच *घटाद्युपलम्भानुपलम्भयोः कादाचित्कत्वं तत्तत्कारणस्तोमपरम्पराकादाचित्कत्वेन समर्थनीयम्* इति वाच्यम्, अन्ततः ईश्वरेच्छापर्यन्तं धावने तस्याअपि नित्यत्वेन तद्दोषतादवस्थ्यात्, एकतरपक्षपाते इतरोच्छेदप्रसङ्गात् च. तयोः घटादिवस्तुधर्मत्वेन धर्मिणां कादाचित्कत्वे धर्मभूतयोः तयोः नित्यत्वस्य गन्धादिवद् अशक्यवचनत्वात् च. नच *जातिवद् अदोषः* इति वाच्यं, तद्वदेव सामान्य-धर्मत्व-प्रसङ्गात्. नच इष्टापत्तिः, सर्वस्य युगपद् दृश्यत्वादृश्यत्वप्रसङ्गात्. नच ईश्वरेच्छया निर्वाहो, दत्तोत्तरत्वात्.

न द्वितीयः, कार्यान्तरवत् तयोरपि स्वकारणाद् बहिर्भावस्य स्वकारणे अन्तर्भावस्य अवश्यवाच्यत्वेन पुनः तदीययोरपि तयोः तथात्वेन अनवस्थापातात्. नच *अनादिः अनवस्था न दोषः* इति वाच्यं तथापि अनिर्वाहात्. तेषाम् अनित्यत्वेन कार्यत्वाद् आद्यक्षणसम्बन्धस्य अवश्यवाच्यत्वेन क्षणानां च उपाधिसम्बन्धाद् जायमानत्वेन तत्रापि उक्तविकल्पैः तेषां क्षणघटकतायाएव

दुर्निरूपत्वात्. तेषाञ्च स्वस्वकारणादेव बहिर्भावादेः वाच्यत्वेन कारणानां च अनुपलभ्यमानत्वेन अप्रामाणिकत्वात् च. अनादित्वस्य ''बहु स्याम्'' इत्यादिश्रुतिविरुद्धत्वात् च. अतः सत्कार्यवादम् आलम्ब्य आविर्भावतिरोभावसमर्थनं न कथमपि सुघटम् ✻ इति प्राप्ते —

(कारणगतशक्तिविशेषरूपौ तौ इति सिद्धान्तप्रतिपादनम्)

**उच्यते तौ हरेः शक्ती नियताविच्छया ततः ।।**
**धर्माधर्मस्य संसिद्धेः कारणं च न दुर्वचम् ।।४।।**

तथाहि — कारणगतौ शक्तिविशेषौ एतौ. नच *अतिरिक्तशक्तिकल्पने मानाद्यभावः* शङ्क्यः, तन्तुतुरीवेमादिभ्यः पटोत्पत्तिदर्शनात् मृद्दण्डचक्रादिभ्यः च घटोत्पत्तिदर्शनात् तत्र-तत्र तज्जननशक्तेः निश्चयात्. साच न स्वभावो, नापि स्वरूपं, तथा सति तस्य सार्वदिकत्वात् शीर्णेभ्योऽपि तन्त्वादिभ्यो पटाद्युत्पत्तिप्रसङ्गाद्, भर्जितबीजेभ्योऽपि अङ्कुरोत्पत्तिप्रसङ्गात् च, मणिसमवधानेऽपि वह्नेः तृणादिदाहप्रसङ्गात् च. अतः कालेन भर्जनेन च नाश्या, मणिसमवधानप्रतिबध्या च, काचित् स्वभावात् स्वरूपात् च अतिरिक्तैव सा अङ्गीकार्या.

(कारणे कार्यजननशक्तिरूप-सामर्थ्यविशेषानङ्गीकर्तॄणां शङ्का)

✻ ननु तन्त्वादीनाम् अविशीर्णत्वेन बीजानां च अभर्जितत्वेन रूपेणैव कार्यजननदर्शनाद् रूपभेदमात्राङ्गीकारेण निर्वाहे अतिरिक्तशक्तिकल्पनं गुरुभूतम्. एवञ्च वह्निस्थलेऽपि मणेः प्रतिबन्धकत्वेन तदभावस्य प्रतिबन्धकाभावरूपत्वात् तस्य सहकारित्वेन निर्वाहात् च ज्ञेयम्. नच *प्रतिबन्धकत्वं नाम कारणीभूताभावप्रतियोगित्वं तथा सति मण्यादेः प्रतिबन्धकत्वं तदभावस्य च करणत्वमिति कल्पनाद्वयेन गौरवम्* इति वाच्यम्, अतिरिक्तशक्तिवादेऽपि तन्नाशकतत्प्रतिबन्धकयोः तवापि आवश्यकत्वेन च तौल्यात्. वस्तुतस्तु न मण्यादीनां प्रतिबन्धकत्वं न वा तदभावस्य कारणत्वं किन्तु उत्तेजकाभावविशिष्ट-मण्यभावविशिष्ट-वह्नित्वेन वह्नेरेव कारणत्वमिति एकेनैव कार्यकारणभावेन निर्वाहात् लाघवमेवेति अतिरिक्तशक्तिकल्पना अजागलस्तन-

प्रायैव* इति चेत्.

(तत्समाधानम्)

मा एवं, गुरुशरीरकारणतावच्छेदकप्रवेशेन अत्रापि गौरवानपायात्. अवच्छेदकशरीरे मण्यभावस्य प्रतिबन्धकाभावत्वेन प्रवेशे प्रतिबन्धकस्य च पूर्वोक्तलक्षणकत्वे अत्रापि कार्यकारणभावद्वयकल्पना, प्रतिबन्धककल्पना च इति कल्पनात्रयापत्तेः. किं(? ञ्च!) सामग्रीहेतुत्वं प्रतिबन्धकत्वम् इति लक्षणकत्वेऽपि कल्पनाद्वयेन पूर्वोक्ततौल्यात्. मण्यभावत्वेन प्रवेशेतु नानाकार्यकारणभावकल्पनापत्त्या अत्यन्तमेव गौरवात्. मन्त्रौषधादिभिरपि दाहाभावदर्शनात्. यत्किञ्चिन्मणेः सद्भावे दाहदर्शनेन व्यभिचारापत्तेः च. एवम् उत्तेजकानामपि नानात्वेन तत्तत्स्वरूपेण प्रवेशे पूर्ववदेव गौरवात्. 'यत्किञ्चित्'त्वेन प्रवेशे यावत्तदभावविशिष्ट-मण्यभावविशिष्ट-वह्नेः दाहं प्रति अकारणत्वात् ततो दाहाभावप्रसक्तेः. 'यावत्'त्वेन प्रवेशे च यत्किञ्चिदुत्तेजक-विशिष्टमणिसत्त्वेऽपि दाहाभावापत्तेः. तादृशतद्विशिष्टवह्निना दाहदर्शनात् तथात्वेन वा, यावत्तदभावविशिष्ट-मण्यभावविशिष्ट-वह्नित्वेन वा कारणता इति सन्देहानपायेन कार्यकारणभावशरीरस्य तावदुत्तेजक-तदभाव-मणि-तदभाव-तत्तद्वैशिष्ट्य-ज्ञाना- धीनतया तादृशतच्छरीरज्ञानस्य दौर्घट्येन च कारणताग्रहस्यैव दुर्लभत्वात् च. अतो दाहं प्रति वह्नित्वेनैव कारणता लाघवात् सार्वजनीनत्वात् च अनिच्छतापि आदरणीया. अतो मणिप्रतिबध्या स्वभावाद्यतिरिक्ता शक्तिः काचिद् अभ्युपेयैव. एवं बीजानामपि अभर्जितत्वेनैव न कारणता दावाग्निदग्धेभ्योऽपि वेत्रबीजेभ्यः कदलीकाण्डजननस्य भामतीनिबन्धे प्रदर्शित-त्वात्. वराहशोणित-मेदःसेचित-कदल्या दाडिमफलजनकत्वस्य तरुचिकित्सा-ग्रन्थे चित्रीकरणे प्रसिद्धत्वात् च. अतः तत्रापि भर्जनादिना काचित् नाश्यते काचिद् आधीयते इति अवश्यं मन्तव्यम्.

(पूर्वपक्षे अप्रसिद्धकारणरूपकल्पनया नाम्न्येव कलहः)

वस्तुतस्तु कार्यकारणभावपक्षेऽपि प्रसिद्धरूपातिरिक्तरूपान्तरस्य उत्पत्त्या-

दिशालिनो अवश्यकल्पनीयतया कार्यकारणभावशरीरस्य तावत् नाम्न्येव कलहः पर्यवस्यति, नतु स्वरूपे इति मुधैव अयम् आग्रहः इति दिक्.

(ईश्वरेच्छायाः नियामकत्वविचारः)

अतो बीजादिपरिणामस्थलेऽपि सैव मन्तव्या. नच उक्तदूषणग्रासः, उक्तरीत्या सिद्धायाअपि तस्याः भगवदिच्छया नियतत्वात्. नच तस्याअपि नित्यत्वात् तद्दोषतादवस्थ्यम् *"इदम् अस्मिन् काले, अस्मिन् देशे, एवम्, अस्माद्, बहिर्भवतु. इदञ्च अस्मिन् अन्तर्भवतु"* इति तदाकारस्य फलबलेन कल्प्यत्वात्.

**(समानन्यायेन असत्कार्यवादेऽपि ईश्वरेच्छायाः कुतो न नियामकत्वम्? इति शङ्कानिरासः)**

*ननु एवं सति ईश्वरेच्छया वस्तूत्पत्तिरेव अङ्गीक्रियताम्* इति चेत्, मा एवम्, असत्कार्यवादे उत्पत्तेः अशक्यवचनत्वात्.

तथाहि—उत्पत्तिः नाम प्रागभावो वा धर्मान्तरं वा? न आद्यः तस्य अजन्यस्य कार्यप्राक्कालवर्तित्वेन इदानीं घटोत्पत्तिः भविष्यतीति प्रतीत्यभिलापयोः बाधप्रसङ्गात्. न अन्त्यः, तस्य एकनिष्ठत्वे कार्यानुत्पाददशायां कार्यस्य असत्त्वात् कारणादिनिष्ठत्वमेव तस्य वाच्यं, तथा सति तद्विषयिणी 'उत्पद्यते' इति प्रतीतिः स्यात्. द्विनिष्ठत्वेऽपि *"संयुक्तौ इमौ"* इतिवद् *"उत्पद्येते इमौ"* इति प्रतीतिः स्यात्. आद्यक्षणे घटादिरूपप्रतियोग्यभावेन संयोगाभावप्रतीतिवद् *'उत्पद्यते'* इति प्रतीतिः च न स्यात्. नच * *"'दश दिनानि अतीयुः'—'षड्भिः अहोभिः गन्ता'"* इत्यादौ भूतभव्यदिवसेषु असत्स्वपि संख्यारूपो धर्मो यथा उपेयते तथा उत्पत्तिरपि अनुत्पन्नघटाद्याधारा अभ्युपेया * इति वाच्यं, तेषां दिनानामपि कालचक्रे सूर्यपरिस्पन्दवशेन तत्तद्-वत्सरर्तु-गततया पुनः-पुनः परिवर्तमानानां सतामेव संस्कारादिना उपनये तत्र अपेक्षाबुद्ध्या संख्याकल्पनस्य शक्यत्वेऽपि, उत्पत्तेः अकाल्पनिकत्वेन

अत्र तथा वक्तुम् अशक्यत्वात्. अथ *अपेक्षाबुद्ध्या तत्र संख्या जन्यतएव न कल्प्यते* इति चेत्, न, समवायिनं विना केवलनिमित्तेन कार्यजननस्य क्वापि असिद्धत्वेन, अत्र तथा वक्तुम् अशक्यत्वात्.

( निरुपादानककार्योत्पत्तिनिरासः )

नच *चिन्तामण्यादौ निरूपादानक-दधि-वसन-सुवर्णादि-जननस्य दृष्टत्वात् न दोषः* इति वाच्यम्, अविक्रियमाणानां तेषामेव उपादानत्वाद्, योगिवत् सामर्थ्यविशेषेण दध्यादि-जनकभूत-भेदाकर्षणस्य तत्र शक्यवचनत्वात् च. अनुपादानकसृष्ट्यङ्गीकारे **''सर्वस्य समवाय्यसमवायिनिमित्तजन्यत्वम्''** इति वैशेषिकादिसिद्धान्तहानेः च.

( उत्पत्तेरपि उत्पत्तेः अवश्यस्वीकर्तव्यत्वेन उत्पत्त्यनुपपत्तिः इति निरूपणम् )

किञ्च संख्यायाइव उत्पत्तेरपि जन्यत्वात् तस्याअपि उत्पत्तिः स्वीकार्या. तथा सति निष्प्रमाणिका अनवस्थापत्तिः तत्तत्कारणादिकल्पनागौरवग्रासः च. नच * *''उत्पत्तिः जाता''* इत्यादि प्रत्ययानुरोधाद् उत्पत्तेः उत्पत्तिम् अङ्गीकृत्य विशेषाणां स्वतो व्यावर्तकत्ववत् सा स्वतएव * इति वाच्यम्, आत्माश्रयापत्तेः, विशेषाणामपि उपगमातिरिक्त-प्रमाणरहितत्वेन दृष्टान्ताभावात् च. नच *वर्तमानप्रागभावप्रतियोगित्वमेव सा* इति वाच्यं, तस्य पूर्ववादएव दूषितत्वात्, कारणावस्थाविशेषेणैव निर्वाहात्. प्रतियोगित्वस्य स्वरूपसम्बन्धविशेषत्वेन स्वरूपद्वयात्मकत्वाद् घटस्वरूपस्य तदानीम् अभावेन तस्यापि वक्तुम् अशक्यत्वात्. नच *भाविनीं सत्ताम् आदाय तत्र प्रतियोगित्वं* शक्यवचनं, धर्मिणो असत्त्वेन भाविसत्तायाः निश्चयाभावेन तथा वक्तुम् अशक्यत्वात्. नापि *आद्यक्षणसम्बन्धः सा* इति वाच्यं, प्रतियोगिसत्तां विना क्षणसम्बन्धस्य अशक्यवचनत्वात्, तस्यापि आद्यक्षणसम्बन्धएव 'उत्पत्ति'पदार्थइति ज्ञप्तौ आत्माश्रयात् च. नच *ईश्वरेच्छया असदेव उत्पद्यते* इति वाच्यं, मानाभावात्, मायिकत्वापातात् च, *''घटो भवति''* इति प्रयोगानुपपत्तेः च, प्रथमान्तविशेष्यक-शाब्दबोधस्य तदभिमतत्वात्. क्रियाश्रयत्वस्य च कर्तृत्वाद्

भवनक्रियाश्रये घटएव आख्याताभिहिते लडर्थस्य कालस्य समानपदोपात्तत्वेन अन्वयात् तदानीं घटानङ्गीकारे तस्य अशक्यवचनत्वात्. नच * व्यापारस्यापि समानपदोपात्तत्वेन कालान्वयस्य तत्र शक्यवचनत्वात् न प्रयोगानुपपत्तिः * इति वाच्यम्, एवमपि आश्रयवर्तमानत्वम् अन्तरेण व्यापारवर्तमानतायाः अनुपपद्यमानत्वाद् घटादिसत्तायाः अर्थादेव सिद्धेः. पदान्तरोपात्त-फलान्वय-पक्षेऽपि सत्तारूपस्य उत्पत्तिरूपस्य वा यस्य-कस्यापि फलस्य धर्मत्वेन धर्मिणं विना असिद्ध्या धर्मिणोऽपि सत्तायाः अर्थादेव सिद्धेः. नच * कालस्य कर्तरि अन्वये उच्यमाने उत्पत्त्यनन्तरमपि कालान्वितस्य कर्तुः घटस्य सत्त्वाद् ''*उत्पद्यते घटः*'' इति प्रयोगापत्तिः * इति वाच्यं, व्यापारादिद्वारैव अन्वयाङ्गीकाराद् व्यापारादितिरोभावाद् द्वाराभावेन कालान्वयाभावात् तादृशप्रयोगाभावस्य अनायासेन सिद्धेः.

( सिद्धान्तसंग्रहकारिकाः )

तस्माद् असत उत्पत्तिर् न युक्तिम् अधिरोहति ।।
अतो धर्मी पूर्वसिद्धः सर्वथैवाभ्युपेयताम् ।।५।।
तथा '*नष्टो घट*' इति व्यवहारस्य सिद्धये ।।
तदाप्युपेयस् तेनायं धर्मी सिद्धः सनातनः ।।६।।
एवञ्च धर्मिनित्यत्वे ब्रह्मतादात्म्यम् अस्य च ।।
बोध्यं ''पुरुषएवेदं''-''स वै सर्वमिदं जगत्'' ।।७।।
''इदं सर्वं यदयमात्मे''त्यादि श्रुतिदर्शनात् ।।
तथा सति ''स भूतं स भव्यम्'' एतच्छ्रुतेर् बलात् ।।८।।
तादृशव्यवहारेऽपि न क्षतिस्तस्य काचन ।।
शक्तिस्तु सिद्धा प्राक् तेन शक्ताद् हेतोर्बहिः स्थितिः ।।९।।
आविर्भावस्तिरोभावस् तस्मिन्नेव स्थितिर्मता ।।
अयं '''जनी' प्रादुर्भावे'' '''णश'चादर्शने'' इति ।।१०।।
धात्वर्थदर्शनाद् अर्थः पुष्टस्तेनात्र कार्यता ।।
कारणत्वं च सुघटं तत्प्रकारोऽधुनोच्यते ।।११।।

तथाहि "**परा अस्य शक्तिः विविधैव श्रूयते**" (श्वेता.उप.६।८) इति श्रुतेः "**मयूराः चित्रिता येन शुकाश्च हरितीकृताः. हंसाश्च श्वेतगरुतः स मे विष्णुः प्रसीदतु**" (          ) इति वाक्यात् च पूर्वोक्ताअपि शक्तयो भगवतएव. भगवतैवच विभज्य *प्रजायेय* इति इच्छया तत्र-तत्र रूपे स्थापिताः.

**(भगवच्छक्तिरूपयोः तयोः रूपविवेचनम्)**

किञ्च आविर्भावतिरोभावावपि भगवतः शक्ती "**आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः**" (          ) इति वाक्यात्. 'आविर्भाव'-'तिरोभाव'शब्दौच करणव्युत्पन्नौ भावव्युत्पन्नौ च. तत्र आद्ये पक्षे "'आविः'=प्रकटं भावयति", उपादानान्तःस्थं कार्यरूपं बहिः प्रकटं करोति या निमित्तगता उपादानगता च शक्तिः सा 'आविर्भाव'शब्दवाच्या. एवं "'तिरो'=अप्रकटं भावयति" बहिष्ठं कार्यं उपादानान्तः स्थापयति या शक्तिः नाशकगता सा 'तिरोभाव'शब्दवाच्या. द्वितीयपक्षे आविर्भवनम्= आविर्भावः, तिरोभवनं=तिरोभावः. तत् च अस्मिन सृष्टिकालात्मके स्थूलोपाधौ तदवयवात्मक-तत्तत्कालोपाधि-क्रमिके "*तस्य-तस्य तथा-तथा तत्तदुपलम्भो भवतु*" इति तदा तत्र तस्य तथा "*तत् मा भवतु*" इति इच्छाविषयत्वम् इति फलति. तदपि त्रिविधं तद् उक्तम्(पा.भे.२९)-

**अनित्ये जननं नित्ये परिच्छिन्ने समागमः॥**
**नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा॥१३॥**

**अर्थस्तु : अनित्ये** उत्पत्तिनाशरूपम्. तद् उपपादितम्. नच उत्पन्ने बहिर्भूतप्रतीत्यभावः शङ्क्यो, अङ्कुरादौ तथा प्रत्ययात्, न्यायसामान्येन अन्यत्रापि शक्यवचनत्वात् च. **नित्ये परिच्छिन्ने** जीवादौ गमागमरूपम्. **नित्यापरिच्छिन्ने** भगवति प्राकट्याप्राकट्यरूपम्. तेषां सर्वेषां स्वरूपभेदेऽपि अनया दिशा 'आविर्भाव'-'तिरोभाव'पदाभ्यां संग्रहः.

एवञ्च यन्निष्ठाविर्भाव-शक्तिरूपाद् धर्माद् यस्य आविर्भवनरूपधर्मसिद्धिः तस्य तत् कारणम् इति उच्यते. यन्निष्ठतिरोभाव-शक्तिरूप-धर्माद् यस्य तिरोभवनरूपधर्मसिद्धिः तस्य तत् नाशकम् इति उच्यते. एतेनैव कार्यं नाश्यं च व्याख्यातम्. तथैव उक्तरीतिकान्तर्भावबहिर्भावाख्य- नाशोत्पत्तिशालित्वमेव अनित्यत्वम् इत्यपि. अनेनैव न्यायेन आविर्भावतिरोभावयोरपि अनित्यत्वं, सदातनत्वं भगवद्रूपत्वं च अवसेयम्. इच्छायाः च नियामकत्वात् न तयोः उत्पत्त्याद्यर्थं कारणान्तरादेः अपेक्षा. कालस्यापि तन्नियतत्वाद् यथायोग्यमेव विशेषणत्वम् इति. यत्परिस्पन्दावच्छिन्ने काले उत्पत्तिः नाशः च, तस्य परिस्पन्दान्तरेण तिरोभावे तद्विशिष्टयोः उत्पत्तिनाशयोरपि तिरोभावाद् उत्पन्ने नष्टे च घटे न 'उत्पद्यते'-'नश्यति' इति प्रयोगापत्तिः

**( षडविधभावविकारेषु आविर्भावतिरोभावप्रक्रियायाः संगतिः )**

एवं ब्रह्मवादे :—

(१)वृद्धिरपि कृशत्वतिरोभावसहितस्थूलत्वप्रादुर्भावः.

(२)अपक्षयः तद्विपरीतः.

(३)विपरिणामोऽपि पूर्वरूपरसादितिरोभावसहकृतो रूपरसान्तरादिप्रादुर्भावएव.

(४)सत्तातु नैसर्गिक्येव.

इति ब्रह्मोपादानकसृष्टिव्यवस्था.

**( शिष्टासु चतसृषु सृष्टिषु एतन्निगमनम् )**

मुख्यायाः लीलासृष्टेस्तु नित्यत्वेन अभिन्नत्वात् प्राकट्याप्राकट्याभ्यां लीलासम्पत्तिः.

तृतीयस्याः ब्रह्मविवर्तभूतायाः प्राकृतत्वेन विकारित्वात् प्रथमसमयसंसर्गी भावविकारः उत्पत्तिः चरमसमयसंसर्गी भावविकारो नाशः. अस्त्यादयोऽपि तथा, तादृश्येव तत्र इच्छेति.

चतुर्थ्यान्तु ख्यातिरूपाः सर्वे (पदार्थाः!) इति न काचिद् अनुपपत्तिः.

इति श्रीवल्लभाचार्यवाणीसूचितया दिशा ।।
आविर्भावतिरोभावप्रपञ्चोऽयं विचारितः ।।१४।।

इति श्रीवल्लभाचार्य-चरणपराग-प्रभावाधिगत-सर्वसिद्धेः
श्रीपीताम्बरसुतस्य पुरुषोत्तमस्य कृतौ षष्ठः
आविर्भावतिरोभाववादः सम्पूर्णः

# ॥ प्रमाकरणस्वरूपनिरूपको कल्लोलः ॥

( 'प्रस्थानरत्नाकर' ग्रन्थान्तर्गत )

## ❋ करणकारणसामान्यस्वरूपनिरूपकः आद्यः तरङ्गः ❋

इदानीं करणं तस्याः वक्तुं करणमुच्यते॥[टि.१]

तत्र तावद् "व्यापारवद् असाधारणं कारणं करणम्". कारणत्वञ्च आविर्भावकशक्त्याधारत्वम्. उपादानस्थं कार्यं या व्यवहारगोचरं करोति सा शक्तिः आविर्भाविका. आविर्भावश्च व्यवहारयोग्यत्वं, तिरोभावश्च तदयोग्यत्वम्. ते द्वे यद्यपि भगवतः शक्ती "आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः" ( ) इति "मयूराश्चित्रिता येन" ( ) इति च वाक्याद् आविर्भावयतीति 'आविर्भावः' इति अर्थात्, तथापि भगवता विभज्य तत्र-तत्र स्थापितइति तस्य-तस्य तत्तदाविर्भावकत्वात् तत्तच्छक्तित्वम् उच्यते. तथात्वञ्च एकादशस्कन्धे उक्तम् "अब्जयोनि"म् उपक्रम्य "विशिलष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वद्" ( भाग.पुरा.११।१२।२० ) इति कथनात्. एवञ्च व्यवहारे यत्र यदाविर्भाविका शक्तिः तत् तस्य कारणं, यस्य च यतो व्यवहारयोग्यत्वं तत् तस्य कार्यम्. इदञ्च यथा तथा आविर्भावतिरोभाववादे प्रपञ्चितम् अस्माभिः. एतेनैव कुलालपितुरपि न कारणता इति सिद्धं, फलोपधानाभावात्.

यत्तु "अनन्यथासिद्ध-नियतपूर्ववर्तित्वं कारणत्वम्" आहुः[टि.२] तत् न, पूर्ववर्तित्वस्य कार्यसापेक्षत्वात् कार्यस्य च नियतपश्चाद्भावित्वाद् अन्योन्याश्रयग्रासाद्. अनन्यथासिद्धत्वस्य अन्यथासिद्धभिन्नत्वेन, अन्यथासिद्धेः च अन्यत्र गृहीतकारणताकत्वरूपत्वेन, तत्रापि अस्यैव कारणलक्षणस्य वक्तव्यत्वाद् आत्माश्रयापत्तेश्च. नापि 'कारणं-कारणम्' इति अनुगताकार-

१."विचारयितुमुद्यमः" इत्यस्मिन् स्थाने "वक्तुं करणमुच्यते" इति अ आशोधनिका. तेन प्रमायाः करणं वक्तुं करणसामान्यस्वरूपम् उच्यते इति अर्थः (श्या). २.नैयायिकाः (क).

प्रतीति-साक्षिक-जाति-विशेषः तद्, अभावेऽपि तस्य अङ्गीकारेण जातेरेव अशक्यवचनत्वाद्. अखण्डोपाधित्वन्तु अगतिकगतिः. नापि कार्यानुकृतान्वयव्य-तिरेकित्वं तत्, मूलकारणे आकाशादो च अव्याप्तेः. तत्तन्मते तस्य-तस्य नित्यविभुत्वेन कालतः देशतः च अव्यतिरेकात्. नच *यत् कारणत्वेन विद्वद्भिः व्यवह्रियते तद् आदाय लक्षणसङ्गतिः* इति वाच्यं, तथापि उक्तदोषानपायात्. तस्माद् उक्तमेव कारणलक्षणम्.

कारणे (१)उपादानापरपर्याय-समवायि-(२)निमित्त-भेदात् द्वैविध्यम् :

तच्च कारणं द्विविधं : (१)समवायि- (२)निमित्त-भेदात्.

(१)तत्र तादात्म्यसम्बन्धेन यदाश्रयं कार्यं भवति तत् समवायिकारणम्. समवायश्च तादात्म्यस्यैव नामान्तरम्.

**वैशेषिकास्तु** *अयुतसिद्धानाम् आधाराधेयभूतानाम् 'इह' प्रत्ययहेतुः सम्बन्धः समवायः. यथा "इह तन्तुषु पटः" "इह पटे शुक्लत्वम्" "इह गवि गोत्वम्" इति कार्य-कारणयोः गुण-गुणिनोः सामान्य-विशेषयोः[टि.१] सच सर्वेषाम् एको नित्यो व्यापकः च* इति **आहुः**.

तद् **अन्ये** ❃ **न क्षमन्ते**—

तत्र **पार्थसारथिमिश्राः** *"इयं गौः" इति प्रत्ययात् "इह गोत्वम् अस्ति" इति प्रत्ययाभावात् च न पूर्वोक्तलक्षणः समवायः किन्तु येन सम्बन्धेन आधेयम् आधारे स्वानुरूपां बुद्धिम् आधत्ते, स्वाकारेण बोधयति इति यावत्, स सम्बन्धः समवायः* इति **आहुः**.

तत् चिन्त्यं, गुण-गुणिनोः क्रिया-क्रियावतोः यः सम्बन्धः तस्य असमवायत्वापत्तेः, गुण-क्रियाभ्यां स्वाकारेण गुण-क्रिया-वतोः अबोधनात्[टि.२].

---

१. जातिव्यक्त्योः इति अर्थः[अ आ]. २. तथाच विकल्पद्वयेऽपि अव्याप्तिदोषाद् व्यापकत्वैकत्वप्रतिज्ञाभङ्गः इति अर्थः[अ आ].

अथ "अयुतसिद्धयोः यः सम्बन्धः स समवायः, अयुतसिद्धौ च तौ ययोः द्वयोः अनश्यद् एकम् अपराश्रितमेव अवतिष्ठते" इति, तदपि जघन्यं, तथा सति प्रलये जातिस्थितिः काले वक्तुम् अशक्या स्यात्, कालसमवेत-बुद्ध्यापादकत्वात्. नच *तत्र जातिः स्वरूपेण कालिकेन वा सम्बन्धेन तिष्ठति* इति वाच्यं, मानाभावाद्[टि.१] ❀ आहुः[टि.२].

**श्रीहर्षमिश्रास्तु** *अपराश्रितत्वं नाम अपरसम्बन्धित्वम्. तत्र को असौ सम्बन्धः, संयोगः समवायो वा? न आद्यः, समवायापलापप्रसङ्गात्. न द्वितीयो, अपराश्रितत्वस्य समवायघटितत्वेन समवायिनिरूपणे आत्माश्रय[टि.३] प्रसङ्गाद्* आहुः.

वस्तुतस्तु कार्यमात्रस्य प्रलये नाशं वदद्भिः वैशेषिकैः तादृश-गुण-क्रिया-प्रतियोगिकस्य तादृश-व्यक्त्यनुयोगिकस्य च समवायस्य प्रतियोग्यादिनाशात् प्रमातृणां बाह्यकरणनाशात् च प्रतीत्यभावेन कालिकादिसम्बन्धेन कालादौ सत्तामपि उपपादयितुम् अशक्नुवद्भिः स्वमुखेनैव प्रतिज्ञा भज्यते[टि.४] इति ज्ञेयम्.

**ब्रह्मसूत्रानुसारिणस्तु** *यथा अयुतसिद्धयोः आधेयाधारयोः विशेषणविशेष्यभावोपपत्तये समवायो अङ्गीक्रियते तथा समवायस्यापि आधेयत्वेन विशेषणत्वात् तदर्थं सम्बन्धान्तरस्य समवायान्तरस्य वा अपेक्षायां तदनवस्थापत्तिः नित्यत्वहानिः अनित्यता[टि.५] च स्यात्. अनपेक्षायां समवायस्य असम्बद्धत्वप्रसङ्गः तथा सति असम्बद्धः कथं सम्बन्धिनौ सम्बन्धयेत्! स्वतएव स्वस्थितिनियमने तेनैव न्यायेन आधेयान्तरस्यापि स्थितिसिद्धौ समवायस्यैव असिद्धिः. नच *तस्य सम्बन्धत्वात् स्वस्थितिनियामकत्वं सम्बन्धिनान्तु न तथा इत्यतो न दोषः* इति वाच्यं, संयोगस्यापि सम्बन्धत्वेन एतत्साम्यात् तस्यापि

---

१. तथाच अस्मिन् विकल्पे नित्यत्वप्रतिज्ञायाः असिद्धिः इति अर्थः (अ). २. के एवम् आहु; इति कर्तृस्पष्टता न भवति (ग्या). ३. तथाच अनिर्वाच्यत्वाद् असिद्धिः इति अर्थः (अ आ). ४. तथाच वदद्व्याघातात् नित्यत्वप्रतिज्ञाभङ्गः इति अर्थः (अ आ). ५. तथाच असिद्धिः साधारोत्पत्तिनाशकृतम् उत्पत्तिशालित्वं नाशशालित्वं च इति अर्थः (अ आ).

असमवेतत्वापत्तेः. नच * तस्य गुणत्वात् तत्र अस्ति सम्बन्धान्तराकाङ्क्षा * इति वाच्यं, गुणपरिभाषायाः त्वत्तन्त्रमात्रशरणत्वेन इतरेषाम् अनादरणीयत्वाद् * इति आहुः.

अत्रैव अन्येतु * "अयुतसिद्धयोः सम्बन्धः समवायः" इति वदता अयुतसिद्धत्वमेव पूर्वं साधनीयं, तत्तु कार्याभावे निरूपयितुमेव अशक्यम्, असत्कार्यवादे असतः कार्यस्य पश्चात् सत्ताङ्गीकारात्. तथा सति अपृथक्सिद्धत्वरूपस्य अयुतसिद्धत्वस्यैव पूर्वम् असिद्ध्या तदुपपाद्यस्य समवायस्यापि असिद्धिः. तस्य पूर्वम् उपगमे असत्कार्यवादभङ्गप्रसङ्गः. अथ उत्पत्तिरेव समवायः इति चेत्, तर्हि उत्पत्तेः अनित्यत्वात् समवायनित्यत्वहानिः, नित्यत्वेच कार्यनित्यत्वप्रसङ्गात् कारणव्यापारानर्थक्यम्. तस्मात् तादात्म्यलक्षण-एव कार्यकारणयोः सम्बन्धो, न समवायः * इति आहुः.

यत्तु "गुणक्रियादिविशिष्टबुद्धिः [टि.१] विशेषणविशेष्यसम्बन्धवि-षया, विशिष्टबुद्धित्वाद् दण्डपुरुषविशिष्टबुद्धिवद्" इति अनुमानेन संयोगादिबा-धात्, समवायं साधयन्ति, तदपि एतेनैव परास्तं, सिद्धसाधनत्वाद् अर्थान्तरत्वात् च. नच लाघवबलात् तत्सिद्धिः, पदार्थान्तरत्वेन प्रतिपाद्यमानस्य तस्यैव गुरुत्वात् प्रतिपत्तिसौकर्याभावात् च. अतो न समवायः तादात्म्यातिरिक्तः.

तादात्म्यञ्च भेदसहिष्णुरभेदएव. भेदसहिष्णुताच "बहुस्यां प्रजायेय" (छान्दो.उप.६।२।३-तैत्ति.उप.२।६) इति इच्छायां तद्व्यापारभूत-शक्ति-विभागेनेति न अत्र [टि.२] पूर्वोक्त-दोष-सञ्चारः, श्रुतिशरणत्वात् कल्पनायाः.

यद्वा "यत्र येन यतो यस्य यस्मै यद् यद् यथा यदा स्यादिदं भगवान् साक्षात् प्रधानपुरुषेश्वरः" (भाग.पुरा.१०।८५।४) इति दशमस्कन्धीयवाक्ये 'यथा' पदोक्तप्रकारमध्ये तस्यापि निवेशयितुं शक्यत्वात्, सत्कार्यवादे कार्यस्य प्रलयेऽपि सत्त्वेन सम्बन्धिद्वयसत्त्वात् च नित्यसम्बन्धरूपस्य समवायस्य

१. 'आदि'पदेन सामान्यस्यापि संग्रहः [क]. २. सत्कार्यवादाङ्गीकारेऽपि कारणेन कार्यस्य व्यवहारयोग्यतासम्पादनात् न तद्व्यापारानर्थक्यमिति अतिरेकाभावात् च न गौरवम् इति अर्थः [अ].

अतिरिक्तत्वाङ्गीकारेऽपि अदोषः [टि.१]. नच सूत्र( ब्र.सू.२।२।१२-१३ )विरोधः, तत्र वैशेषिकादिप्रतिपन्नस्यैव दूषणेन अविरोधात्.

एवञ्च अस्मिन् मते रूपादीन् प्रति न घटादिद्रव्यस्य कारणता, प्रमाणाभावात् किन्तु समानकालीनत्वमेव दृष्टानुरोधाद् बोध्यम्.

यत्तु *पूर्ववर्तित्वं कारणलक्षणं स्वीकृत्य रूपादीन् प्रति द्रव्यस्य कारणत्वाय प्रथमे क्षणे घटादेः निर्गुणत्वं स्वीकुर्वन्ति*, तद् असङ्गतम्.

तथाहि : प्रथमे क्षणे किं कपालादिगुणाः (१)नश्यन्ति उत (२)तिष्ठन्ति ?

(१)न आद्यः, कारणगुणानां नष्टत्वे कार्यगुणानारम्भापत्तेः, क्लृप्त-पाकादिरूप-नाशक-सामग्र्यभावे तन्नाशस्यापि अशक्यवचनत्वात् , पीततन्तुभिः श्वेतपटापत्तेः च पीतस्यैव भवने नियामकाभावात्. नच *अदृष्टमेव तथा इति वाच्यं, तेनैव निर्वाहे कारणरूपस्य कारणताभङ्गात् , नीरूपादपि सरूपोत्पत्त्यापत्तेः च.

(२)न द्वितीयः, सत्सु तेषु कार्यगतगुणानारम्भे हेत्वभावाद् इति दिक्. प्रथमे क्षणे परमसूक्ष्मो घटः उत्पद्यते इत्यपि असङ्गतम्.

अत्र **सांख्याः** *प्रथमक्षणे घटः, (१)परमाणुः वा, (२)महान् वा, (३)उभयविलक्षणो वा ? न आद्यः, निरवयवत्वापत्तेः. न द्वितीयो, गुण-गुणिनोः एककालोत्पत्तिप्रसङ्गात् , ''परमसूक्ष्मो घटः'' इति प्रतिज्ञाविरोधात् च; अनेककपालेषु समेवतो घटः परमसूक्ष्मः इति अहृदयंगमश्च. न तृतीयो, अप्रसिद्धेः. नच *गुणगुणिनोः जन्यजनकत्वानुरोधेन एवं कल्पना* इति वाच्यं, समानकालोत्पत्तिवादिनं प्रति जन्यजनकभावस्य वक्तुम् अशक्यत्वात्.

१. ''समवायाभ्युपगमाच्च साम्यादनवस्थितेः ( ब्र.सू.२।२।१३ ) इति सूत्रविरोधः. अत्र ''उभयथापि न कर्मातस्तदभावः'' ( ब्र.सू.२।२।१२ ) इति पूर्वसूत्रात् 'तदभावः' इति अनुवर्तते. सच 'च'कारान्तेन सम्बध्यते [आ].

नच * समानसामग्रीकत्वेन कार्यकारणयोः अभेदापत्तिः * इति वाच्यं, तन्तुरूपादेः पटाजनकतया रूपजनकत्वेन सामग्रीभेदात्. नच *एतस्मिन् मते किं समवायिकारणम्! * इति वाच्यं, पटएव. नच *कारणत्वाभावे कथं समवायिकारणत्वम् * इति वाच्यं, स्याद् एवं, यदि समवायिकारणत्वं कारणताविशेषः स्यात्. नच एवं किन्तु कार्यसमवायित्वमेव * इति आहुः.

तथाच एतन्मते कारणैकविध्यमेव, समवायश्च स्वरूपसम्बन्धविशेषएव, कार्यञ्च अवस्थाविशेषएव इति.

**सिद्धान्ते**तु पूर्वोक्तेच्छया लोकेऽपि कारणत्वं समवायिनः निर्बाधम्, आविर्भावकशक्त्याधारत्वस्य कारणलक्षणस्य तत्रापि अन्वयव्यतिरेकसिद्धत्वात्, पुत्रादौ जन्यत्वस्य शास्त्रसिद्धत्वात् च इति. उपादानन्तु समवायिनएव अवस्थाविशेषः, परिच्छिन्नस्य कर्तृक्रियया व्याप्तस्यैव मृत्पिण्डसूत्रादिरूपस्य पृथिव्यंशस्यैव घटपटाद्युपादानत्वदर्शनात्. अन्यथा पृथिवीत्वाविशेषात् पिण्डादिरूपताभावेऽपि घटादिः उत्पद्येत. अतएव[टि.१] भगवान् अविकृतएव जगतः एकांशेन समवायी. सएव पुनः, क्वचित् कालरूपं क्वचित् प्रकृतिरूपं, स्वांशम् उपादानं करोति इति "प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयं त्वहम्" (भाग.पुरा.११।२४।१९) इति, "गुणव्यतिकराकारो[टि.२] निर्विशेषोऽप्रतिष्ठितः पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत्, विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया, ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्त्तिना" (भाग.पुरा.३।१०।११-१२) इत्यादिवाक्याद् अवसीयते. तच्च लोकेऽपि एकस्य एकमेव नतु अनेकम्. अन्यथा कारणगुणानां कार्यगुणोत्पादकत्वनियमात् कार्यस्य अनेकत्वापत्तेः. शरीरादिष्वपि भूतसमुदायस्य एकस्यैव हेतुत्वं जन्यद्रव्यत्वावच्छिन्नं प्रति तद्-योग्यावयव-स्थूलांशत्वेनैव अनुगता कारणता, नतु स्पर्शवत्त्वेन. आकाशे व्यभिचारात् आकाशाद् वायूत्पत्तेः श्रौतत्वात्. नच निमित्तत्वं, पुराणोपबृंहणविरोधात्. अतएव न आरम्भवादोऽपि. इदञ्च यथा तथा प्रपञ्चभेदवादे व्युत्पादितम् अस्माभिः.

---

१. परिच्छिन्नत्वाद्यभावादेव इति अर्थः (अ आ). २. परस्परं मेलनमेव आकारो यस्य (अ).

तत्र क.उपादानकारणस्य द्वैविध्यम् :

उपादानञ्च द्विविधं : (क)परिणाम्युपादानं (का)विवर्तोपादानं च. तत्र आद्यं (क)स्वसमानसत्ताक-कार्याकारेण आविर्भवति. परिणामश्च उपादानसमसत्ताको अन्यथाभावः.

सो द्विविधो : (क/१)अविकृतो (क/२)विकृतः च. तत्र आद्यो (क/१)यथा सुवर्णस्य कटककुण्डलादिः. द्वितीयो (क/२)यथा मृदो [टि.१] घटशरावोदञ्चनादिः, यथा च मनसो( ? बुद्धेः ! ) वृत्तिरूपं ज्ञानम्.

(का)उपादानविषमसत्ताको अन्यथाभावो विवर्तः. सतु एकविधएव यथा रजतादिरूपेण बुद्धेः ख्यानम्. [टि.२]

ख.तत्र निमित्तकारणस्य स्वरूपम् :

(ख)समवायिकारणभिन्नं यत् कारणं तत् निमित्तकारणं; यथा, घटस्य कुलाल-चक्र-चीवर-दण्डादिकं, तुरीवेमादिकं पटस्य, विषयेन्द्रियव्यापाराः ज्ञानस्य.

पुनरपि प्रकारान्तरेण कारणताद्वैविध्यनिरूपणम् :

कारणताच द्विविधा : (१)एका दण्डचक्रादिन्यायेन सामग्रीकारणता

---

१. पाकसम्वन्धतया विकारित्वम् इति [आ] अथवा दुग्धद्राक्षादेः दधिमद्यादिभावः [श्या]. २. इदम् अत्र अवधेयं भवति : निश्चयाकारिकायाः हि बुद्धिवृत्तेः यथा स्वपरिणाम्युपादानभूतबुद्धिसमसत्ताकत्वं तथैव भ्रमाकारिकायामपि वृत्तौ सम्भवति नवा? न चेद् 'बुद्धिवृत्तित्वो'क्तिः निरर्थिका. सम्भवति चेत्, तदा बुद्धेः परिणाम्युपादानत्वं व्यामोहकमायायाः च निमित्तत्वम्; उत, तादृङ्मायायाः परिणाम्युपादानत्वं बुद्धेस्तु मायिकारोपविवर्तोपादनमात्रत्वमेव? आद्ये पारमार्थिकबुद्धिपरिणामत्वेन भ्रमवृत्तेः तद्विषमसत्ताकान्यथाभावानुपपत्तिः. द्वितीये बुद्धिरूपविवर्तोपादाने आरोपितायाः मायिकपरिणामरूपायाः च भ्रमवृत्तेः, व्यामोहकमायायाअपि पारमार्थिकत्वेनैव, तथाभावानुपपत्तिः तदवस्थैव. शुक्ति-तद्देश-तत्कालेषु तदन्यरजतावभासिकायाः बुद्धिवृत्तेः बाधज्ञानोत्तरकालिकं शुक्त्यादिनिरूपितप्रातिभासिकासत्त्वमपि न विषमसत्तेति वक्तुं शक्यं किन्तु प्रतीयमानारोपस्य बाधज्ञानोत्तरं प्रतिभासिकासत्त्वमेव तदिति न तेनापि विषमसत्ताकत्वलक्षणसङ्गतिः. सर्वथा ह्यसतः प्रतिभासासम्भवेऽपि क्वचिद् विद्यमानस्य अस्वीयदेशकालोपाधिकन्तु प्रातिभासिकम् असत्त्वं स्वीकरणीयमेव. तस्मात् परमतप्रसिद्धपरिभाषया परः प्रबोधनीयः इति न्यायानुसरणमेव अत्र ग्रन्थकृच्चिकीर्षितं प्रतिभाति. तत्र 'विषमसत्ताकत्त्वां'शः परमतपरिभाषा, 'रजतादिरूपेण बुद्धेः ख्यानम्' इतितु स्वमतम् इति विवेकः [श्या].

(२)तृणारणिमणिन्यायेन प्रत्येकपर्यवसायिनी द्वितीया.

तन्तुद्वयसंयोगादिकञ्च सामग्र्यामेव प्रविशतीति न असमवायित्वेन अतिरिक्ता कारणता तस्य कल्पनीया, प्रयोजनाभावात्. तस्माद् द्विविधमेव कारणम्.

**कारणताग्राहकयोः अन्वय-व्यतिरेकयोः निरूपणम् :**

कारणताग्राहकौच अन्वयव्यतिरेकौ; तौच द्विविधौ, तत्र —

(१)स्वस्वव्याप्येतर-यावत्कारण-सत्त्वे — यत्सत्त्वे
अवश्यं यत्सत्त्वम् अन्वयो.

(२)यदभावे अवश्यं यदभावो व्यतिरेकः.

इति

(१)एका विधा कारणतामात्रग्रहणे उपयुज्यते. अन्वयनम् अन्वयः, "एरच्" ( पाणि.सू.३।३।५६ ) इत्यनेन भावे 'अच्', कार्येण सह तदवयवादिरूपेण अवस्थानम्.

(२)विशेषण अतिरेचनं व्यतिरेकः, कार्यातिरेकेण अवस्थानम् इति द्वितीया विधा.

इमौच उपादानत्वग्रहणे कृत्स्नप्रसक्तिवारणे च यथायथम् उपयुज्येते अतो न शङ्कालेशः.

**करणत्वौपयिकव्यापारस्वरूपम् :**

कारणेन कार्यजनने यद् अन्तरा अवश्यम् उपयुज्यते स व्यापारो; यथा, तन्तुद्वयसंयोगः तुरीतन्तुसंयोगः च तन्तुतुर्योः. यथाच विषयेन्द्रियसंयोगः इन्द्रियाणाम्. यथा द्रव्येण प्रीता देवता, देवताप्रीतिः वा यागस्य. नतु तज्जन्यत्वे सति तज्जन्यजनकः, समवायादौ व्यभिचारात् [टि.१]. असाधारणत्वञ्च

१. समवायस्य नित्यत्वेन जन्यत्वाभावात्[आ].

अत्र कार्योत्पादनकाले तदनुकूल-व्यापारातिरिक्त-व्यापार-रहितत्वं बोध्यम्. ईश्वरेच्छादीनाम् इतरव्यापार-राहित्याभावात् न तत्र अतिव्याप्तिः. विषयस्य समवायिनः च अकरणत्वविवक्षायान्तु 'तद्भिन्नत्वं' विशेषणीयम्.

**केचित्तु** *कार्यत्वावच्छिन्न-कार्यतानिरूपितकारणता-शून्यत्वम् असाधारणकारणत्वम्* आहुः.

**अन्येतु** *कार्यत्वानवच्छिन्न-कार्यतानिरूपित-कारणताश्रयत्वं तद्* इति आहुः.

तत्र न अस्माकम् आग्रहः. इति व्यवसितं करणम्.

**इति प्रस्थानरत्नाकरे प्रमाणपरिच्छेदे प्रमाकरणस्वरूपनिरूपके कल्लोले करणकारणसामान्यस्वरूपनिरूपकः**

आद्यः तरङ्गः समाप्तः

# ॥ उपक्रमः ॥

प्रारम्भिक वक्तव्य

**गोस्वामी श्रीश्याम मनोहर**

*

द वाल्लभ थिअरी ऑफ कॉज़-एंड्-इफेक्ट्
रिलेशनशिप्

**श्रीवशिष्ठनारायण झा**

*

# प्रारम्भिक वक्तव्य

गोस्वामी श्रीश्याम मनोहर

**यन्मूर्ध्नि मे श्रुतिशिरस्सु च भाति यस्मिन् अस्मन्मनोरथपथः सकलः समेति।**
**स्तोष्यामि नः कुलधनं कुलदैवतं तत्-पादारविन्दमरविन्दविलोचनस्य॥**

प्रस्थानरत्नाकरपर आधारित विद्वत्परिचर्चामें नवागन्तुक और जिनका पुनरागमन हुवा है, उन सभी विद्यातपस्वी महानुभावोंका हार्दिक स्वागत न केवल हर्षका विषय है अपितु परम सौभाग्यका विषय है. और केवल सौभाग्यका ही नहीं परन्तु मुझे ऐसा लगता है कि हमारेलिये यह कृतकृत्यताका विषय है.

यह विद्वज्जनसमागम जिस तरहका आयोजित हुवा है उसमें विभिन्न विचारदृष्टिओंके बीच हठात् किसी तरहके संवादको स्थापित करना या कोई दुराग्रहपूर्वक विवाद ही किया जाय ऐसा कोई उद्देश्य न है और न तो होना चाहिये. जहां संवाद हो वहां हम संवाद खोजें. जहां विवाद हो वहां विवादको समझें कि दो दृष्टिओंकी बीचमें विवाद क्या है. प्राचीनकालमें शास्त्रचर्चामें प्रायः पूर्वपक्षका अनुवाद भलीभांति हुवा या नहीं हुवा इसे चर्चाकी अधिकारिताका निकष माना जाता था. अतः जितना उत्तरपक्षका शास्त्रचर्चामें महत्त्व होता है उतना ही पूर्वपक्षका भी महत्त्व हमें समझना चाहिये. क्योंकि जो अधिकरणविचार होता है **''विषयो विशयश्चैव पूर्वपक्षस् तथोत्तरम्''** उसमें इन दोनोंको शास्त्रचर्चाका अङ्ग माना गया है.

मैं यह समझता हुं कि न तो संवादकेलिये आग्रहिल होना चाहिये और न विवादके बारेमें किसी प्रकारकी भीरुता बरतनी चाहिये.

श्रीमद्भागवतमें बहुत सुन्दर निरूपण मिलता है : "**यच्छक्तयो वदतां वादिनां वै विवाद-संवाद-भुवो भवन्ति**". तो हमतो यह मानते हैं कि यदि विवाद-संवाद दोनों हो रहे हैं तो वह किसी ब्राह्मिक शक्तिके अनुगुण होनेका हमारेमें अनुभाव ही है. मैं 'अनुभव' नहीं कह रहा हुं 'अनुभाव' कह रहा हुं : अनुभावयतीति अनुभाव:. और वैसा अनुभाव हममें प्रकट होता है क्योंकि ब्रह्म अनन्तगुणगणपरिपूर्ण है. जो गुण किसी एक अधिकारीको समझमें आते हैं अथवा अनुभूतिके गोचर होते हैं तो वह गुण किसी दूसरे अधिकारीकी समझमें आयें ही या अनुभूत हों ही यह जरूरी नहीं. "**यो वा अनन्तस्य गुणा: अनन्ता:**". अनन्तगुणगणपरिपूर्ण होनेके कारण तत्तदधिकारिओंको "**मल्लानाम् अशनिर्, नृणां नरवर:, स्त्रीणां स्मरो मूर्तिमान्**" वहां किसी अन्यसन्दर्भमें कही गयी बात है. मगर दृष्टिभेदके सन्दर्भमें भी यदि हम इसे देखें तो महाप्रभु वल्लभाचार्य एक बहुत मज़ेदार बात कहते हैं : "**सर्ववादानवसरं नानावादानुरोधि तद् अनन्तमूर्ति तद् ब्रह्म** ह्यविभक्तं विभक्तिमत्". ब्रह्म सर्ववादानवसर भी है और नानावादानुरोधि भी है. धर्मनिरपेक्षतावादियोंने कुछ और ही तरहसे अनर्थ कर दिया है कि "**एकं सद् विप्रा: बहुधा वदन्ति तस्य धीरा: परिजानन्ति योनिं**"इस श्रुतिका! वैसे तो यहां 'विप्रा:' शब्द आया है. लेकिन जिस तरह निन्दाके अर्थमें इस वचनका प्रयोग होता है उसे सुनकर लगता है कि 'विप्र' शब्दकी मूर्खमें लक्षणा है. और ऐसा प्रतीत होने लगता है कि "एकं सत् मूर्खा: बहुधा वदन्ति". मगर शास्त्रवचन ऐसा नहीं है. मूर्खा: न किन्तु विप्राएव. क्योंकि "**वेदाभ्यासाद् भवेद् विप्र:**". तो विप्रत्व वहां है जहां ब्रह्मके अनन्तगुणगणोंका अभ्यास है. और जो ब्रह्मके गुणगणोंका वर्णन करते हैं; उन्हें अधिगत करते हैं उनमें यदि विवाद हो तो वह भी ब्रह्मकी शक्तिका ही कोई अनुभाव है और संवाद हो तो भी किसी ब्रह्मकी शक्तिका ही अनुभाव है. मैं इस बातको मानकर चलता हुं. अत: इस विद्वद्गोष्ठीसे भी मेरी यही अपेक्षा है. अत: ऐसी विद्वद्गोष्ठीका स्वागत करना मेरेलिये कृतकृत्यताकी अनुभूति है.

दर्शनशास्त्र, वैसे तो परम्परया अपने यहां षड्दर्शन कहे जाते हैं, मगर मुझे ऐसा प्रतीत होता है कि दर्शनकी मुख्य प्रवृत्ति या सोपान तीन तरहसे प्रकट होते हैं:

१. अनुभूति.
२. व्याख्या.
३. उत्प्रेक्षा.

अनुभूति दो तरहकी हो सकती हैं : १. लौकिक अथवा २. अलौकिक. लौकिक अनुभूतिमें हम लौकिक प्रमाणोंकी गणना कर सकते हैं. अलौकिक अनुभूति तत्तत् शास्त्रोंसे प्राप्त होती है ऐसा हम समझ सकते हैं. जैसे समाधिजन्य अनुभूति, तत्तद्देवसाक्षात्कारजन्य अनुभूति.

इसी तरह मुझे लगता है कि व्याख्याके भी दो प्रकार होते हैं :

१. पदव्याख्या.
२. पदार्थव्याख्या.

'पदव्याख्या'का अर्थ है : पद, वाक्य, प्रकरण जो भी प्राप्त हों उनकी व्याख्याके रूपमें प्रकट होता दर्शन. और पदार्थव्याख्याके विषयमें मेरी समझ ऐसी है कि दर्शनको लक्षणप्रधान बनाना जिसका आदर्श उदाहरण नव्यन्याय है. वैशेषिक दर्शन और अन्य भी दर्शनसम्प्रदाय लक्षणप्रधान हो सकते हैं. तो ये पदार्थव्याख्याके रूपमें है. पदव्याख्याके जो भी कुछ उपाय हैं यथा "**उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्**" इत्यादि पूर्वमीमांसासिद्ध तन्मूलक दर्शन भी होते हैं.

तृतीय सोपान उत्प्रेक्षाका है. इस विषयमें मुझे ऐसा लगता है कि उत्प्रेक्षा जैसे भगवत्पाद श्रीशङ्कराचार्य कहते हैं कि प्रमाणमूलकतर्क

अर्थात् वेदान्तमें श्रौततर्क ग्राह्य है अन्यथा "**निरङ्कुशत्वात् ते तुण्डस्य नतु युक्त्युपेतं ब्रवीषि**"कहा! तो निरागम-निरङ्कुश तर्क या उत्प्रेक्षा को वेदान्तमें प्रमाण नहीं माना गया . तो कुछ प्रमाणमूलक उत्प्रेक्षाएं होती हैं और उन उत्प्रेक्षाओंके आधारपर दर्शनका विचारक्रम आगे बढ़ता है. इसी तरहसे उत्प्रेक्षाका एक और प्रकार है : किसी प्रयोग या अन्वीक्षण जिसे आधुनिक परिभाषामें हम *एक्स्पेरिमेन्ट्* या *ऑब्जर्वेशन्* कहते हैं उनकेलिये की जाती उत्प्रेक्षा. तो सारा वैज्ञानिक दर्शन उत्प्रेक्षामूलक है. प्रयोग और अन्वीक्षण केलिये की जाती उत्प्रेक्षाओंको प्रयोगकालमें और अन्वीक्षणकालमें प्रमाण माना जाता है और प्रयोग या अन्वीक्षण से यदि अन्यथा सिद्ध हो जाय तो उनको अप्रमाण मानकर नई उत्प्रेक्षाएं की जाती हैं. इस तरहके दार्शनिक चिन्तनका भी एक प्रकार सम्भव है. तो दर्शनकी ये षड्विधाएं तो मुझे समझमें आती हैं.

इन विधाओंमें मैं यह कहना चाहूंगा कि महाप्रभु श्रीवल्लभाचार्यका दर्शन पदव्याख्यारूप दर्शन है. क्योंकि जैसे भगवत्पाद शङ्कराचार्य कहते हैं ऐसे ही महाप्रभु भी कहते हैं कि "**प्रत्यक्षादृष्टविषये पदार्थाः श्रुतिगोचराः परस्परं विरुद्धास्ते नैकशेषं भवन्ति हि, उभयोः वैदिकत्वेन कः स्याद् अत्र नियामकः**". अतः "**ये धातुशब्दाः यत्र अर्थे उपदेशे प्रकीर्तिताः तथैव अर्थो वेदराशेः कर्तव्यो नान्यथा क्वचित्**". तो मूलतः तो महाप्रभु श्रीवल्लभाचार्यका दर्शन पदव्याख्यात्मक दर्शन है. मगर सारी बातें पदव्याख्यासे नहीं आ सकती हैं. जैसे ऋषिओंको समाधिमें हुवा शब्दसाक्षात्कार श्रौतपद होते हैं. जैसे भागवत "**व्यासः समाधिना प्राहः**" है. तो इस प्रथम सोपानके बाद द्वितीय सोपान व्याख्याका हुवा. भगवान् बादरायणने जो ब्रह्मसूत्र लिखे हैं वे उपनिषदोंकी व्याख्याकेलिये लिखे हैं. और इस तरह उपनिषदोंकी सूत्रव्याख्याके बाद एक सोपान ऐसा आता है कि जहां प्रमाणमूलक कुछ उत्प्रेक्षायें करनी पड़ती हैं. उन उत्प्रेक्षाओंको हम 'श्रौती-उत्प्रेक्षा' कह सकते हैं. यह बात मैं यहां विशेषरूपसे प्रस्तुत करना चाहता हुं क्योंकि कई शब्द श्रुतिमें मिलते

हैं कई शब्द श्रुतिमें नहीं मिलते हैं मगर श्रौतवचनकी व्याख्याके हेतु कुछ उत्प्रेक्षाओंको अर्थापत्ति या अन्यथानुपपत्ति के रूपमें करनेकेलिये हमें बाधित होना पड़ता है. वे उत्प्रेक्षायें श्रौती उत्प्रेक्षा हैं. वे निरङ्कुश उत्प्रेक्षायें नहीं हैं. तो पूर्वोत्तरमीमांसाके दर्शन या अन्य भी जो जैन-बौद्धादि दर्शन हैं जहां पदव्याख्याके रूपमें चिन्तन हुवा है. उनमें भी ये सोपान आते ही हैं. कार्यकारणभावकी मीमांसामें इस विषयको भी हमें लक्ष्यमें रखना पड़ेगा.

वेदान्तके प्राय: सभी दर्शनसम्प्रदायोमें श्रौती उत्प्रेक्षाके बलपर किये गये विचार उपलब्ध होते ही हैं. इसके साथ-साथ एक बात और जो लक्ष्यमें रखने योग्य है वह यह है कि आजकल एक बड़ा बावेला मचाया जाता है कि अभीष्ट साधन-फलके अनुकूल प्रमाण-प्रमेयकी व्यवस्थाका चिन्तन हुवा है या प्रमाण-प्रमेयके आधार पर साधन-फलकी व्यवस्था सोची गई है. इसे अंग्रेजीमें *डिकोटॉमि* कहते हैं. इस प्रकारके विकल्प करके इनके स्वरूपका चिन्तन करना. मुझे लगता है कि इस तरहकी *डिकोटॉमि* बहुत सहायक नहीं होती है. क्योंकि कोई ऐसा सोचे कि मस्तकके नीचे कबन्ध रखा गया है या कबन्धके उपर मस्तक रखा गया है; इनमें क्या प्रमुख है. मस्तक उत्तमाङ्ग है यह बात तो ठीक है मगर कबन्धके साथ जुड़ा हुवा होनेपर ही मस्तक मस्तक होता है. अन्यथा तो मस्तक राहू हो जायेगा. तो इस तरहकी *डिकोटॉमि* पाश्चात्य चिन्तनमें अच्छी बात हो सकती है परन्तु भारतीय चिन्तनमें उसकी सफलताके विषयमें मुझे सन्देह है. इन सन्दर्भोको देखते हुवे कार्य-कारणमीमांसामें जो महत्त्वपूर्ण बात मैं आप लोगोंके दृष्टिपथपर लाना चाहता हुं वह यह कि भागवतमें साधनफलभावके निर्धारणमें बहुत सुन्दर वचन मिलते हैं. ''**मार्गास् त्रयो मया प्रोक्ता: नृणां श्रेयो विधित्सया, ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कर्हिचित्**''. यह तो ठीक है. मगर भागवतपुराण हमें एक बात और समझाता है : ''**निर्विण्णानां ज्ञानयोग: कर्मयोगस्तु कामिनां,**

**न निर्विण्णो नातिसक्तो भक्तियोगोऽस्य सिद्धिदः''**. तो साधन-फलके विचारमें जो विरक्त हैं वे ज्ञानके अर्थात् शुष्क चिन्तनके अधिकारी हैं, जो कामानुरक्त हैं वे अपनी कामकी पूर्ति अविहित साधन या निषिद्ध साधन से न करें पर शास्त्रविहित चिन्तनानुसार अपने कामकी पूर्ति करें. और ''**न निर्विण्णो नातिसक्तः भक्तियोगोऽस्य सिद्धिदः**''.

सारे साधन-फलभावकी अधिकारिताका एक निकष बताया है श्रीमद्भागवतने. तदनुसार, ज्ञानयोगसे विचार करनेपर यदि अधिकारीका विरक्त होना जरूरी है तो विरक्तिकेलिये तत्त्वकी हेयताका दर्शन भी कुछ-न-कुछ आवश्यक बनता है. और यदि कामानुरक्त होना अधिकारिताका निकष है तो कर्मयोगके अधिकारीकेलिये कुछ-न-कुछ तत्त्वकी उपादेयता भी जरूरी है. और जो अतिनिर्विण्ण नहीं है और अत्यासक्त नहीं हों उनकेलिये तो भक्तियोग सिद्धिप्रद हो सकता है. क्षमा करिये मैं वाल्लभदृष्टिके पूर्वाग्रहसे बोल रहा हुं. वह पूर्वाग्रह मेरेमें है. उससे मैं बाहर नहीं निकल सकता यह मेरी सीमा है. ज्ञानयोग ब्रह्मका स्वरूपानुविधायी है. कर्मयोग ब्रह्मकी केवल लीलाका अनुविधायी है. और भक्तियोग ब्रह्मके स्वरूप और लीला उभयानुविधायी है. तो इस भक्तियोगकेलिये जो आवश्यक कारण-कार्यव्यवस्था है वह हमारी कार्य-कारणव्यवस्था है. ज्ञानयोगकेलिये आवश्यक जो कार्यकारणव्यवस्था है वह हमारी कार्यकारणव्यवस्था नहीं है. इस बातपर मैं आप सभी महानुभावोंका ध्यान आकृष्ट करना चाहूंगा. न तो हेयदृष्टि और न अत्यन्त कामानुरक्तिवाली कामोपादेयताकी दृष्टि. महाप्रभु एक सुन्दर बात कहते हैं कि ''**विषयो भगवान् विषयता मायाजन्येति न तत्र आसक्तिः कर्तव्या**''—''**ब्रह्मरूपं जगद् ज्ञातव्यं ब्रह्म जगतो अतिरिच्यतइति न तत्र आसक्तिः कर्तव्या**''. विषयो भगवान् किन्तु आसक्तिः भगवत्येव कर्तव्या नतु विषये. तो जब हम इस तादात्म्यको समझ जायेंगे कि विषय भी भगवान् स्वयं बने हैं तब विषयमें हेयताकी बुद्धि रखे बिना वह विषय जिसके नाम-रूपका विस्तार है उसमें हमें आसक्त होना

है. तभी भक्तियोग सिद्धिप्रद होगा. यह महाप्रभु श्रीवल्लभाचार्यकी धारणा है. और तदनुविधायिनी कार्यकारणव्यवस्थामें यह बात समझमें आ सकती है कि केवल विवर्तवाद उपयोगी नहीं होगा. क्योंकि विवर्तवादमें जब तक कार्यकारणताविवर्तको तुच्छ न माना जाय अथवा सदसद्विलक्षण अनिर्वचनीय न माना जाय या हेय न माना जाय तब तक विवर्तवाद उपपन्न होगा नहीं. इसलिये आप देख सकते हैं कि जहां लीलाका वर्णन होता है वहां भी केवलाद्वैती मायाको खोजते हैं. और वाल्लभ वेदान्त जहां माया है वहां भी लीला खोजता है. क्योंकि माया भी भगवान्‌की सर्वभवनसामर्थ्यरूपा लीला है.

मुझे एक महानुभावकी बात याद आ रही है. उन्होंने कहा था कि कृष्णकी लीला कृष्णके स्वरूपमें स्वसमानाधिकरणात्यन्ताभावप्रतियोगी होनेसे मिथ्या है. तो लीलामें भी मिथ्यादृष्टि उनकी है. ये एक अच्छा विवाद है. होना चाहिये. मैं तो इस विवादमें भी भगवदनुभावको मानता हुं. इस विषयमें हमारा मत यह है कि स्वसमानाधिकरण-अत्यन्ताभावप्रतियोगिता भी भगवान्‌की एक लीला है. क्योंकि श्रुति कहती है : “**सत्यञ्चानृतञ्च सत्यम् अभवत्. यदिदं किञ्च तत् सत्यम् इति आचक्षते**”. तो “**सत्यञ्चानृतञ्च सत्यम् अभवत्**”. सत्य और अनृत यदि दोनों रूपोंमें यदि सत्य ही स्वयं प्रकट हुवा हो तो वह तो लीला ही है. महाप्रभु वल्लभाचार्यके अनुसार विद्या भगवान्‌की शक्ति है तो अविद्या भी भगवान्‌की ही शक्ति है. और योगनिद्रामें भगवान् जब पौढ़ते हैं तब अविद्याशक्तिको अपने साथ लेकर पौढ़ते हैं. और जागते हैं तब विद्याशक्तिके साथ जागते हैं. वो समष्टि है. हम ब्रह्मांश हैं अत: वह अविद्याशक्ति हममें अंशतया काम करती है. उस अविद्याके उपर हमारा वश नहीं है क्योंकि हमारे अन्दर ऐश्वर्य वीर्य यश श्री आदि भगवान्‌के गुण अंशरूपमें होते हैं. ब्रह्ममें ऐसा नहीं है. ब्रह्मका अपनी सभी शक्तियोंपर सम्पूर्ण अङ्कुश होता है. “**श्रिया पुष्ट्या गिरा कान्त्या**” जितनी भी शक्तियां

**गो. श्या. म. :** वह स्वरूपकोटि है. और कारणकोटि तथा कार्यकोटि सिसृक्षावशात् प्रकट हुवा भेद है.

**वि. प्र. मिश्र :** यथा अद्वैतवेदान्ते परमार्थसत्ता स्वीक्रियते तथैव स्वरूपविषये भवन्तो यत् कथयन्ति "मधुनि लिल्युः अशेषरसाः" यत्र कार्यकारणभावौ नैव स्थातुं शक्यते. इति कृत्वा तत्र स्वरूपसत्तायां... स्वरूपसत्ता परमार्थसत्तैव अद्वैतवेदान्तिनाम् ...

**गो. श्या. म. :** परन्तु कार्यकारणसत्ता अपारमार्थिकी न भवति एतावदेव आवयोः विवादः.

**वि. प्र. मिश्र :** श्रीमद्भिः पत्येकपर्याप्तिता स्वीक्रियते तर्हि यदि ब्रह्मणः सृष्टिः प्रजायते तर्हि ब्रह्मतु एकएव तर्हि सामग्रीकारणता कथं... प्रत्येकपर्याप्तिता यदि अन्यत् किमपि तृणारणिवह्निन्यायेन... यदि ब्रह्मणो व्यतिरिक्तं किमपि नास्ति तर्हि प्रत्येकर्याप्तितायाः वार्तैव का भवति? प्रत्येकपर्याप्तिता इति विविधेषु कारणेषु एकेन कारणेन अन्येन वा करणेन यदि प्रादुर्भूतिः जायते तर्हि ब्रह्म एकमेव तर्हि प्रत्येकपर्याप्तिता कथं सङ्गच्छते?

**गो. श्या. म. :** प्रत्येकर्याप्तिता वा भवतु सामग्रीकारणता वा भवतु तत् सृष्टिप्रादुर्भावस्यैव कथा. सृष्टौ प्रादुर्भूतायां हि सा कथा. सृष्टिप्रादुर्भावस्तु अन्यः. सृष्टौ किल प्रादुर्भावो अन्यः.

**वि. प्र. मिश्र :** यदा सृष्टिः न भवति तदा स्वरूपावस्था ब्रह्मणो वर्तते. तदा कार्यकारणवादोऽपि नैव अभ्युपगन्तव्यः.

**गो. श्या. म. :** यः कारणत्वेन अभ्युपगतं तद् ब्रह्म स्वरूपात्मना अवतिष्ठते. यच्च कार्यत्वेन प्रकटीभवति तदपि ब्रह्मस्वरूपात्मना अवतिष्ठते.

**वि. प्र. मिश्र :** कार्यता-कारणताच सृष्टिसापेक्षैव. इति कृत्वा यदा सृष्टि नासीत् तदा कार्यकारणभावोऽपि नैव स्वीकर्तव्यः.

**गो. श्या. म. :** केन स्वीकृतम्? तदा न स्वीकृतम्. स्वरूपे कार्यकारणभावः आविर्भवति.

**( ध्वनिमुद्रणदोषाच्छ्रवणानर्हता )**

वि. प्र. मिश्र : कथम् उच्यते प्रलयेऽपि कारणं भवति...

गो. श्या. म. : कार्यात्मना अभिमतं यद् वस्तु तत् स्वरूपात्मना अवितिष्ठते. कारणात्मना अभिमतं यद् वस्तु तत् स्वरूपात्मना अवतिष्ठते तदभिप्रायक: एष: प्रयोग:.

प्रह्लादाचार : मान्यै: झामहाभागै: स्वीये प्रबन्धे वल्लभमतनिरूपणावसरे वाल्लभा: वदन्ति नैयायिकानां कारणलक्षणे हि आत्माश्रय: तथा अन्योन्याश्रयदोषग्रस्तं भवति. तत्र वाक्यानि इमानि वर्तन्ते. "The definition of Kāraṇa as advanced by the Naiyāyikas is rejected because it involves interdependency and cercularity. The clause 'Pūrvavṛtti' in the definition "**अनन्यथासिद्धनियतपूर्ववृत्तिकारणम्**" requires the notion of effect. And the clause '**अनन्यथासिद्ध**' requires the notion of cause itself ...किन्तु तत्र प्रश्न: एवं भवति. अनन्यथासिद्ध-नियतपूर्ववृत्तिकारणं...

वी. एन्. झा : 'पूर्व'पदेन किं ?

प्रह्लादाचार : 'पूर्वं' नाम कार्यम्. "कार्यनियतपूर्ववृत्तिकारणम्"इति उच्यते. तत्र कार्यलक्षणं हि यदि कारणघटितं स्यात् तर्हि अन्योन्याश्रयो भवति. कारणलक्षणज्ञानार्थं कार्यलक्षणज्ञानम् अपेक्षते कार्यलक्षणज्ञानार्थं च कारणलक्षणज्ञानम् अपेक्षते. परन्तु नैयायिका: कार्यलक्षणम् अन्यदेव वदन्ति. नहि कार्यलक्षणे कारणत्वं अन्तर्गतं वर्तते.

रा. ताताचार्य : प्रागभावप्रतियोगित्वं कार्यत्वम्.

प्रह्लादाचार : तत्र वल्लभाचार्याणां मते प्रागभाव: स्वीकृतो न वा इति विचार: करणीय:.

वी. एन्. झा : नैव स्वीक्रियते.

प्रह्लादाचार : माऽस्तु. यतोहि कार्यं सर्वदा वर्तते. कार्यस्य प्रागभाव: इति नास्ति इति ते वदेयु:. परन्तु नैयायिकानां मते अयं

दोषो नास्ति. किञ्च यत् कारणलक्षणं प्रस्थानरत्नाकरे प्रदर्शितं वर्तते तत्र आत्माश्रयदोषो भाति मम. स कथं परिहरणीयः ? इति. यतोहि प्रस्थानरत्नाकरकाराणां मते कारणलक्षणं ''आविर्भावकशक्त्याधारत्वं''. And your explanation for that definition is "being the locus of the potentiality which causes maneifestation" कारणलक्षणे कारणत्वम् अन्तर्गतं वर्तते अत्र. ततश्च अत्र आत्माश्रयदोषस्य अवकाशो वर्तते. अतो न्यायमते कथं वा आत्माश्रयः, अस्मिन् मते कथं आत्माश्रयो नास्ति इति एकः प्रश्नः. अपरश्च ...

**वी. एन्. झा** : न्यायमते आत्माश्रयः वर्तते.

**प्रह्लादाचार** : कथम् ?

**वी. एन्. झा** : कार्यलक्षणपरिज्ञानं विना कारणलक्षणपरिज्ञानं न भवति.

**प्रह्लादाचार** : भवतु नाम.

**वी. एन्. झा** : अतो अन्योन्याश्रयो भवति.

**प्रह्लादाचार** : नहि. यतोहि कार्यं हि न कारणत्वघटितम् अस्ति. कार्यत्वम् अन्यदेव. कारणत्वम् अन्यदेव. कारणलक्षणशरीरे कार्यस्य प्रवेशे...

**वी. एन्. झा** : ''**अनन्यथासिद्धनियतपूर्ववृत्तित्वम्**'' इति लक्षणं नैयायिकैः स्वीक्रियते न वा ?

**प्रह्लादाचार** : एवम्.

**वी. एन्. झा** : तत्र 'पूर्व'पदस्य किं व्याख्यानं भवति ?

**रा. ताताचार्य** : कार्यात् पूर्वम् इति.

**वी. एन्. झा** : तदर्थं कारणज्ञानम् अपेक्षते पुनः.

**बी.आर्.शुक्ल** : नैव. प्रागभावप्रतियोगित्वमेव कार्यत्वम्.

**वी. एन्. झा** : अतएव खलु मया उच्यते यदि तस्य लक्षणं भिन्नं क्रियते तदा तु हानिः नास्ति.

**प्रह्लादाचार** : नहि. तत्र विचारयामि. प्रागभावो नाङ्गीक्रियते इति तु परिभाषा

भवति. वस्तुतस्तु लोके व्यवहारो वर्तते. वल्लभाचार्यसिद्धान्तेऽपि करणसामग्री यदा भवति तदानीं घटः परिदृश्यते; कारणसामग्री यदा नास्ति तदा घटो न परिदृश्यते इत्येवं रीत्या विभागः कृतः. एवञ्च तार्किकैः नैयायिकैः यथा कश्चन प्रागभावः इत्यभावः स्वीकृतः. सएव पदार्थः अत्र प्रकारन्तरेण निरूपितो वर्तते. नतु तत्र कश्चन विशेषः. एवञ्च कार्यस्य प्रागभावः इति नास्ति इति वक्तुं शक्यते वा? कार्यं नाम कारणसामग्रीविशेषवशाद् दृष्टिविषयो यः पदार्थः सः पदार्थः 'कार्यम्' उच्यते.

वी. एन्. झा : 'पूर्व'पदस्य परिज्ञानं विना कारणज्ञानं सम्भवति वा?

प्रह्लादाचार : न सम्भवति.

वी. एन्. झा : तर्हि किं भवति?

प्रह्लादाचार : पूर्वत्वं नाम नहि कारणत्वघटितम् अस्ति.

बी.आर्.शुक्ल : नैयायिकानाम् इदमेव मतम्. मम निबन्धे अयमेव विचारो मया कृतो वर्तते.

श्रीमती पानसे : शास्त्रिणः! ''अनन्यथासिद्धम्'' अस्ति खलु? तर्हि अन्यं प्रति यत् सिद्धं नाम अन्यं प्रति यत् कारणम् तद् अन्यम्. तर्हि कारणज्ञानम् अपेक्षते तत्र. अन्यं कार्यं प्रति कारणम्.

प्रह्लादाचार : नहि. ''अनन्यथासिद्धत्वं'' नाम किम् इति तत्र विचारः कृतः. तत्र अनन्यथासिद्धत्वम् हि बहुविधं परिष्कृतं वर्तते. अन्यं प्रति पूर्ववृत्तित्वं विज्ञाय यत्प्रतिपूर्ववृत्तित्वं ज्ञातव्यं भवति तत् तस्य ...

श्रीमती पानसे : तर्हि कारणज्ञानम् अपेक्ष्यते खलु?

प्रह्लादाचार : नहि. पूर्ववृत्तित्वमेव न कारणत्वम्. अन्यं प्रति पूर्ववृत्तित्वं विज्ञाय, शब्दं प्रति पूर्ववृत्तित्वं विज्ञाय आकाशस्य, घटं प्रति पूर्ववृत्तित्वं विज्ञातव्यं भवति. पूर्ववृत्तित्वं हि न कारणत्वम् न्यायमते. ''अनन्यथासिद्धनियतपूर्ववृत्तित्वम्'' इत्येतद् अन्यदेव. ''नियतपूर्ववृत्तित्वं'' वर्तते तत्र.

**पा. ना. द्विवेदी :** कारणम् आदाय यस्य नियतपूर्ववृत्तित्वम्. कारणं तत्र किम्?

**श्रीमती पानसे :** कारणताज्ञानम् अपेक्षितमेव.

**प्रह्लादाचार :** ''कारणमादाय'' इत्यत्र कारणत्वेन यद् वर्तते तद् इति अर्थः. नतु कारणत्वं तत्र घटकं भवति.

**पा. ना. द्विवेदी :** कारणलक्षणं तत्र प्रविष्टम्.

**प्रह्लादाचार :** नहि. तस्य उदाहरणं किं भवति?

**रा. ताताचार्य :** अन्यत्र पूर्ववर्तिनएव कार्यसम्भवे तद्भिन्नम् अन्यथासिद्धम् इत्यत्र पूर्ववृत्तिः इत्यस्य ...

**प्रह्लादाचार :** ...परन्तु एतेषाम् आक्षेपस्तु अयं भवति यद् अनन्यथासिद्धत्वशरीरे कारणत्वम् अन्तर्गतं वर्तते. अयम् एकः प्रश्नः. अन्यश्च प्रश्नः. Vallabha'S system requires only two types of cause. Namely Samavāyī-kāraṇa and Nimitta--kāraṇa इति वर्तते. मम तु जिज्ञासा वर्तते यद् वल्लभाचार्यैः ब्रह्मसूत्रसिद्धान्तः स्वीकृतः. ब्रह्मसूत्रेषु समवायनिराकरणं कृतं वर्तते, वैशेषिकाधिकरणे. एवं सति समवायिकारणम् इति किं कारणम् अङ्गीक्रियते? यश्च समवायो निराकृतो ब्रह्मसूत्रेषु तद्भिन्नं किमपि समवायिकारणम् अत्र स्वीकृतम्...

**रा. ताताचार्य :** समवायो अतिरिक्तसम्बन्धो नास्ति. तादात्म्यमेव.

**बी.आर्.शुक्ल :** तादात्म्यमेव समवायः. 'समवाय'शब्दस्य प्रयोगः कृतो वर्तते अर्थस्तु अन्यएव.

**वी. एन्. झा :** प्रस्थानरत्नाकरे ''**नच सूत्र विरोधः, तत्र वैशेषिकादिप्रतिपन्नस्यैव दूषणेन अविरोधात्**''.

**च. शे. शुक्ल :** हममें आत्माश्रयदोष क्यों है उस बारेमें ये ठीकसे बता नहीं पाये. उसके बारेमें हम बताते हैं कि आत्माश्रयदोष है. वह ऐसे है. न्यायमते आत्माश्रयो भवति. कुतो ''अनन्यथासिद्धनियतपूर्ववृत्तित्वम् कारणत्वम्'' इति उच्यते. तत्र 'अनन्यथासिद्धत्वम्' इति यद् वर्तते तेन आत्माश्रयदोषो भवति. यतो हि अन्यथासिद्धिशून्यं यद् तद् अनन्यथासिद्धम्.

अन्यथासिद्धेः लक्षणं किं भवति ? ''अवश्यक्लृप्त-नियतपूर्ववर्तिनः कार्यसम्भवे तद्भिन्नम् अन्यथासिद्धम्''. ''अवश्यक्लृप्त-नियतपूर्ववृत्तित्वं कारणत्वम्'' ''लघुनियतपूर्व-वर्तिनएव कार्यसम्भवे तद्भिन्नम् अन्यथासिद्धम्''. लघुनियतपूर्व-वर्तित्वं कारणत्वम्. एवञ्च अनन्यथासिद्धत्वस्य ज्ञानार्थं कारणस्य अपेक्षा. अतः कारणत्वज्ञानार्थं कारणस्यैव अपेक्षा. स्वस्य ज्ञानार्थं स्वस्यैव अपेक्षाइति तत्र आत्माश्रयो भवति.

**रा. ताताचार्य :** नैयायिकमते भवति.

**बी.आर्.शुक्ल :** भवद्भिः विरुद्धधर्माश्रयतावादः स्वीकृतः. विरुद्धधर्माश्रयता-वादः कथं वक्तुं शक्यः ? विरुद्धधर्मः सएव भवति यत्र सहानवस्थानविरोधो भवेद् अथवा उत्पाद्य-घातकभावविरोधो भवेत्. तत्र यदि सहावस्थानं चेत्, तर्हि विरोधएव नास्ति तर्हि कथं विरुद्धधर्माश्रयत्वम् उच्यते भवता ? अतो जैनादिवद् अनेकान्तवादएव प्रतिभाति न विरुद्धधर्माश्रयतावादः इति मम प्रश्नः. कथं विरुद्धः इति ? यदि व्यवहारे विरोधं गृहीत्वा उच्यते चेत् तर्हि व्यवहारो भिन्नः परमार्थो भिन्नः इति कृत्वा अद्वैतमतप्रवेशो भवति.

**गो. श्या. म. :** सुरासुरयोः सङ्गामे विरोधो निश्चितः. महादेवसिन्निधौ सुरासुरविरोधो नास्ति. तत्र सुराअपि सन्ति असुराअपि सन्ति.

**बी.आर्.शुक्ल :** किं नाम विरोधित्वम् ? सहानवस्थानलक्षणत्वमेव विरोधित्वम्. भवद्भिः सहावस्थानं स्वीक्रियते अतः कथं विरोधः ?

**गो. श्या. म. :** विरोधः एवम् उच्यते. **''नहि विरोध उभयं भगवति अपरिगणितगुणगणे ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीनविक-ल्पवितर्कविचारप्रमाणाभासकुतर्क...विवादानवसरे ...**

**बी.आर्.शुक्ल :** 'विरोध'शब्दएव न प्रसक्तः. कथं 'विरोध'शब्दस्य प्रयोगः क्रियते भवता ?

**गो. श्या. म. :** तदेव ब्रवीमि. विरोधो नास्ति. भगवति विरोधो नास्त्येव. अभगवति तेषां विरोधः.

बी.आर्.शुक्ल : अभगवदात्मकं किमपि नास्त्येव. भगवद्भिन्नं किमपि नास्ति.

गो. श्या. म. : अत्यन्तं भिन्नं किमपि नास्ति. इच्छयातु भिन्नं जातम् सर्वम्.

वि. प्र. मिश्र : आरोपितभिन्नत्वम्.

बी.आर्.शुक्ल : यदि आरोपितभिन्नत्वम् इति उच्यते चेत् तदा अद्वैतमतप्रवेश:.

गो. श्या. म. : यदा भवान् वदति तदा पुन: मायावाद: समागच्छति.

वि. प्र. मिश्र : व्यवहारं किम् ?

गो. श्या. म. : ब्रह्मणो जगत्सिसृक्षया प्रकटो व्यवहार:.

वि. प्र. मिश्र : प्राकट्यं व्यवहार:. तर्हि व्यवहारे विरोध: स्वभावे स्वरूपे वा नास्ति विरोध: तर्हि कथं विरुद्धधर्माश्रयत्वम् ?

गो. श्या. म. : लोके विरोध:. यथा सुरासुरयो: सृष्टौ विरोध:, भगवति न विरोध:. यश्च असुर: सोऽपि भगवत्पार्षदएव. हिरण्यकशिपु: वा भवतु हिरण्याक्षो वा भवतु सोऽपि भगवत्पार्षदएव.

वि. प्र. मिश्र : मान्या: तर्हि ज्ञानस्य अधिकरणता अभेद: स्वीकार्य:. वयं व्यवहारे तदैव भेदो भवति.

गो. श्या. म. : तथैव उच्यते. ततएव मया भागवतवचनम् उद्धृतं ‘‘**नहि विरोध उभयं भगवति अपरिगणितगुणगणे...**’’.

बी.आर्.शुक्ल : ‘‘नहि विरोध:’’ इत्यनेन व्यवहार-परमार्थयो: भेद: प्रतिभाति. तर्हि अद्वैतमतापत्ति:.

गो. श्या. म. : व्यवहार-परमार्थयो: भेदो न. लीला-स्वरूपयो: भेदइति अद्वैतमतापत्ति: न आयाति.

पा. ना. द्विवेदी : नायम् अद्वैतमतप्रवेश:.

गो. श्या. म. : यस्माद् व्यवहारो अपारमार्थिक: इति न अङ्गीक्रियते. व्यवहारस्य ब्रह्मज्ञानबाध्यत्वं न अङ्गीक्रियते. ब्रह्मणि ज्ञाते व्यवहार: पुष्टो भवति. ‘व्यवहारो’नाम किम् अद्वैतिनां मते ? ब्रह्मज्ञानेतराबाध्यत्वे सति ब्रह्मज्ञानबाध्यत्वं स व्यवहार:. अस्माभि: ब्रह्मज्ञानेन अस्य व्यवहारस्य बाधो न अङ्गीक्रियते.

वि. प्र. मिश्र : तर्हि ‘‘**...संसृति: नतु वास्तवी**’’इत्यादिकं भागवते कथं सङ्गच्छते ?

गो. श्या. म. : यदा अज्ञानेन वयं भगवद्भिन्नत्वम् अङ्गीकुर्म तदा तस्य संसृतिः सम्भवति. स आरोपितो धर्मः.

बी.आर्.शुक्ल : आरोपितो धर्मः इति नैव वक्तव्यम्. आरोपणं यदि स्वीक्रियते तदा...

गो. श्या. म. : ...कदा आरोपितो धर्मः ? यदा भगवद्भिन्नत्वं यदावा आत्यन्तिकं भेदम् अङ्गीकुर्मः तदा धर्मः आरोपितः. नहि तादात्म्यस्वरूपघटको भेदः आरोपितो धर्मो अस्माभिः उच्यते. 'तादात्म्यं' नाम किं? एकत्वात्यन्ताभावरूपं द्वैतम् अस्माकं मते नास्ति. नच द्वैतात्यन्ताभावरूपं अद्वैतं वा अभ्युपेतम् अस्मन्मते. अस्माकं मतेतु अङ्गीकृतस्य भेदसहिष्णवभेदस्य को अर्थः ? यथा ''अमित्रो न मित्रं नच मित्राभावः किन्तु मित्रविरुद्धा काचन सम्पत्'' तथैव भेदो न आत्यन्तिकभेदो न भेदाभावः किन्तु भेदविरुद्धा काचन सम्पत्. सोऽयम् अस्माकं सिद्धान्तः.

च. शे. शुक्ल : नायं नियमो यत् सहावस्थानं भवति विरुद्धयोः. सम्बन्धभेदेन विरुद्धयोः सहावस्थानं भवत्येव. घटाभावो घटेऽपि वर्तते पटत्वसम्बन्धेन. घटः तत्र तादात्म्यसम्बन्धेन वर्तते.

गो. श्या. म. : तदेव मया उक्तम् यत् कैलाशे महादेव सन्निधौ सुरासुरयोः नास्ति विरोधो अन्यत्र विरोधो अस्ति.

**( कोलहल )**

प्रह्लादाचार : ब्रह्मणो अभिन्ननिमित्तोपादानत्वम् अङ्गीक्रियते. उपादानकारणमपि ब्रह्मैव निमित्तकारणमपि बह्मैव. निमित्तकारणस्य किं लक्षणम् इत्युक्तौ ''उपादानकारणभिन्नं कारणं निमित्तकारणम्''. एवं कथं सम्भवति ?

गो. श्या. म. : निमित्तकारणका लक्षण इस तरहसे है यह सही है. परन्तु ब्रह्म अभिन्ननिमित्तोपादन है वह इस अर्थमें नहीं कि निमित्तकारण वो न होता हो. वह निमित्तकारण भी होता है. **''तद् आत्मानं''** यहां उपादानता है. **''स्वयम् अकुरुत''** यहां तैत्तिरीयश्रुतिमें निमित्तकारणता कही गयी है. अब

रही बात यह कि निमित्तकारण क्या है और उपादानकारण क्या है. तो उसकी परिभाषामें यह कहा गया है कि उपादानकारणसे भिन्न जो भी कारण है वह निमित्तकारण है. समस्या यहां यह है कि निमित्तकारणका लक्षण ब्रह्ममें व्याप्त होता है या नहीं ?

**वि. प्र. मिश्र :** पुनः आपको सत्ताभेद मानना पड़ेगा.

**गो. श्या. म. :** नहीं.

**वि. प्र. मिश्र :** सत्ताभेद माने बिना आपकी ब्रह्ममें अवगति बनेगी नहीं.

**गो. श्या. म. :** बनेगी. इसलिये बनेगी...

**रा. ताताचार्य :** समाधानं वदामि. तेषां प्रश्नस्तु उपादानभिन्नं कारणं निमित्तकारणम् इति उच्यते. भवद्भिः ब्रह्मैव उपादानं निमित्तं च इति अङ्गीकृतम्. उपादानभिन्नत्वं नास्ति किल! अतः तद्भिन्नं निमित्तकारणत्वं कथम् इति प्रश्नः. तत्र अयम् अभिप्रायः : उपादानकारणताभिन्नकारणताश्रयत्वं निमित्तत्वम्. एकत्रैव कारणताद्वयम् अस्ति.

**बी.आर्.शुक्ल :** कारणता भिन्ना-भिन्ना वर्तते. आश्रयस्तु एकएव. तत्तु भवति. परन्तु तत्र शक्तिरूपा यदि कारणता तर्हि शक्तिद्वयं स्वीकरणीयं वा एकैव शक्तिः ?

**गो. श्या. म. :** अनन्ताः शक्तयः. **''पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च''**.

------✻------

## संगोष्ठ्युत्तरलेखनम्

### गोस्वामी श्याम मनोहर

प्रश्नोत्तरलहरिप्रवहमाणेन मया प्रश्नद्वयस्य समाधानदिशि तरणं तदा भृशं विस्मृतमिति प्राप्तावसरो अहम् इदानीं तत्र प्रयते :

१.तत्र प्रथमं तावद् यत् श्रीमद्भिः वशिष्ठनारायण झा महोदयैः अन्यैरपि

च प्रलयकालेऽपि कार्यकारणरूपसम्बन्धिद्वयसद्भावे सति उत्पत्तिः कीदृशी कथं च स्यात्? कार्यस्य विद्यमानत्वादेव इति यद् आशङ्कितं तत्र वाल्लभमते तावद् ब्रह्मणः सच्चिदानन्दरूपत्वं "सत्यं ज्ञानम् आनन्दं ब्रह्म" इति शास्त्राभिमतमेव अङ्गीकृतम्. तथाच प्रलयकाले बहुविधानां तिरोहितचिदानन्दांशकानां नाम-रूप-कर्मणां सच्चिदानन्दताप्रत्यापत्तिरूपो हि एकीभावो भवतीति स्वरूपप्रत्यापत्तिः. सृष्टौतु तस्यैव सच्चिदानन्दस्य ब्रह्मणः सदंशेषु चिदंशेषु आनन्दांशेषु च अनेकीभावपुरःसरं बहुविधैः नाम-रूप-कर्मभिः तेषां संयोजनेन क्वचित् केवलसदंशरूपता क्वचिच्च केवलसच्चिदंशरूपता क्वचित्पुनः आनन्दांशरूपता वा इत्येवं अंशांशिभावमूलकः च कार्यकारणभावो द्वित्वं वा. तादृग्द्वित्वाश्रयभूतानां सदंश-सच्चिदंशानन्दांशानां निजांशिनि ब्रह्मणि खलु अनाशाभिप्रायिकैव सम्बन्धिद्वयोक्तिः. नतु सृष्टिकालवद् भगवत्संकल्पप्रकटितेषु तत्तदंशेषु यथायथं भगवत्संजिततत्तन्नाम-रूप-कर्माभिप्रायिका.

२.अपरञ्च श्रीमत्प्रह्लादाचारमहोदयैः आक्षिप्तायाः वाल्लभाभिमते ब्रह्मणि निमित्तकारणलक्षणासंगतेः समाधानतया एतद् आवेदनीयं भवति : विशेष्यस्य ब्रह्मणः एकत्वेऽपि सृष्ट्युपादानबुभूषाविशिष्टाद् ब्रह्मणो सृष्टिचिकीर्षाविशिष्टस्य ब्रह्मणो हि तदैच्छिकभेदविवक्षया लक्षणसंगतिः अनवद्यैव.

३.यत्तु श्रीप्रह्लादाचार्यैः प्रस्थानरत्नाकरोक्तकारणलक्षणेऽपि आत्माश्रयदोषः उद्भावितः तत्र आविर्भावकत्वं न तावद् नियततया कार्यनिरूपितं कारणनिरूपितं वा भवति. तथाहि क्वचित् कार्यनिरूपितं यथा मृदो घटाविर्भावकत्वं घटनिष्ठकार्यतानिरूपितं, क्वचिद् धर्मनिरूपितं यथा सूर्यस्य प्रकाशाविर्भावकत्वं सौरप्रकाशनिष्ठधर्मतानिरूपितं, क्वचित् पुनः धर्मिनिरूपितमपि तद् यथाहि सुवर्णशल्कस्य कुण्डलाद्याकृत्याविर्भावकत्वं स्वनिष्ठधर्मितादात्म्यनिरूपितं च उपलभामहे. ब्रह्मज्ञानेनापि ब्रह्माविर्भावस्य शास्त्रनिरूपितत्वेन ब्रह्मणः कार्यत्वं न केनापि अभ्युपगन्तुं शक्यम्. याथार्थ्याभ्युपगमेन हि ब्रह्मज्ञानस्य स्वविषयब्रह्मजनितत्वमेव न पुनः स्वविषयजनकत्वं, घटादिज्ञानतुल्ययोगक्षेमात्. तस्माद् आविर्भावकत्वन्तु अनियतं नियतन्तु तत् शक्त्या भवतीति तत्रैव कारणताप्रतिपत्तिः. आविर्भाविकायाः शक्तेरेव मूलग्रन्थे लक्षणशरीरे उल्लेखो. आंग्लानुवादेतु "being the locus of the potentiality which

causes maneifestation'' इति या कारणतोक्तिः सातु न लक्षणशरीरगतस्य किन्तु तद्विवरणरूपस्य ''**उपादानस्थं कार्यं या व्यवहारगोचरं करोति सा शक्तिः**''इत्येतस्य मूलस्य अनुवादरूपेति न काचन क्षतिः इति मन्ये.

# अध्यक्षीय उद्बोधन

प्रो. एन्. एस्. आर्. ताताचार्य

अस्यां गोष्ठ्यां मया न आगन्तव्यम् इति प्रथमतो निश्चितम् आसीत्. इदानीं भगवतः शक्तिवशात् अहम् अत्र आनीतः. मम महान् लाभो जातः. यद्यहं न आगमिष्यन् तदानीं यो अनर्थो अभविष्यत् सः इदानीं अनुभूयते मया. एतावत्पर्यन्तं बहूनि दर्शनानि दृष्टवतो मम वल्लभदर्शने परिचयो न आसीत्. केवलं द्वैताद्वैत-विशिष्टाद्वैतादिग्रन्थानामेव पर्यालोचनम् अभूत्. वल्लभदर्शने प्रमेय-प्रमाणानां जिज्ञासा वर्तते. साच जिज्ञासा अनया गोष्ठ्या शान्ता भवति. अयं महान् लाभः.

तत्र आदौ आचार्यवर्यैः वाल्लभसम्प्रदायम् अधिकृत्य कार्यकारणभावविषये यद्यद् वक्तव्यं तत् सर्वं तैः सङ्ग्रहेण उक्तम् अस्ति. प्रायः तत्र प्रयुक्ताः सर्वेऽपि शब्दाः विशिष्टाद्वैतिनाम् अस्माकमपि सम्मताएव. परन्तु अर्थविषये क्वचिद् भेदो भवेत्. अभिन्ननिमित्तोपादानत्वं, निर्विकारस्यैव सविकारत्वम् इत्यादयः विषयाः अस्माभिरपि अङ्गीकृताः सन्ति. परन्तु अस्मिन् सम्प्रदाये सूक्ष्मतया ज्ञातव्याः अंशाः बहवः सन्ति.

अस्यां गोष्ठ्यां कार्यकारणभावम् अधिकृत्य विचारः प्रवर्तते. एतद्विषये तु प्राचीनैः सामान्यतः कारणत्वं नाम किं कार्यत्वं नाम किम् इति विचारः एकः. अनन्तरं सत्कार्यवादो, असत्कार्यवादः, शून्यवादः, आरम्भवादः इत्यादयः विषयाअपि परिशीलिताः सन्ति. अस्यां गोष्ठ्यान्तु प्राधान्येन विचारणीयम् एतत्. कार्यकारणभावः आवश्यकः इति प्रथमतः स्थापनीयम्. तदनन्तरं कार्यकारणयोः लक्षणं किम् इति तत्तन्मतरीत्या साधनीयं भवति.

तदनन्तरं आरम्भवादः परिणामवादः इत्यादयअपि परिशीलनीयाः वर्तन्ते. तत्सर्वं आरब्धं भविष्यति.

अस्मिन् स्थले प्रथमतः किं नाम कारणत्वम् इति विचारावसरे प्राचीनग्रन्थेषु न्यायसूत्रे प्रथमसूत्रे प्रमायाः करणं प्रमाणम् इत्यत्र कारणपदार्थानिरूपणावसरे तैः ''व्यापारवत् कारणं करणम्'' इति सामान्यतः उक्तम्. जयन्तभट्टेन न्यायमञ्जर्यान्तु 'प्रमाण'शब्दार्थप्रतिपादनावसरएव ''सामग्रीकरणम्'' इति स्वकीयं मतम् उपक्षिप्तम् अस्ति. तत् सर्वं विस्तरेण तत्र निरूपितम् अस्ति. सामग्री प्रमाणम् इति तैः उक्तम् अस्ति. अनन्तरम् उदयनाचार्यैरपि कार्यकारणभावएव नास्ति इति चार्वाकमतदर्शनावसरे ''सापेक्षत्वाद् अनादित्वाद् वैचित्र्याद् विश्ववृत्तितः सत्यात्म...'' अत्र हेतुः अलौकिकः. परलोकसाधने वेदोपदेष्टृतया ईश्वरः साधयितुम् इष्यते भवद्भिः. परलोकएव नास्ति. परलोकस्य कारणमपि नास्ति. तयोः साध्यसाधनभावोऽपि नास्ति इति अपलापं कुर्यात् तदपलापनिराकरणार्थं ''सापेक्षत्वाद्'' इत्यादिहेतुभिः कार्यकारणभावः स्थापितः. तत्र विस्तरेण कुसुमाञ्जलौ द्रष्टुं शक्यते. तैरेव किं नाम कारणशक्तिः ? साध्यशक्तिः, सहजशक्तिः इति शक्तिद्वयनिराकरणावसरे अन्ते किं भवतां मते शक्तिरेव नास्ति इति पृष्ट्वा ''मम मते शक्तिः अस्त्येव. न वयं शक्तिपदार्थम् अपलपामः, किन्तु मीमांसकसम्मतां शक्तिरेव अपलपाम''. तर्हि भवन्मते का शक्तिः ? इत्याशङ्क्य 'कारणत्वं' शक्तिः. किं नाम कारणत्वम् इति आशङ्कायां सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वं कारणत्वम् इति तत्र उक्तम्. अनन्तरं नित्यविभोः ईश्वरस्य कारणत्वं न सम्भवति. अन्ववयव्यतिरेकाभ्यां किल कारणत्वं निश्चीयते. नित्यविभोः व्यतिरेको नास्ति इति कृत्वा तस्य कारणत्वं कथं सम्भवति ? इति आशङ्क्य **''पूर्वभावो हि हेतुत्वं मीयते येन केनचित्''** कार्यनियतपूर्ववृत्तित्वं कारणत्वम्. अत्रतु सहकारिवैकल्यप्रयुक्तकार्याभाववत्त्वम् इति उक्तम्. तत्र तु कायनियतपूर्ववृत्तित्वं कारणत्वम्. तच्च कारणत्वम् अन्वयव्यतिरेकाभ्यामेव निर्धारणीयम् इति नास्ति नियमः. यत्र अन्वय-व्यतिरेकौ सम्भवतः तत्र अन्वय-व्यतिरेकाभ्यां निर्धार्यते यत्र तु व्यतिरेको न सम्भवति, ईश्वरादौ,

तत्र कारणत्वं कथं निश्चीयते इति चेद्, धर्मिग्राहकप्रमाणेन निश्चीयते. ईश्वररूपस्य धर्मिणो ग्राहकं यद् अनुमानरूपं प्रमाणं तेनैव तस्य व्यतिरेकाभावः इति कारणत्वं निश्चीयते. कारणत्वेनैव किल ईश्वरो अनुमीयते. तस्मात् क्वचिद् अन्वयव्यतिरेकाभ्यां क्वचिद् धर्मिग्राहकप्रमाणात् कारणत्वम् इत्येवम् उक्तम् उदयनाचार्यैः. तदनन्तरं अस्य कारणस्य स्वीकारो मणिकारैः शक्तिवादे ''अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम्'' इति लक्षणम् उक्तम्.

एतत् सर्वं सङ्कलय्य एतैः आचार्यैः स्पष्टतया प्रतिपादितम्. एतेच ध्यानबोध ... केचन विषयं सम्यग् ज्ञातुं न प्रभवन्ति. केचन सम्यग् जानन्ति किन्तु ज्ञातं विषयं यथा सर्वैः सम्यग् अवबुध्येत तथा वक्तुं न प्रभवन्ति. एतेषान्तु सामर्थ्यद्वयमपि वर्तते. अतिगम्भीरमपि विषयं सम्यग् जानन्ति. ज्ञातं विषयं यथा सर्वे जानीयुः तथा प्रतिपादयन्ति. न्यायमञ्जरी इत्यादिग्रन्थेषु अतिगम्भीरोऽपि विषयो यथा अस्माभिः स्पष्टतया ज्ञायते तथा प्रदिपाद्यते. केचन ग्रन्थेषु यथा उदयनाचार्यप्रभृतिग्रन्थेषु शैली दुरवगमा भवति. तत्तु तेषां स्वभावः इति मन्ये. परन्तु अस्मिन् काले एतद् अपेक्षितम्. यथा सर्वे सम्यग् जानीयुः तथा प्रतिपादनम् अपेक्षितम्. एतद् उभयपि एतेषु वर्ततइति अहं सन्तोषयामि.

अत्र विषये मम जिज्ञासा वर्तते. अत्र अन्योन्याश्रयः प्रतिपादितः. अन्योन्याश्रयः सन्दृष्येण सत्त्वेन नैयायिकमते स्थापितः... एतेषां मतेऽपि अन्योन्याश्रयो भवितुम् अर्हति. यतः कारणत्वं नाम कार्यगतः यः आविर्भावः तादृशाविर्भावकशक्तिमत्त्वं कारणत्वम्. अत्र आविर्भावो नाम व्यवहारयोग्यता इति एतैः प्रस्थानरत्नाकरे लिखितम् अस्ति. एवञ्च कारणगतं यत् कार्यं तद्गता या व्यवहारयोग्यता तदनुरूपशक्तिमत्त्वं कारणत्वम् इति लक्षणम्. एवञ्च कारणत्वं नाम स्वगतकार्यनिष्ठव्यवहारयोग्यतापादकशक्तिमत्त्वम् इति पर्यवस्यति. अस्मिन् कारणलक्षणे कार्यस्यापि प्रवेशो वर्तते. किं नाम कार्यत्वम् इति चेत् , कारणाधीनः स्वगतशक्त्यधीनो व्यवहारयोग्यत्वं कार्यत्वम् इति भवति. एवञ्च अत्रापि अन्योन्याश्रयो दोषः तथैव आपद्यते. नैयायिकमतेऽपि

अन्योन्याश्रयो दोषः आपद्यते. ''यश्चोभयोः समो दोषः परिहारश्च''. अतः उभाभ्यामपि परिहारो अवश्यं कर्तव्यः. परिहारस्तु उभयमते यथा दोषो न भवेत् तथा परिहारः कर्तुं शक्यते वा तथा अहम् इदानीम् प्रयते. इदानीं कारणलक्षणे कार्यस्य कार्यत्वेन प्रवेशो यदि क्रियते तदानीं इदं सर्वं... अतो नव्यनैयायिकाः यथा परिष्कुर्वन्ति तथा कार्यस्य कार्यत्वेन प्रवेशो न क्रियते. वस्तुविशिष्टत्वं कारणत्वम्. वस्तुविशिष्टत्वञ्च कार्यैककालावच्छिन्न- स्वाधिकरणवृत्तिकात्यन्ताभावप्रतियोगितानवच्छेदकस-म्भवत्वम् इति निवेश्यते चेद् दोषो न भवति. अत्रापि एतेषां मतेऽपि कारणणत्वं नाम किम्? वस्तुविशिष्टत्वमेव. वस्तुविशिष्टत्वं च स्वगतव्यवहारयोग्यतापादकशक्तिमत्त्वम्. शक्तिमत्त्वसम्बन्धेन वस्तुविशिष्टत्वम् इति उच्यते. नव्यनैयायिकाः... एतादृशाः दोषाः तत्र बहुषु उद्भाविताः. तेषां दोषाणां परिहारार्थं तैः मार्गाः प्रदर्शिताः सन्ति. तन्मार्गम् अवलम्ब्य द्वयोरपि मतयोः अन्योन्याश्रयः परिहर्तुं शक्यते. यदि प्राचीनरीत्या अन्योन्याश्रयः परिहरणीयः इति आग्रहः तर्हि अलोच्य तथा... एवञ्च महान् सन्तोषः. अत्र विद्वांसः अत्र समागताः तेषां समागमेन. इतोऽपि ज्ञानस्य अभिवृद्धिः अस्मादृशानां भवतां च भवति. अतः एतादृशसंयोजनम् महते फलाय कल्पते मादृशानाम् अतः कृतज्ञतां निवेद्य अयं विचारो दिनत्रयम् एवमेव प्रचलतु इति भगवन्तं प्रार्थये.

------*------

# संगोष्ठ्युत्तरलेखनम्

## गोस्वामी श्याम मनोहर

समादरणीयैः अध्यक्षमहोदयैः श्रीमद्भिः ताताचार्यैः यदिह—

''एतेषां मतेऽपि अन्योन्याश्रयो भवितुम् अर्हति. यत: कारणत्वं नाम कार्यगत: य: आविर्भाव: तादृशाविर्भावकशक्तिमत्त्वं कारणत्वम्. अत्र आविर्भावो नाम व्यवहारयोग्यता इति एतै: प्रस्थानरत्नाकरे लिखितम् अस्ति. एवञ्च कारणगतं यत् कार्यं तद्गता या व्यवहारयोग्यता तदनुरूपशक्तिमत्त्वं कारणत्वम् इति लक्षणम्. एवञ्च कारणत्वं नाम स्वगतकार्यनिष्ठव्यवहारयोग्यतापाद-कशक्तिमत्त्वम् इति पर्यवस्यति. अस्मिन् कारणलक्षणे कार्यस्यापि प्रवेशो वर्तते. किं नाम कार्यत्वम् इति चेत्, कारणाधीन: स्वगतशक्त्यधीनो व्यवहारयोग्यत्वं कार्यत्वम् इति भवति. एवञ्च अत्रापि अन्योन्याश्रयो दोष: तथैव आपद्यते.''

इति उक्तं तदपि समाधानार्हं प्रतिभाति. यस्माद् अध्यक्षमहोदयोदितायाः ''स्वगतकार्यनिष्ठव्यवहारयोग्यतापादकशक्तिमत्त्वम्'' इति निरुक्तेः आवश्यकतैव नास्ति, स्वगतनामरूपान्तर-स्वगतकर्मान्तरैतदन्यतरव्यवहारयोग्यतापादकशक्तिमत्त्वं कारणत्वम् इत्यस्याअपि कारणतानिरुक्तेः वक्तुं सुशक्यत्वेन न कारणलक्षणे कार्यप्रवेशो अपेक्षितः. नच इह अप्रमाणिकत्वं शंक्यं,

''तद्धेदं तर्हि अव्याकृतम् आसीत् तन्नामरूपाभ्यामेव व्याक्रियत 'असौनामा अयम्' 'इदंरूपः' इति. तदिदमपि एतर्हि नामरूपाभ्यामेव व्याक्रियते'' (बृह.उप.१।४।७), ''त्रयं वा इदं

नाम रूपं कर्म इति...ब्रह्म एतद्धि सर्वाणि नामानि... रूपाणि... कर्माणि बिभर्ति तदेत् त्रयं सद् एकम् अयम् आत्मा आत्मो एकः सन् एतत् त्रयम्'' ( बृह.उप.१।६।१-३ )

—इति च श्रुत्योः कार्याणां नामरूपकर्मताप्रतिपादनादेव. कार्यत्वञ्च ''कारणगतानभिव्यक्तरूपनामकर्माविर्भावकशक्त्यधीनव्यवहारयोग्यत्वं'' भवतु न तेन काचिद् हानिः. इति अलम्.

# ॥ अजातिवादः ॥

अजातिवाद ऑफ् श्रीगौडपाद एंड् अविकृतपरिणामवाद
ऑफ् श्रीवल्लभाचार्य ए स्टडी

**श्रीयज्ञेश्वर शास्त्री**

*

प्रतीच्यदार्शनिकह्यूममहाशयानां कार्यकारणभावप्रतिषेधेन
सह
भारतीयचिन्तकानां साम्यवैषम्ये

**श्रीराधेश्यामधर द्विवेदी**

*

# Ajātivāda of Śrī Gauḍapāda and Avikṛtapariṇāmavāda of Śrī Vallabhācārya : A Study

Prof. Yajneshwara S. Shastri

Ajātivāda (no-creation theory) is propounded by Gauḍapādacārya, the grand teacher (Paramaguru) of Ādi Śaṅkarācārya, in his Māṅḍūkya-kārikā. The word 'Ajāti' is used in two senses in Gauḍapāda's philosophy. Positively, it means that Brahman or the Absolute Reality is self-existent, Pure consciousness, immortal, it cannot therefore by it's own nature, suffer change. It is uncaused, has no birth and is never created. Negatively, it means that the world being only an appearance of Brahman, is infact never created. In essence, there is no actual creation at all.

Māndūkyakārikā is the only available work of Gauḍapāda. It is divided into four chapters. Viz, Āgama-prakaraṇa; Vaitathya-prakaraṇa; Advaita-prakaraṇa and Alātaśānti-prakaraṇa.In the beginning part of his work, he explains the Māndūkya Upaniṣad. He begins with the three apparent manifestations of the Ātmā or self: 1. as the Viśva or Vaiśvānara—the experiencer of the external world while we are awake, 2. as the experiencer in the dream state, Taijasa Ātmā; 3. as

the experiencer in deep sleep, called Prājña, where there is no determinate knowledge, but pure-consciousness and pure bliss. Then he comes to explain, the 'Turīya' state, the state of Brahma (Ātmā), which is partless, merely, the absolute self, beyond empirical relations, the culmination of Phenomenal existence, eternal the blissful and non-dual, where all duality ceases (द्वैतस्योपशमः शिवः M.K.I 29). All this is Brahman, and the phenomenal world disappears in it. This non-dual Brahman is the ultimate goal of all.

According to Gauḍapāda, Brahma is unborn, un-caused, uncreated absolute. So, origination from the absolute standpoint is impossibility. Gauḍapāda, enumerates the various theories of creation and rejects all of them on this basis. He states: "Some think that creation is the expansion (Vibhūti) of God; others imagine that creation is like dream and magic (māyā), others think that creation proceeds simply by the will of the god; others declare that it proceeds from time, still others maintain that it is for the enjoyment of the Lord or for his sport only.

विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः।
स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता॥
इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः।
कालात् प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः॥
भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे।

(मा.का. ७-९)

According to Gauḍapāda, these theories of creation cannot be accepted on logical ground, for no motive for creation should by sought, because, what desire can god have whose desires are fulfilled ("आप्तकामस्य का स्पृहा" I.9). If at all, creation is accepted, it is the very nature of the effulgent Being ("देवस्यैष स्वभावोऽयम्" I.9). He goes on examining other theories of causation and argues that those who regard cause (Kāraṇa) as the effect (Kārya) in a potential form cannot consider the cause as truly un-produced (aja) for it suffers production. How can it be called eternal yet changing? If it is said that things come into being from that which has no production, there is no example with which such cause may be illustrated. The Sāṅkhyas, maintain that, the effect pre-exists in the cause, before its production in the potential and un-manifest form and that causation consists as the changing effects (Vyakta-jagat).

Gauḍapāda's objection against the Sāṅkhyas is that if the cause is produced, how can it be unborn? If it becomes the changing 'many', how can it be changeless and permanent? Again, if the effect is identical with the cause, then the effect too should be immortal, or the cause should be mortal. How can the permanent cause, be identical with the changing effect and still be permanent? "कारणं यस्य वै कार्यं कारणं तस्य जायते, जायमानं कथमजं भिन्नं नित्यं कथं च तत्, कारणाद् यदि अनन्यत्वं अतः

कार्यम् अजं यदि, जायमानाद्धि वै कार्यात् कारणं ते कथं ध्रुवम्" (IV.11-12).

Śrī Śaṅkarācārya rightly points out in this connection in his commentary on Māndūkyakārikā that "one cannot cook half a portion of a hen and at the same time reserve another half for lying eggs "नहि कुक्कुट्याः एकदेशः पच्यते, एकदेशः प्रसवाय कल्प्यते"(IV.12).

Again, if the effect does not pre-exist in the cause it is like a hare's horn and cannot be produced. A sequence has to be found out in the births of cause and effect. The cause and effect cannot be simultaneous, for then the two horns of a cow will have to be regarded as causally related "सम्भवे हेतुफलयोः एषितव्यः क्रमः तया युगपत्सम्भवे यस्माद् असम्बन्धो विषाणवत्" (IV.16).

Those who maintain that the cause proceeds the effect and effect also proceeds the cause, maintain absurd position that son also begets his father "हेतोरादिः फलं येषाम् आदिर्हेतुः फलस्य च, तथा जन्म भवेत् तेषां पुत्राद् जन्म पितुर्यथा" (IV.15).

Gauḍapāda says that, we cannot believe that anything is born from that which has itself suffered production. How, again, can one come to a right conclusion about the regresses an infinitum of the cause and effect? Without reference to the effect, there is no cause, and

without reference to cause, there is no effect. Then the question is, which of the two has existence, earlier, with relation to which the other may emerge "यदि हेतोः फलात् सिद्धिः फलसिद्धिश्च हेतुजा, कतरत् पूर्वनिष्पन्नं यस्य सिद्धिरपेक्षया" IV.18 ).

The fact is, nothing can be produced by itself or by any other thing. Since an existent ( sat ) or non-existent ( asat ) or non-existent ( asat ) or both existent and non-existent thing cannot be produced. If a thing is existent, how can it be produce, already existing thing cannot be produced. Similarly, which is non-existent that cannot be produced like a hare's horn. If a thing is both existent and non-existent at the same time, it is self-contradictory and therefore impossible. So, thing cannot be produced by itself or by any other or by both or by neither. "स्वतो वा परजो वापि न किञ्चिद् वस्तु जायते, सदसत् सदसद्वापि न किञ्चिद् वस्तु जायते"( IV.22 ).

A cause cannot be produced by its beginning-less effect. An effect also cannot be produced by a beginning-less cause. An uncaused effect cannot produce a cause and an un-cause cause cannot produce an effect. This is the nature of thing. That which has no cause cannot be produced. Therefore, both cause and effect are un-caused

"हेतुर्न जायतेऽनादेः फलञ्चापि स्वभावतः,
आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते"( IV.23 ).

If there is a production, beginning-less Saṁsāra cannot have an end and Mokṣa (liberation) produced by discriminative knowledge cannot be endless. Therefore there is no causation. "अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति, अनन्तता चादिमतो मोक्षस्य न भविष्यति" (IV. 30).

If, one, non-dual eternal, unborn (aja) Brahma is real, cause and effect cannot be real. Hence, no production is real. One, eternal Brahman appears to be many caused effect, which are unreal appearances.

Gauḍapāda argues against dualists or pluralists, who talk about the birth of that unborn, positive entity. But how can a positive entity that is unborn and immortal undergo change or mortality? "अजातस्यैव भावस्य जातिमिच्छन्ति वादिनो अजातो ह्यमृतो भावो मर्त्यतां कथमेस्यति" (III.20).

The immortal cannot become mortal. Similarly, the mortal cannot become immortal. The mutation of one's own nature will take place in no way whatsoever. "न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा प्रकृतेः अन्यथाभावो न कथञ्चिद् भविष्यति" (III.21).

How can an immortal entity continue to be changeless from the standpoint of one according to whom a positive objective object, which is immortal by nature, can pass into birth, it being a product? "स्वभावानामृतो यस्य भावो गच्छति मर्त्यतां कृतकेन अमृतस्तस्य कथं स्थास्यति निश्चलः" (III 22).

Gauḍapāda quotes Śruti to prove his argument. He says, Śruti declares there is no plurality whatsoever. "The Lord through his power appears to be many and the unborn appears to be born as many". It is to be known, therefore, that unborn appears to be born only through illusion.

"नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि,
अजायमानो बहुधा मायया जायते तु सः" ( III.24 ).

The Śruti denies creation by declaring that "the unborn does not take birth who, then can indeed produce Him ?" ( Brhadāraṇyaka Upaniṣad III.IV.28 ). It also denies creation by stating that "those who are attached to creation or production or origination go to utter darkness" ( Isa.12 ). "सम्भूतेरपवादाच्च सम्भवः प्रतिषिध्यते कोऽन्वेनं जनयेदिति कारणं प्रतिषिध्यते" ( III. 25 ).

Gauḍapāda says that by independent reasoning also, it can be proved that, ultimately nothing originates. He who maintains the birth of the existent accepts the absurd position, that, that which is already existent, is being born again and the non-existent can never be born at all. Verily, the son of a barren woman can be born neither through illusion nor in reality. The doctrine of non-origination, therefore, is the ultimate truth. "सतो हि मायया जन्म युज्यते न तु तत्त्वतः, तत्त्वतो जायते यस्य जातं तस्य हि जायते, असतो मायया जन्म तत्त्वतो नैव युज्यते, वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते" ( III.27-28 ).

There is no creation at all, in reality, but it only appears to be so. If this world of plurality really existed it would have surely come to an end. Duality is only an appearance, non-duality is the real truth, Once this non-dual Brahma is realized, the duality disappears. "प्रपञ्चो यदि विद्येत निवर्तेत न संशयः, मायामात्रमिदं द्वैतम् अद्वैतं परमार्थतः" (I.17).

When the individual, sleeping under the influence of beginning-less Māyā, is awakened, then, he realizes, birth-less, sleepless, non-dual Brahman "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते, अजमनिद्रमस्वप्नम् अद्वैतं बुध्यते तदा" (I.16).

Once, Brahman is realized, there is no more duality "ज्ञाते द्वैतं न विद्यते" (I.18). Gauḍapāda says that some want to prove the birth of the unborn. How can the unborn can be born? How can the immortal become mortal? Ultimate nature cannot change. It is self-proved, self-existent, innate and uncaused. All things by their very nature are free from decay and death. Those who believe in decay and death, fall low on account of this wrong notion "जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः, जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया" (IV.10).

From the ultimate stand point, there is neither death nor birth, neither disappearance nor appearance, neither destruction nor production. "न निरोधो न चोत्पत्तिः न बद्धो नच साधकः, न मुमुर्षुर्न वै मुक्त इत्येषा परमार्थता" (II.32).

This world, when ascertained from the standpoint of its essential nature, from the stand point of Supreme Reality, does not exist as multifarious, nor does it exist in its own right. Nor do phenomenal things exist as different or non-different from the self. "नात्मभावेन नानेदं न स्वेनापि कथञ्चन, न पृथङ् नापृथक् किञ्चिदिति तत्त्वविदो विदुः" (II.34).

Reality is non-origination. It always remains the same. It is the complete absence of misery. If we know this, we shall at once understand how things, which in fact are never born, yet appear as if they are born. Upaniṣadic texts, in some places mentions creation as distinct from its cause and give the illustration of earth, gold, spark, etc., they do so only as a means in order to make us understand the supreme end of non-origination. "मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदिताऽन्यथा, उपायः सोऽवताराय नास्ति भेदः कथञ्चन" (III.15).

Non-duality is the highest reality. Duality is said to be a derivation of it. "अद्वैतं परमार्थोहि द्वैतं तद्भेद उच्यते, तेषामुभयथा द्वैतं तेनायं न विरुध्यते" (III.18).

When it is said that, duality is derived from non-duality, some one may entertain the doubt that, on that ground duality, too, is real in the highest sense. Therefore, it is said "this birth-less self becomes differentiated, verily through Māyā, and it does so, in

no other way than this". For, should it become multiple in reality, the immortal, will undergo mortality. "मायया भिद्यते ह्येतन् नान्यथाऽजं कथञ्चन, तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत्" (III.19).

In truth, because, it is unborn, which appears as if it is born, therefore, non-origination is the very nature of unborn. That which exists neither in the beginning nor in the end, cannot exist in the middle also, that which is not real in the past and in the future, must e unreal in the present also. "आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा, वितथैः सदृशाः सन्तोऽवितथाइव लक्षिताः" (III. 6).

According to Gauḍapāda, causality is impossibility. Origination is impossible, because, neither the existent nor the non-existent can be produced either by the existent or by the non-existent. To emphasize the reality of the non-dual Brahman and to show the unreal nature or the world, he calls origination as Māyā or appearance, and upholds the non-origination theory.

Śrī Vallbhācārya upholds the quite opposite view. He believes in real creation of the universe. He clearly states that this universe is creation of the Lord "प्रपञ्चो भगवत्कार्यः" (तत्त्वार्थदीपनिबन्ध). Brahman is the inherent as well as efficient cause of the universe "जगतः समवायि स्यात् तदेव च निमित्तकं, सर्वस्यापि जगतः कार्यरूपस्य च ब्रह्मैव समवायिकारणम्" (तत्त्वार्थदीपनिबन्ध पृष्ठ. ११५). Matter and souls,

both are of the nature of Brahman ( अणुभाष्य I.I.4; II.II.43 ).

The world is pure Brahman in the state of effect. It is real and identical with Brahman as existence ( सत् ). Jīvas (individual Souls) are real and identical with Brahman as consciousness ( चिदंश ). Their inner souls ( अन्तर्यामी ) are real and identical with Brahan as bliss "विस्फुल्लिङ्गा इवाग्नेस्तु सदंशेन जडाअपि, आनन्दांशस्वरूपेण सर्वान्तर्यामिरूपिणः" ( त.दी.नि. पृष्ठ.६९ ).

Vallabha advocates the doctrine of immutable transformation ( अविकृतपरिणामवाद ). God is the cause of the world, but he does not undergo any change "अविकृतमेव परिणमते" ( अणुभाष्य II.Iv.26 ) God is one, He wills, to become many to sport with them ( अणुभाष्य II.I.33 ). His creative act is an act or sport, undetermined by an external end. It is a voluntary play. God willingly becomes the world, even as serpent folds itself into a coil ( अणुभाष्य III.II.27 ) God becomes the world without undergoing any modification, even as a gold is modified into various ornaments without changing its nature. God conceals his aspect of consciousness and bliss, in the matter. He conceals his bliss aspect in Jīvas. Creation of the world and emanation of the souls are partial self-concealment of God. Self-manifestation ( आविर्भाव ) of Him is the fulfillment of the destiny of matter and Souls. Self-concealment and self-manifestation are the unique features of Śuddhādvaita School. God is the

one supreme Antaryāmi, the inner ruler of the universe. In the material world only the existence aspect is manifested while his aspects of consciousness and bliss remain obscured. In the individual Souls the aspects of existence and consciousness are manifested while the bliss aspect remains concealed. In the Antaryāmins all the aspects are manifested. All these three forms viz., Jagat, Jīva and Antaryāmin, are essentially identical with God. Jagat ( the world ) is dissimilar to Him ( विजातीय ), Jīvas are similar to Him ( सजातीय ) and Antaryāmins are inside Him ( स्वगत ). He runs through all the three forms, which are non-different from him. There is no difference either homogeneous, or heterogeneous or internal in God "सजातीय-विजातीय-स्वगतद्वैतवर्जितम्" ( त.दी.न.पृष्ठ - ११३) everything is Brahman, Therefore, even calling matter or Jaḍa is just for empirical sake "सर्वस्यापि भगवत्त्वे जडादिप्रयोगो व्यवहारः" ( त.दी.नि.पृष्ठ ७१ ). For vallabhācārya, all causation is spiritual causation. What appears to be physical causation is direct divine causation. Plurality is due to the divine will. God is abode of contradictory qualities. Plurality and contrariety are reconciled in the unity of God.

BIBLIOGRAPHY :


1 .Brahmansūtrāṇubhāṣya with Pradipa. Ed. Maganlal G. Shastri, Pub: Shuddhadvaita Sansad, Ahmedabad, 1980.

2 .History of Indian Philosophy. Vol.II, Jadunath Sinha, Central Book Agency, Calcutta, 1952.

3 .Māndukya Upaniṣad with the commentary of Śaṅkarā- cārya. Trans. Swami Gambhirananda, Advaita Ashrama, Calcutta, 3rd Impression, 1995.

4 .Māndukya Upaniṣad with Kārika. Swami Chinmayananda, central chinmaya Mission Trust, Mumbai, 1998.

5 .Māndukyopaniṣat with gauḍapādakārikā and with commantory of Goswai Puruṣottama, Pub: Puṣṭimārgakāryālaya, Bombay, V.S.1980.

6 .Tattvarthadīpanibandha. with Prakāśa Pub. Shri Vallabha Vidyapith, Kolhapur, V.S. 2039.

7 .Ten Principle Upanishads with Śaṅkarabhāṣya. Pub. Motilal Banarasi dass, Delhi, 1978.

# चर्चा

डॉ. यज्ञेश्वर शास्त्री

गो. श्या. म. : उपनिषद्ने कहा है "**पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते, पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते**" उपनिषद्की यह उक्ति जैसे ब्रह्मपर लागू होती है वैसे ही शून्यपर भी लागू होती है. "**शून्यमदः शून्यमिदं शून्यात् शून्यमुदच्यते, शून्यस्य शून्यमादाय शून्यमेवावशिष्यते**". और गौड़पादाचार्यने "**न सन्नासन् न सदसन् न चाप्यनुभयात्मकं चतुष्कोटिविनिर्मुक्तम्**'-'को तत्त्व स्वीकारा है. स्वीकारनेके बाद यह कहा है कि "**नैतद् बुद्धेन भाषितम्**". यह बात सत्य है कि बुद्धने ब्रह्म नहीं कहा. "पूर्णमदः पूर्णमिदम्" नहीं कहा था. मगर "शून्यमदः शून्यमिदं शून्यात् शून्यमुदच्यते, शून्यस्य शून्यमादाय शून्यमेवावशिष्यते" भगवान् बुद्धने कहा था. तो जो भी कुछ अजातिवादकी *आर्ग्युमेन्ट* हैं वह ब्रह्मवादपर भी लागू हो सकती हैं और शून्यवादपर भी लागू हो सकती हैं. इसमें इतना अधिक है कि जहां शून्यको परिभाषित किया है वहां इसी तरहसे किया है जिस तरह गौड़पादाचार्यने किया है कि "**प्रपञ्चोपशमम् अद्वितीयं शान्तम्**". शून्यको भी वे इसी तरह परिभाषित करते हैं. अद्वैतियोंने ब्रह्मको भी इसी तरहसे परिभाषित किया है. चक्कर इसमें बस यह आ जाता है कि श्रीपुरुषोत्तमजीने, जो यज्ञेश्वरशास्त्रीने बात कही, इसी तकलीफका अनुभव करते हुवे प्रायः किसी अन्यके ग्रन्थोंपर व्याख्या नहीं लिखी है. परन्तु इस प्रकरणपर श्रीपुरुषोत्तमजीने गौड़पादकी

व्याख्या लिखी है, यह सिद्ध करनेकेलिये कि गौड़पादकी कारिकाको देखते हुवे मायावाद नहीं आयेगा पर अविकृतब्रह्मपरिणामवाद आयेगा. और वहां श्रीशङ्कराचार्यसे अपना मतभेद भी स्थापित किया है कि गौड़पादकी इस तरहसे भी व्याख्या की जा सकती है यदि ऐसा चक्कर है तो. प्रयास कितना सार्थक है कितना नहीं यह दूसरी कथा है. परन्तु श्रीपुरुषोत्तमजीने ऐसा एक प्रयास किया है यह मैं इस सत्रमें आप विद्वज्जनोंके लक्ष्यमें लाना चाहता हुं.

इसके अतिरिक्त एक बात यह है कि केवलाद्वैती मायावादी हैं अथवा ब्रह्मवादी. हम 'मायावादी' इसलिये कहते हैं कि ब्रह्मसे सृष्टिकी व्याख्या ये मायाको बीचमें लाये बिना नहीं कर सकते हैं. अब वह माया सदद्विलक्षण अनिर्वचनीयत्वेन लाते हैं मगर ब्रह्मातिरिक्त मायाको लाते अवश्य हैं. और उसकी ब्रह्मातिरिक्ततासे आती द्वैतापत्तिका परिहार उसको सदसद्विलक्षण कह कर किया जाता है. माया हम भी लाते हैं परन्तु उसको सदसद्विलक्षणत्वेन ब्रह्मातिरिक्त न मानकर ब्रह्मात्मिका मानते हैं और इस प्रकार द्वैतापत्तिका परिहार करते हैं. तो पूर्णमदः और शून्यमदः की भाषाका यह *स्ट्रक्चर्* है. अब सचमुचमें वहां शून्य है अथवा ब्रह्म है वह तो ब्रह्म जाने या शून्य जाने. मगर यह स्पष्ट है कि अद्वैतियोंने स्वयं यह साफ शब्दोंमें कहा है कि ब्रह्मका जो लक्षण मायाके लक्षणमें अतिव्याप्त होता है.हम तो ऐसा नहीं मानते हैं कि **''मायायाअपि लक्ष्यान्तर्गतत्वात्''**. **''जन्माद्यस्य यतः''** यह ब्रह्मका लक्षण यदि मायामें अतिव्याप्त होता है तो और माया यदि लक्ष्यान्तर्गत है तो हम यह कहना चाहते हैं कि फिर आप मायावादी क्यों नहीं हो. तब

फिर हमारी तरह ही मायाको ब्रह्मात्मिका मानलो न! मायाको अब्रह्मात्मिका मत मानो.

**यज्ञेश्वर शास्त्री :** : ब्रह्मकी शुद्धता नहीं रहती है.

**गो. श्या. म. :** मायाको भी शुद्ध मान लो. ब्रह्मकी अशुद्धता निवृत्त हो जायगी.

**बी.आर्.शुक्ल :** तब मायाकी आवश्यकता ही नहीं है.

**गो. श्या. म. :** हम यह कहते हैं कि जब वह लक्ष्यान्तर्गत है तब मायाको भी शुद्ध मान लो. मायाको अशुद्ध माना है क्योंकि "**माया वयुनम्**". माया ब्रह्मकी इच्छा है, ज्ञान है. किन्तु ब्रह्मको ज्ञानात्मक भी तो माना ही है. तब फिर क्या समस्या है? गालिबका एक बड़ा अच्छा शेर है: "**हमसे खुल जाओ बवक़्ते मयपरस्ति एक दिन, वरना हम छेड़ेंगे रखके उज्रे-मस्ति एक दिन**". जब मायाको लक्ष्यान्त:पाति मानते हो तब हमसे खुल जाओ! निरुक्तकार जब 'माया'का अर्थ ज्ञानरूपा करते हैं. "**माया वयुनं बुद्धि:**" बुद्धिरूप मानते हैं. ब्रह्मको ज्ञानस्वरूप हम दोनों मानते हैं तब ज्ञानात्मिका ही मान लो न! अज्ञानात्मिका क्यों मानते हो? महाप्रभु श्रीवल्लभाचार्यका इस विषयमें बड़ा अच्छा दृष्टिकोण है. "**तं यथा यथोपासते तत् तथैव भवति**". तो महाप्रभु कहते हैं कि यदि नैयायिक ब्रह्मकी कर्ताके रूपमें उपासना करता है तो नैयायिकोंकेलिये ब्रह्म कर्ता ही है. हम यदि उसकी भर्ताके रूपमें उसकी उपासना करते हैं तो वह भर्ता है. हम यदि उसकी अभिन्ननिमित्तोपादानतया उपासना करते हैं तो वह हमारेलिये अभिन्ननिमित्तोपादान कारण है. "**युक्तय: सन्ति सर्वत्र भाषन्ते ब्राह्मणा: यथा, नैवमेतद् यथात्थ त्वं यदहं वच्मि तत् तथा, एवं विवदतां हेतो: शक्तयो मे दुरत्यया**". अपन दोनोंके बीचमें तो दुरत्यय शक्ति तो है पर वह

अपनी शक्ति नहीं है, ब्रह्मकी शक्ति है. अपन यह समझते हैं कि अज्ञानवश विवाद होता है. महाप्रभु कहते हैं कि ब्रह्मकी शक्तिके वश हम विवाद कर रहे हैं. **''निकलना न तुम चिल्मनसे कसम है तुमके चिल्मनकी लड़ाई आड़से देखा करो शेखो बिरहमन्की''**. अब उसने अपने आपको चिल्मन्में रखना चाहा है इसलिये शेख और बिरहमन् झघड़ रहे हैं. अब जब तक वह चिल्मन्से बाहर न आये तब तक हम झगड़ते रहें यह भी तो उसीकी शक्ति है! तो विवाद होना अच्छी बात है. कुछ पक्षग्रहण करना भी अच्छी बात है. इसीलिये महाप्रभु यह कहते हैं कि ब्रह्म दो तरहसे चिन्तनका अनुसरण करता है. चिन्तक जिस तरहसे ब्रह्मका चिन्तन करते हैं उस तरहसे चिन्तकोंमें युक्ति भी ब्रह्म प्रकट करता है. और जिस रूपमें ब्रह्मकी साधक साधना करते हैं उस प्रकारसे तो वह अपना स्वरूप ही वैसा प्रकट कर देता है. **''त्वं भावयोगपरिभावितहृत्सरोज आस्से: श्रुतेक्षितपथो ननु नाथ पुंसाम्, यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय''**. 'प्रणयसे' सुनकर आपको अजातिवाद याद आ जायेगा. हम यह कहेंगे कि आपमें वह भगवान् वैसी युक्तिका स्फुरण पैदा करेगा. महाप्रभुने बड़ी सुन्दर बात कही है कि यदि किसी साधकको ब्रह्मकी शून्यत्वेन उपासना करनी है तो ब्रह्म शून्यत्वेन प्रकट हो सकता है. यह वल्लभाचार्यका ब्रह्मवादी भाव बोल रहा है. पर वे कहते हैं कि शून्यमें यह सामर्थ्य नहीं हो सकती है कि उसकी ब्रह्मत्वेन कोई उपासना करे तो वह ब्रह्मतया प्रकट हो सके. ब्रह्ममें यह सामर्थ्य है कि वह शून्यतया प्रकट हो सके.

**यज्ञेश्वर शास्त्री :** : जब *कन्सेप्ट् ऑफ् रियालिटि* नागार्जुन स्पष्ट करता

है तो वह शून्य नहीं कहता है. ''शून्यमिति न वक्तव्यम् अशून्यमिति वा भवेद्, उभयं नोभयञ्चेति ... कथ्यते''. शब्दसे आप तत्त्वको कह नहीं सकते हैं.

**गो. श्या. म. :** स्वयं श्रीशङ्कराचार्य भी कहते हैं ''न शून्यं नचाशून्यम् अद्वैतकत्वात् कथं सर्ववेदान्तसिद्धिं ब्रवीमि''. हम क्या कहना चाहेंगे? स शून्यं सचाशून्यम् अद्वैतकत्वात् कथं सर्ववेदान्तसिद्धिं ब्रवीमि. अन्तर इतना है.

**रा.कि.त्रिपाठी :** ... अविद्याशक्ति मानते हैं. तो वहांपर अविद्याको ब्रह्मकी अपरा शक्ति कहा है. वहांपर कहा है कि ब्रह्मसे भिन्न माया नहीं है अपितु ब्रह्मका सामर्थ्य माया है. यदुपहित होकर ब्रह्म कारण बनता है. वही सामर्थ्य वह आकाशात्मना वाय्वात्मना परिणत होती है यह पञ्चभूत प्रकरणमें स्पष्ट कहा है जिसे आप कह रहे हैं. उसको पञ्चदशिकारने शक्ति ही माना है. हो सकता है कि वहां इन्हींका सिद्धान्त प्रतिपादित करना चाहा हो. परन्तु वह अद्वैतका ही सिद्धान्त है जिसमें अविद्याको एक सामर्थ्य माना है. वह ब्रह्मसे अपर नहीं है.

**गो. श्या. म. :** जड़की यह सामर्थ्य नहीं है कि वह ज्ञानको प्रकट कर सके किन्तु ज्ञानमें यह सामर्थ्य होती है कि वह अज्ञानको प्रकट कर सके. ''गाढं मूढोऽहमासं, न किञ्चिद् अवेदिषम्'' यह पथ्थरको प्रतीत नहीं होता है. हमको प्रतीत होता है.

**बी.आर्.शुक्ल :** मायाको ब्रह्मरूप स्वीकारना कठिन है. क्योंकि सच्चिदानन्द ब्रह्मकी सद्रूपता ही है. मायाकी सद्रूपता नहीं होनेसे वो मायाको ब्रह्मात्मिका नहीं मान सकते हैं. यदि मानते हैं तब तो 'माया'शब्दका व्यवहार करना ही अनुचित है.

**गो. श्या. म. :** हम तो मायाको ब्रह्मात्मिका ही मानते हैं.

**बी.आर्.शुक्ल :** तब फिर 'माया'शब्दका व्यवहार करनेकी आवश्यकता ही नहीं है.

**गो. श्या. म.** : शुक्लजी! एक बात सुनिये. नचेदं हैतुकं शास्त्रम्. शास्त्रमें यदि उसको 'माया' कहा जाता है तो हम उसको 'माया' कहते हैं. हम कोई उत्प्रेक्षा थोडे ही करते हैं आपकी तरह!

**बी.आर्.शुक्ल** : शास्त्रने कहा है तो उसको समझना भी पड़ेगा. शास्त्र क्यों 'माया' कहता है?

**गो. श्या. म.** : शास्त्र 'माया' कहता है तो हम 'माया' कहते हैं, 'अणु' कहता है तो 'अणु' कहते हैं, शास्त्र उसको 'कृष्ण' कहता है तो हम 'कृष्ण' कहते हैं और 'जड़' कहता है तो हम 'जड़' कहते हैं.

**बी.आर्.शुक्ल** : शास्त्रमें जब 'माया' और 'ब्रह्म' शब्दोंका प्रयोग यदि अलग-अलग है ता उनके अर्थोंको समझनेका प्रयास करना चाहिये.

**गो. श्या. म.** : उसको हम ऐच्छिक द्वैत कहते हैं.

**रा.कि.त्रिपाठी** : ऐसा है कि वहां पर "**सदेव सौम्येदमग्र आसीत्**" श्रुतिमें 'सत्'की व्याख्या करते हुवे कहते हैं कि सद्रूपता मायामें ब्रह्मकी है. और आकाशादिमें जो सत्प्रतीति हो रही है वह आकाश तक कैसे आयी? तो प्रथम सत्की प्रतीति मायामें हुई. मायाकी सत् प्रतीति स्वाभाविकी नहीं है. अस्वाभाविक है. इसलिये कि ...

**बी.आर्.शुक्ल** : सत्यता मायामें है ही नहीं. आप कैसी बात कर रहे हैं? मायायाः सदसदनिर्वचनीयत्वम्.

**वि. प्र. मिश्र** : यह प्रतीतिकी बात है. मेरा निवेदन केवल इतना है कि गोस्वामिचरणोंने जो बात कही है वह बिलकुल सही है. इस दृष्टिसे आप भी जगद्वादी कहे जायेंगे. हमारा आपपर यह कहना है. आप जो अपने आपको ब्रह्मवादी कहते हैं उस तरहसे हम भी ब्रह्मवादी हैं. यदि हम मायावादी हैं तब आप जगद्वादी हैं.

**गो. श्या. म.** : विन्ध्येश्वरीप्रसादजीसे मैं यह कहना चाहूंगा कि हमने ऐसा कभी नहीं कहा कि हम जगद्वादी हैं, अद्वैतिओंने यह स्वीकारा है इसलिये हम 'मायावादी' कहते हैं. हम तो कहते हैं कि हम ब्रह्मवादी हैं. फिर भी यदि आप हमारे ऊपर जगद्वादी होनेका आक्षेप लगाते हैं तो वह हमने नहीं कहा है. हम उस आक्षेपको स्वीकारने तैयार हैं क्योंकि **''तं यथायथा उपासते तथैव भवति''**. विवरणप्रमेयसङ्ग्रहकारने यह स्वीकारा है कि **''मायावादिनाम् अस्माकं मते...''** इसलिये कहते हैं. आक्षेपात्मना नहीं कहते हैं.

**पा.ना.द्विवेदी** : मायाया: लक्षणम् अन्यद् ब्रह्मणश्च लक्षणम् अन्यत्. एकमेवाद्वितीयं सच्चिदानन्दलक्षणं ब्रह्म. मायातु सदसद्भ्याम् अनिर्वचनीया शाङ्कराद्वैतमते उच्यते. यथा वाल्लभमते मायाया: स्वरूपं स्वीक्रियते तथा अत्र नास्ति. यदिच सदसदात्मिकैव माया भगवद्रूपा अङ्गीक्रियते तर्हि **''मायामेतां तरन्ति ते''** **''मायान्तु प्रकृतिं विद्याद् मायिनन्तु महेश्वरम्''** इत्यत्र **''भूयश्चान्ते विश्वमायानिवृत्ति:''** इति मायाया: निवृत्ति: कथम् उच्येत? येन हि ब्रह्मस्वरूपात् 'तरन्ति' इति उपपद्यते. नच ब्रह्मस्वरूपाया: मायाया: निवृत्ति: उपपद्यते तस्माद् ब्रह्मणो अपृथग् अनन्या, नतु अभिन्ना नतु भिन्ना अपितु अनन्या माया अतिरिक्ता अनर्थकारिणी स्वीकार्या इति शाङ्कराद्वैतिनां सिद्धान्त:.

**गो. श्या. म.** : इसमें हमारा अभिप्राय ऐसा है कि जहां **''मायामेतां तरन्ति ते''** कहा गया है वहां सर्वभवनसामर्थ्यरूपा मायासे तरणका उल्लेख नहीं है. व्यामोहिका माया एक भिन्न माया है.

**पा.ना.द्विवेदी** : : इति तु उत्प्रेक्षा.

**गो. श्या. म.** : उत्प्रेक्षा नहीं. व्यामोहिका मायाका वर्णन है अत: उसको भी स्वीकारते हैं, शास्त्रमें ब्रह्मसामर्थ्यरूपा मायाका वर्णन

निजमें अवस्थिति स्वीकारते हैं परन्तु निजकी उनमें अवस्थिति नहीं स्वीकारते.

एतावता मूलरूपमें पुनः विकारिताके प्रसक्तिकी आशंकाके निरसनार्थ पुनः **''भूतभृन्न च भूतस्थो ममात्मा भूतभावनो यथाकाशस्थितो नित्यं वायुः सर्वत्रगो महान् तथा सर्वाणि भूतानि मत्स्थानि इति उपधारय''** (भग.गीता.९।५-६) भी भगवान् कहते ही हैं. क्योंकि यहां एकांशेन सृष्टिके दृष्टिकोणसे कहना हो तो आकाशके उदाहरणद्वारा भगवान्ने अपनी अविकारि-अधिकरणतापर, अथवा विज्ञानभिक्षुद्वारा प्रस्तावित परिभाषाके अनुसार कहना हो तो आधारकारणतापर, भार दिया है. यथा वीणावेणुवाद्यावच्छिन्न आकाशमें षड्जादिस्वरोपेत संगीत प्रकट होता है परन्तु उसमें वीणावेण्वादि वाद्य न तो अपने स्वरूपसे च्युत होते हैं और न प्रकट हुवे षड्जादि स्वरोपेत संगीतकी पुनः वाद्यभावापत्ति ही शक्य है.

कार्याविर्भावार्थ उपादानके समग्रतया विकृत होनेपर, अर्थात् दुग्धदधि अथवा तक्रद्वारक नवनीततया विकृत होनेवाले दुग्धके जैसे उदाहरणोंमें आविर्भूत कार्य न तो उपादानवर्ति और न आविर्भावक कारण उपादेयवर्ति अनुभूत होता है. अतएव भगवान् अपनी परम्परया विकृतोपादानता **''मत्स्थानि सर्वभूतानि नचाहं तेषु अवस्थितः नच मत्स्थानि भूतानि''** (भग.गीता.९।४-५) ऐसे परस्पर विरोधाभासी विधानद्वारा प्रकट करते हैं. अन्यथा समग्रतया नहीं परन्तु एकांशेन परम्परया विकृतोपादानताके दृष्टिकोणसे देखना हो **''सर्वभूतानि... प्रकृतिं यान्ति मामिकां कल्पक्षये पुनः तानि कल्पादो विसृजामि अहम्''** (वहीं.७) इस और ऐसे अन्य वचनोंमें उसका भी निरूपण करते ही हैं. अन्यथा मूलावस्थामें प्रत्यापत्तिकी कोई व्याख्या ही शक्य नहीं रह जायेगी. क्योंकि अपनी अभिन्ननिमित्तसमवायिता तो भगवान् **''अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते''—''बहिरन्तश्च भूतानाम्... भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च''** (भग.गीता.१०।८,१३।१५-१६) इन वचनोंमें स्वीकारते ही हैं. इसे न्यायवैशेषिकाभिमत समवायितासे भिन्नजातीय समवायिता ही समझनी चाहिये. अस्तु!

पूर्वोक्त लौकिक दोनों उदाहरणोंमें तत्तत् कनककणों अथवा तत्तद् दुग्धबिन्दुओं को आविर्भावकक्रियाका कर्म नहीं बनाया जाता है किन्तु समग्रतया पिण्डीभूत कनककणसमुदायकी आभूषणतया अथवा समग्रतया एकराशिभूत दुग्धबिन्दुसमुदायकी ही दधितया परिणति दृष्टिगोचर होती है. अतः कारणता अंशरूप कणों या बिन्दुओं में वृत्तिमती नहीं होती किन्तु एकीकृत कणों या बिन्दुओं के समुदायमें अवभात होती है. अतएव ऐसे समुदाय धर्मितया प्रतीत होते हैं और आभूषणता या दधिभावापन्नता आकृत्यन्तर अथवा रूपान्तर रूपी धर्मपरिणाम होता है.

(३)किञ्चिद् व्युत्क्रम अर्थात् क्रमोपात्त विवर्तोपादानके बजाय यहां आरम्भवादको पहले ले लेना उचित होगा. क्योंकि इन तीनों प्रक्रियामें कार्याविर्भाव वास्तविक होता है तथा विवर्तवादके अनुसार कार्याविर्भाव अवास्तविक. सो इसके विपरीत आरम्भवादानुसारिणी उत्पत्तिप्रक्रियामें समग्रतया एकपिण्डीभूत तन्तुसमुदायकर्मिका आविर्भाविका क्रिया नहीं होती प्रत्युत तत्तत् तन्तुओंके आतान-वितानात्मक विन्यासद्वारा ही पटनिर्मिति दृष्टचर होती है. अतः कारणता तन्तुसमुदायनिष्ठा होनेके बजाय अनेक तन्तुओंमें वृत्तिमती होती है. सो पटरूप अवयवी अवयवोंमें ही समवायेन प्रकट होता है. अतएव स्वाभाविकतया वह पट अपने अवयवोंमें तादात्म्यभावापन्न भी लगता है.

यह, परन्तु, तन्तुपटको अवयवावयविबुद्धिसे निहारनेपर ही शक्य है. अन्यथा अंशांशिबुद्धिसे निहारनेपर अंशरूप अवयव तन्तुओंमें समवेत प्रतीत होंगे तथा पट उनका समवायी अंशी ही प्रतीत होता है. अब नैयायिकोंको चाहे वैसी प्रतीति न भी होती हो परन्तु ''देवदत्त पटमेंसे तन्तुओंको खींच कर बाहर निकालता है'' ऐसे वाक्यप्रयोगद्वारा सिद्ध होनेवाली पटाधिकरणताकी प्रतीतिके अनुरोधवश भी तन्तुओंको पटाश्रित मानना ही पड़ेगा. अतएव महाप्रभु कहते हैं **''तन्त्वाधारतया उत्पन्ने पटे यदि तन्तवो न प्रविशेयुः तदा पटे तन्तुप्रतीतिः न स्यात्''** (सुबो.२।९।३४). इसे और भी अधिक स्पष्ट करते हुवे महाप्रभु कहते हैं **''यथा ऊर्णनाभिः सृष्ट्यर्थम् एकाम् ऊर्णाम् उद्वमते**

तथा भगवानपि त्रिविधसृष्ट्यर्थं त्रीन् गुणान् उद्वमते, गुणरूपत्वात् च 'गुण'शब्दव्यवहारः. सद्रूपेण निर्गतं 'सत्त्वम्' इति उच्यते. केवलचिद्रूपेण निर्गतं क्रियाशक्तिप्रधानत्वाद्... 'रजः' इति उच्यते. आनन्दांशात् च तमः. ते भगवद्रूपाएव भगवता सृष्टाः, नच भगवति ते पूर्वं स्थिताः. तथा सति भगवदात्मकाः ते न भवेयुः. यथा कार्पासे नहि सूत्रं, तदेव हि पश्चात् स्वावयवैः पौर्वापर्यम् आपद्यमानं सूत्रताम् आपद्यते. अतएव भगवान् निर्गुणः'' (सुबो.२।५।१८) ऐसा प्रतिपादन करके नैयायिकवैशेषिकाभिप्रेत प्रक्रियाके अवलम्बन किया बिना भी अर्थात् कारणसमवेत कार्यको कारणात्मक मानते हुवे आरम्भवादानुसारिणी उत्पत्तिप्रक्रिया भी दिखलायी ही है. यहां हम देख सकते हैं कि महाप्रभु सत्कारणवाद-सत्कार्यवादकी चौखटमें जड़ी आरम्भवादिप्रक्रियाका अनुसरण ब्रह्मपर्यन्त कर रहे हैं. अतः आरम्भवादानुसारिणी उत्पत्तिप्रक्रियामें भी कार्य कारणवर्ति होता है परन्तु कारण कार्यवर्ति नहीं. फिरभी कार्यकी कारणात्मकताका निरसन नहीं किया गया है. अतएव प्रकृतिसाम्यावस्थारूपा सत्त्वादि-गुणत्रयी सच्चिदानन्दरूप भगवान्में समवेततया उत्पन्न होती है. फिरभी, सत्त्वमें चिदानन्दांशतिरोभाव, रजस्में आनन्दांशतिरोभाव तथा तमस्में सच्चिदंशतिरोभाव के कारण, अपने इन *विशिष्टरूपोंमे* यह गुणत्रयी उत्पत्तिसे पूर्व भगवान्में नहीं थी. अतिरोहितसच्चिदानन्दात्मक रूपमें तो अन्यथा सभी कुछ भगवान्में अपने प्राकट्यसे पूर्व भी रहता ही है ''**पुरुषएव इदं सर्वं यद् भूतं यत् च भव्यम्**'' (ऋक्संहि.१०।९०।१). अन्यथा असत्कार्यवाद गलेपतित होगा. और यही कारण है कि भगवान्ने ''**ये चैव सात्त्विका...**'' वचनमें इन गुणोंमें अपनी अनवस्थिति स्वीकारी है.

यद्यपि इस विषयका श्रीपुरुषोत्तमजीने पर्याप्त विवरण नहीं किया है फिरभी पूर्वोक्त इसी ऊर्णनाभिसदृश कार्यकारणभावके निरूपणके उपक्रममें वे सुस्पष्ट शब्दोंमें यह स्वीकारते हैं—

> ''ननु अत्र... मूर्तस्य ब्रह्मत्वसाधिका का वा उपपत्तिः? इत्यतः आहुः 'पुरुषः' इति,... पुरुषः क्रमेण सत्त्वादीन् गृह्णन् उत्पत्त्यादिकृद् इति उक्त्या निमित्तमात्रत्वशंकाव्युदासाय जन्मभिः

**निमित्तमात्रत्वपरिचायकैः न तावन्मात्रत्वेन किन्तु अभिन्ननिमित्तोपादानत्वेन क्रियाश्रयत्वरूपमपि कर्तृत्वम् इति एवं निगद्यते... ब्रह्मणि ऊर्णनाभिदृष्टान्तः उक्तः...तेन... अभिन्ननिमित्तोपादानत्वं भगवतो निरूपितम्."**

(सुबो.प्रका.२।५।१).

अतः श्रीअम्बिकादत्तजीका यह कहना कि "उपादानकारणकी अवधारणासे कार्यकारणकी सभी स्थितिओंकी व्याख्यामें कदाचित् विवाद उत्पन्न हो सकता है. लेकिन समवायी कारणकी अवधारणासे व्यवहारमें जहां सीधे-सीधे उपादानकी स्थिति नहीं बनती है वहां भी कार्यकारणसम्बन्धका अनुमान कर लेते हैं. तो समवायी कारणकी अवधारणा व्यापक है. और दूसरी बात कि समवायी कारणकी अवधारणामें कारणमें कार्यकी उत्पत्ति दिखाते हैं और उपादानकारणमें कारणसे कार्यकी परिणति बतलाते हैं" मैं इस विषयमें अधिक तो कुछ नहीं परन्तु महाप्रभुका एक उद्गार इस सन्दर्भमें अवश्य उद्धृत करना चाहूंगा — **"एकः कथम् अनेकधा सृष्टिं करोति इति आशंक्य आह 'अचिन्त्यानन्तशक्तेः तद् यद् एतद् उपपद्यते अतएव श्रुतौ भेदाः सृष्टेः उक्ताः हि अनेकधा'** " (त.दी.नि.१।४०).

महाप्रभुका चिन्तन मौलिक न हो कर श्रुतिप्रमाणमूलक केवल है. श्रुत्यादि शास्त्रोंमें ब्रह्मकी विरुद्धधर्माश्रयता निरूपित है वह तर्कागोचर होनेपर भी श्रुत्यादिशास्त्राभिप्रेतत्वेन महाप्रभुको अंगीकार्य बन जाती है. अतएव उपादान कार्यान्वित होता है परन्तु समवायिकारण कार्यान्वित नहीं होता, यह व्यवस्था न्यायवैशिषिकप्रस्थान तथा वेदान्तप्रस्थान के बीच सीमाविभाजकरेखाके रूपमें सोची जा सकती है परन्तु वाल्लभ वेदान्त अपने प्राणभूत सिद्धान्त विरुद्धधर्माश्रयतावादके अनुरोधवश ब्रह्मको कार्यरूप जगत्में अन्वित भी मानता है और अनन्वित भी!

द्रष्टव्य :

**" 'एतावदेव जिज्ञास्यं तत्त्वजिज्ञासुनात्मनो अन्वयव्यतिरेकाभ्यां यत् स्यात् सर्वत्र सर्वदा' तत्र सर्वं भगवान् कथम्? इति**

आकांक्षायाम् अन्वयव्यतिरेकाभ्याम् इति. सर्वत्र भगवतो अन्वयो अस्ति — 'घटः सन्' 'पटः सन्' 'भासते' 'प्रियम्' इति सर्वत्रैव एकस्य अन्वयः. अन्यथा एकशब्दानुवृत्तिः प्रतीत्यनुवृत्तिः न स्यात्. विशेषेण अतिरिच्यते इति व्यतिरेकः. घटादिभ्यः किम् अतिरिच्यते? घटस्तु घटाद् न अतिरिच्यते तथा पटः पटात् किन्तु सद् घटादपि अपि अतिरिच्यते पटादपि. एवं सर्वत्र यत् सर्वं सत् सर्वस्माद् अतिरिच्यते तद् ब्रह्मैव... विषये घटे सत् कारणं, सत् कार्यं, सद् आधारः, सद् आधेयं, सत्त्वेऽपि अतिरिक्तता. नहि मृदेव घटः तदा मृदवस्थायामपि घटप्रतीतिः स्यात् 'घट'शब्दप्रयोगः च. एवं कार्ये सर्वदा पञ्चधा भगवान् अन्वेति पञ्चधा च व्यतिरिच्यते. घटोहि पटादिभ्यो व्यतिरिच्यते, कारणादपि व्यतिरिच्यते, घटान्तरादपि व्यतिरिच्यते, आविर्भावतिरोभावात् च व्यतिरिच्यते, घटस्य हि आविर्भावः तिरोभावः च. अतः एकस्मिन् घटे आविर्भावतिरोभावाभ्यां दशधा भगवान् अस्ति. एवञ्च सर्वत्र दशलीलायुक्तो भगवान्. अनेन स्वरूपं भगवान्. देशप्रतीतिस्तु मायिकी. कालप्रतीतिस्तु लीलया. एवं देशकालवस्त्वपरिच्छिन्नं देशकालवस्तुस्वरूपं च अहमेवेति एतावदेव जिज्ञास्यम्''.

(भाग.सुबो.२।९।३५).

(४)ब्रह्मकी इस विरुद्धधर्माश्रयताकी प्राग्धारणाके वश जिन महाप्रभुने मायावादके लिये ''**केचिद् अत्र अतिविमलप्रज्ञाः श्रौतार्थबाधनं कृत्वा जगत्कारणतां दूषयन्ति परे हरौ**'' (त.दी.नि.१।७८) ऐसा उपहास किया है, उसी मायावादाभिमत विवर्तवादानुसारिणी प्रक्रियाका अनुसरण कर महाप्रभु ब्रह्ममेंसे अनेक प्रकारकी सृष्टिके अन्तर्गत एक प्रकार मायिक सृष्टिके भी प्रकट होनेका स्वीकार लेते हैं ''**तस्य लीलाम् आह 'रूप...' इति रूप-नाम-विभेदेन [१]यः क्रीडति, [२]रूपनामविभेदेन यो जगद् भूत्वा क्रीडति, [३]रूपनामविभेदेन यतो जगद्, इत्यनेन क्रीडायां स्वातन्त्र्यम् उक्तम्**'' (त.दी.नि.१।१) इसी तृतीय कल्पकी व्याख्या करते हुवे महाप्रभु कहते हैं ''**स्वप्नादिसृष्टिसंग्रहार्थम् आह 'महेन्द्रजालवत्**

सर्वं कदाचिद् मायया असृजत् तदा ज्ञानादयः सर्वे वार्तामात्रं न वस्तुतः'... मायया केवलया नतु स्वयं तत्र प्रविष्टः. एकः अनेकधा सृष्टिं कथं करोति? इति आशंक्य आह 'अचिन्त्यानन्तशक्तेः तद् यद् एतद् उपपद्यते अतएव श्रुतौ भेदाः सृष्टेः उक्ताः हि अनेकधा' अचिन्त्याः अनन्ताः शक्तयो यस्येति यदेतत् सर्वम् उक्तं तद् उपपद्यते... श्रुतौ नानाप्रकरणेषु सृष्टिभेदाः सहस्रशो निरूपिताः'' (त.दी.नि.१।३८-४०).

एतावता यह सिद्ध होता है कि सत्कारणनिष्ठ आविर्भावकशक्तिके द्वारा जहां कार्याविर्भाव प्रमावभात होता है, वहां पूर्वोक्त प्रकारत्रयीके अन्तर्गत किसी भी एक प्रक्रियाद्वारा कार्याविर्भाव सिद्धान्ततः शक्य होता ही है. जहां, परन्तु, कार्याविर्भाव भ्रमभात होता है वहां सद्रूपाधिष्ठानाश्रित आविर्भाकशक्तिके द्वारा कार्याविर्भाव माना नहीं जा सकता. क्योंकि उस शक्तिके द्वारा कार्याविर्भाव स्वीकारनेपर नियततया शुक्तिपर रजतावभासकी प्रसक्ति होगी. अन्यदेशकालावस्थित पुरोवर्तिदेश तथा प्रस्तुतकाल में आरोप्य जो सद्रूप तन्निष्ठ आविर्भाविका शक्तिके द्वारा स्वीकारनेपर भी, उदाहरणतया, रजतकारणनिष्ठ आविर्भाविका शक्तिके वश भी शुक्तिमें रजतोत्पत्ति स्वीकारनेपर, वह भी नियततया होनी चाहिये थी परन्तु ऐसी होती नहीं. इन्द्रिय-बुद्धि इत्यादि बाह्याभ्यन्तर ज्ञानकरणोंमें निष्ठ आविर्भाविका शक्तिके द्वारा भ्रमभात कार्याविर्भाव स्वीकारनेपर तो प्रमाज्ञानके उच्छेदकी ही आपत्ति उठ खड़ी होती है. इसी तरह विवर्तोपादानविषयक अज्ञानमें भ्रमभात कार्याविर्भाविका शक्ति स्वीकारनेपर प्राभाकरीय अख्यातिवाद गलेपतित होगा. सो तो ठीक परन्तु प्रत्येक अज्ञानविषयीभूत विषयके बारेमें नियततया भ्रमभात कार्याविर्भाव नियततया और प्रसक्त होगा. इसके बाद आता है सोपाधिक अन्यथाभानमें रही कार्याविभार्विका शक्तिका विचार. तदुदाहरणतया, ''पीतःशंखः'' या ''प्रवहमाणनौकास्थ पुरुषको नदीतटगत वृक्षोंके गतिशील होनेके'', भानोंमें विवर्तोपादानक कार्याविर्भावकी शक्ति स्वीकारनेपर यह खोजना होगा कि क्यों ऐसे अन्यथाभानवश कभी अनियततया निश्चयविपर्यास होता है तो कभी नहीं भी होता. प्रत्येक अन्यथाभान मतिविपर्यासका हेतु नहीं बनता होता. बनता होता तो वह नियततया ही होना चाहिये था.

हम जानते हैं कि प्रत्येक दृष्टिभ्रम मतिभ्रममें पर्यवसित नहीं होता. अन्यथाज्ञानमें भी, अतएव, ऐसी भ्रमभात कार्याविर्भावकशक्ति स्वीकारी नहीं जा सकती. अतएव अगतिकतया बुद्धिमें आकस्मिक तमोगुणके उद्रेक अथवा तज्जनिका व्यामोहकमाया के वश अनियततया भ्रमभात कार्याविर्भावकी अनियतोत्पत्ति स्वीकारनी पड़ेगी. वह सदुपादानक न हो कर पुरोवर्ति सदुपादानादि कारणकलापोंसे भिन्न मायाकृत ही होती है. यहां लक्ष्यमें रखना चाहिये कि वाल्लभ वेदान्तमें स्वयं माया भी सद्रूपा तथा भगवच्छक्तिरूपा होनेसे ऐसे कार्याविर्भावको 'मायोपादानक' भी कहा नहीं जा सकता है. अतः मायाको निमित्तकारणतया यहां स्वीकारा गया है और मायिक आभासको निरुपादानक ही, परन्तु निरधिष्ठानक नहीं. अतएव भ्रमाधिष्ठानको गौणप्रयोगवश 'विवर्तोपादान' कहा गया है. अतएव पूर्वोद्धृत वचनमें महाप्रभुने "**निर्लेपत्वाय आह एतादृशं जगद् 'यतः' इति. एवं ज्ञानेन मुच्यन्ते**" ( त.दी.नि.प्र.१।१ ) कहा है. यहां 'निर्लेप'पदका अभिप्राय मायावभासित कार्यके गुणधर्मोसे ब्रह्मका अवलिप्त न होना है. अतएव उसे जान लेनेपर व्यामोहकमायाद्वारा पैदा होते भ्रामक अनुभवोंसे मुक्ति मिल जाती है.

जिन-जिन मतवादोंके द्वारा ब्रह्मेतरतया प्रकृति परमाणु माया काल अदृष्ट अभाव या शून्यता आदि जगत्कारणतया निरूपित हुवे हैं उन्हें अन्यख्यातिरूप ही समझना चाहिये. यह वाल्लभ वेदान्तकी "**अयं प्रपञ्चो न प्राकृतो नापि परमाणुजन्यो नापि विवर्तात्मा नाप्यदृष्टादिद्वारा जातः नाप्यसतः सत्तारूपः किन्तु परमकाष्ठापन्नवस्तुकृतिसाध्यः तादृशोऽपि भगवद्रूपो अन्यथा असतः सत्ता स्यात्.**" ( त.दी.नि.१।२३ )दृढ़ अवधारणा है. अतएव यहां एकमेवाद्वितीय अपरिच्छिन्न सत्को विवर्तोपादान मान कर उसपर आरोपित ब्रह्मेतरका परोक्ष आभास ही वाल्लभ वेदान्त मानना चाहेगा. ब्रह्मेतरतया किसी भी वस्तुका परोक्ष या अपरोक्ष भास श्रुत्यादिशास्त्रैक गम्य परोक्ष अधिष्ठानपर व्यामोहकमायावभासित बौद्धिक प्रत्यय ही होता है. इसी तरह शास्त्रप्रामाण्यवश ब्रह्मका अभ्युपगम करनेवालोंको भी ब्रह्मसाक्षात्कार जब तक हो नहीं जाता तब तक जगत्में प्रतीत होते दुःख अभाव या ऐसे ब्रह्मस्वरूपाधिगतिमें प्रतिबन्धरूप प्रत्ययोंको

भी अन्यख्यातिके अन्तर्गत ही स्थान देना पड़ेगा. सो उसमें भी ब्रह्मको विवर्तोपादानरूप भ्रमाधिष्ठान माने बिना कोई गत्यन्तर दिखलायी नहीं देता.

अतः यह सिद्ध होता है कि वाल्लभ वेदान्तमें ब्राह्मिक सन्दर्भमें जैसे अविकृतपरिणामवाली कार्यकारणभाव प्रक्रिया, अर्थात् कारणसमवेत कार्यसत्ता, स्वीकृत है वैसे ही साक्षात् ब्रह्मसमवेत न होनेपर भी परम्परया अवान्तरकारणसमवेत कार्यके सन्दर्भमें ब्रह्मासमवेत कार्योका स्वरूप भी अंगीकार करना ब्रह्मकी विरुद्धधर्माश्रयताके अनुरूप ही है.

१.आरम्भवाद : निष्कर्षतया यह कहा जा सकता है कि देशकालस्वरूपतः अपरिच्छिन्न सच्चिदानन्दैकरस ब्रह्मके भीतर, आत्मद्वैधीभावापत्तिकी प्रक्रियाद्वारा, जब सर्वप्रथम सदंश चिदंश तथा आनन्दांशके अनन्त विभाग एकांशेन **''अथवा बहुनैतेन किं ज्ञातेन तवार्जुन विष्टभ्य अहम् इदं कृत्स्नम् एकांशेन स्थितो जगत्''** (भग.गीता.१०।४२) इस वचनमें प्रतिपादित हुवे हैं. यहां अंशांशिभाव जो प्रकट होता है वह इतरेतरात्मकता लिये हुवे ही होता है. यह मौलिकी आत्मविभाजनरूपा समवायिकारणता है.

२.अविकृतपरिणामवाद : इस अंशत्रयीमें जब पूर्ववर्णित प्रकारेण सदंशमेंसे सत्त्वगुण चिदंशमें रजोगुण तथा आनन्दांशमें तमोगुण प्रकट होते हैं वे कनककुण्डलन्यायेन अविकृतपरिणतिरूप उपादानोपादेयभाव लिये हुवे होते हैं. अतएव भगवान् कहते हैं **''अव्यक्ताद् व्यक्तयः सर्वाः प्रभवन्ति अहरागमें रात्र्यागमे प्रलीयन्ते तत्रैव 'अव्यक्त'संज्ञके...यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति अव्यक्तो 'अक्षर' इत्युक्तः तम् आहुः परमां गतिम्''** (भग.गीता.८।१८-२१) यहां पूर्वभावापत्ति भी दिखलायी है. इसी तरह कुण्डलमें जैसे कनकात्मकता गृहीत होती है वैसे प्राकृत नाम-रूप-कर्मवद् द्रव्योमें अव्यक्तरूपता गृहीत नहीं होती उसका कारण भी भगवान्ने **''सर्वभूतेषु येन एकं भावम् अव्ययम् ईक्षते, अविभक्तं विभक्तेषु तद् ज्ञानं विद्धि सात्त्विकं, पृथक्त्वेनतु यद् ज्ञानं नानाभावान् पृथग्विधान् वेत्ति सर्वेषु तद् ज्ञानं विद्धि राजसं, यत्तु कृत्स्नवद्**

एकस्मिन् कार्ये सक्तम् अहैतुकम् अतत्त्वार्थवद् अल्पं च तत् तामसम् उदाहृतम्'' (भग.गीता.१८।२०-२२) यों इन ज्ञानप्रकारोंके पार्थक्यकी विवेचनाद्वारा समझा ही दिया है.

ज्ञानके असात्त्विक प्रकारोंमें उन व्यक्त द्रव्योंकी अव्यक्तात्मकता गृहीत नहीं हो पाती.

३.विकृतोपादानवाद : इसके बाद गुणवैषम्यवशात् प्रकट होते अनकेविध महदादि पञ्चमहाभूतान्त विकारोंके आविर्भावमें अविकृतपरिणामप्रक्रिया नहीं परन्तु तत्त्वान्तरतापादिका विकृतोपादानकपरिणामरूपा प्रक्रिया प्रकट होती है.

४.विवर्तोपादानवाद : इन विकारोंके कारण मूल सद्रूपमें जो प्रागभावादिचतुष्टय दुःखरूपता हेयता आदि अपरोक्षतया प्रतीतिगोचर होते हैं उनका आविर्भाव-तिरोभावकी प्रकियावश अवधारण न होना अर्थात् सद्रूप अधिष्ठानपर बुद्धिकी राजस या तामस अवस्थाओंके अनुरूप मायाद्वारा प्रकट चाञ्चल्य या व्यामोह है. ऐसा कि जो सद्रूप अधिष्ठानको विवर्तोपादानवत् बनाता है. यहां प्रमुखतया अवधेय यही है कि प्रमारूप निश्चयात्मक ज्ञान तो यथार्थ अर्थात् स्वविषयरूप अर्थका अतिक्रमण किये बिना होनवाला ज्ञान होता है. अतएव ऐसे ज्ञानकी अर्थजन्यता अर्थसारूप्यद्वारा अर्थनिश्चायिका बन जाती है. अतएव ज्ञेयवस्तुके धर्मतया जो कारणरूपा 'भवति' है वही स्वजन्य कार्यमें ज्ञातृधर्मतया 'अनुभवति' के रूपमें अनुगत होती है. परन्तु मायिक व्यामोहजन्य ज्ञातृबुद्धिगत आभास पुरोऽवस्थित ज्ञेयवस्तुमें अनुभूत नहीं होता परन्तु अनुभासित तो होता ही है. इस अनुभासका अपरपर्याय 'आरोप' भी है. अतएव विवर्तोपादानके प्रसंगमें 'कार्याविर्भाव' पदका प्रयोग भी वस्तुतः गौण प्रयोग ही समझना चाहिये. उसके लिये तो 'कार्याविर्भास' कहना ही अधिक उपयुक्त होगा. यहां 'कार्य'को धर्मान्तर धर्म्यन्तर गुणान्तर या क्रियान्तर का भी उपलक्षण समझना चाहिये.

श्रीपुरुषोत्तमजीने प्रस्थानरत्नाकरके प्रस्तुत प्रसंगमें विवर्तोपादानकी परिभाषा

देते हुवे जो "**उपादानविषमसत्ताको अन्यथाभावो विवर्तः**" कहा उसके बारेमें या तो "परमतभाषया परः प्रबोध्यो भवति" न्यायेन ऊह करना चाहिये अथवा "**उपादानसत्ताविषमो अन्यथाभावो विवर्तः**" के अभिप्रायपरक लेना चाहिये. क्योंकि वाल्लभ वेदान्तमें "**कथम् असतः सद् जायेत? सत्त्वेव सौम्य! इदम् अग्रे आसीद् एकमेवाद्वितीयम्**"—"**नासतो विद्यते भावो नाभावो विद्यते सतः**" (छान्दो.उप.६।२।२, भग.गीता.२।१६) वचनोंके आधारपर 'सद्' और 'असत्' के अलावा सदसदात्मिका तृतीय कोटि अथवा सदसद्विलक्षणा चतुर्थ कोटि सर्वथा अप्रासंगिक होनेसे.

चर्चामें दूसरा एक मुद्दा समादरणीय श्रीबलिरामजीने यह भी छेड़ा कि घट अन्त्यावयवी होनेसे कपालद्वयमें ही समवेत होता है मृत्तिकामें नहीं. परन्तु वह्नितप्त शुष्क घटके ऊपर जलमिश्रित मृल्लोष्ठ स्थापित करके उसमें पुनः एक घटनिर्माण क्यों शक्य नहीं? और यदि वह शक्य मानते हैं तो घटकी अन्त्यावयविता निरस्त हो ही जायेगी. तब कपालद्वयके मृत्कणघटित मृल्लोष्ठमें ही घटपरिणाम्युपादानता या समवायिता स्वीकार लेनी आवश्यक होगी. क्योंकि एकके ऊपर दूसरे अपृथक्सिद्ध घटके निर्माणद्वारा घटद्वयाकृतिवाले एक नूतन महाघटके निर्माण करनेपर कपालद्वयसदृश दोनों घट अवयव ही सिद्ध होंगे ठीक उसी तरह जैसे दो पटखण्डोंको परस्पर जोड़ कर एक महापट निर्मित कर लिया जाता है.

हर सूरतमें श्रीअम्बिकादत्तजी तथा श्रीबलिरामजी की यह बात तो ठीक ही है कि वाल्लभ वेदान्तमें समवायकी अवधारणा न्यायवैशेषिकमतमें स्वीकृत उसके स्वरूपसे पर्याप्तरूपेण भिन्न प्रकारकी है. इसमें कोई सन्देह नहीं. ऐसी इस स्पष्टताके हेतु दोनों विद्वानोंके प्रति अपनी हार्दिक कृतज्ञताज्ञापन करते हुवे इस विषयका यहीं विराम करते हैं.

# ॥ विवर्तवादः ॥

विज्ञानवादिमते कारणताविचारः

**श्रीपारसनाथ द्विवेदी**

*

प्रस्थानरत्नाकरनिरूपितकरणकारणसामान्यस्वरूपस्य
श्रीमद्भागवतप्रस्थानदृष्ट्या परीक्षणम्

**श्रीविन्ध्येश्वरीप्रसादमिश्र**

*

श्रीपारसनाथ द्विवेदी



श्रीविन्ध्येश्वरीप्रसाद मिश्र



# विज्ञानवादिमते कारणताविचारः

डॉ. पारसनाथ द्विवेदी

वंशीधरं विमलपीतपटं दधानं
गोपाङ्गनाभिरनिशं विलसन्तमीशम्।
कृष्णं दयार्द्रनयनं सुखबोधरूपं
वन्दे परं निखिलसत्यजगत्स्वरूपम्॥

**विज्ञानवादिमतम्**

चतुर्षु वैभाषिक-सौत्रान्तिकादिषु बौद्धेषु अन्यतमो विज्ञानवादी. वैभाषिकाः यथायथं प्रत्यक्षानुमेय - बाह्यार्थवादिनः. सौत्रान्तिकाः अनुमेयबाह्यार्थवादिनः. योगाचाराः विज्ञानवादिनो अबाह्यार्थवादिनः विज्ञानमात्रसद्वादिनः. सर्वशून्यवादिनो माध्यमिकाः.

सर्वेषामेव बौद्धानां "**सर्वं शून्यं, सर्वं क्षणिकं, सर्वं स्वलक्षणं, सर्वं दुःखम्**" इति अभ्युपगमः. शून्यत्वं नाम: "**सद्, असद्, सदसद्, न सदसद् इति चतुष्कोटिरहितत्वं; भावानां स्वभावेन अनुत्पादो वा**" . "**सर्व शून्यम्**" इति बुद्धतात्पर्यं ते स्वमतानुसारं योजयन्ति. तत्र सर्वशून्यतावादिमाध्यमिकमतं निराचिकीर्षवो विज्ञानवादिनो वदन्ति—सर्वं शून्यतायां जगदान्ध्यप्रसङ्गाद् विज्ञानं स्वसंवेद्यं साकारं क्षणिकं सत्. तस्य विज्ञानस्य क्षणिकत्वे अनुमानम् "**विज्ञानं क्षणिकं, सत्त्वात्, अर्थक्रियाकारित्वात् घटादिवत्**" . यत् सत् तत् क्षणिकं, मेघमालावद्. एवं सत्त्वादेव लिङ्गात् सर्वे बौद्धाः घटादिष्वपि पदार्थेषु क्षणिकत्वं साधयन्ति. "**पृथिव्यादयो भावाः क्षणिकाः, सत्त्वात्, मेघमालावद्**" . सत्त्वम्=अर्थक्रियाकारित्वम्. तच्च क्रमाक्रमाभ्यां व्याप्तम्. स्थिरे वस्तुनि क्रमाक्रमौ न सम्भवतः.

अतः तौ क्रमाक्रमौ स्थायिनो भावाद् व्यावृत्तौ स्वव्याप्यं सत्त्वमपि व्यावर्तयतः. तस्मात् क्षणिकत्वसिद्धिः.

विज्ञानवादिमते बाह्यं ग्राह्यं न उपपद्यते, प्रमाणाभावात्. किं वर्तमानो अर्थो बाह्यो गृह्यते अतीतो वा. नाद्यो, वर्तमानेन ग्राह्येण चक्षुःसंयोगाभावात्. येन सह चक्षुरादिसंयोगः तस्य ग्रहणकाले नष्टत्वात्, भावानां क्षणिकत्वाभ्युपगमात्. क्षणिकत्वञ्च द्वितीयक्षणनाशप्रतियोगित्वं,यश्च गृह्यते तेन सह चक्षुरादिसन्निकर्षाभावात्. एवञ्च अन्येन चक्षुरादिसंयोगो अन्यस्य प्रत्यक्षम् इति न युज्यते. किञ्च बाह्यो ग्राह्यः परमाणुः वा अवयवी वा. न आद्यः, परमाणूनाम् अतीन्द्रियत्वात् बाह्यार्थप्रत्यक्षत्वानुपपत्तेः. न द्वितीयो, अवयवातिरिक्तस्य अवयविनः साधयितुम् अशक्यत्वात्. तस्मात् ग्राहकविज्ञानातिरिक्तस्य बाह्यार्थस्य न सिद्धिः अपितु ग्राह्य-ग्राहकस्वरूपा बुद्धिरेव स्वप्रकाशिता प्रदीपवत् स्वात्मानमेव ग्राह्यविषयाकारां प्रकाशयति. तथाच विज्ञानप्रकाशएव अर्थप्रकाशः. तत्रच बाह्यत्वं भ्रान्तमेव. तदुक्तम्

नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवः परः ।<br>
ग्राह्यग्राहकवैधुर्यात् स्वयं सैव प्रकाशते ॥<br>
सहोपलम्भनियमाद् अभेदो नीलतद्धियः ।<br>
भेदश्च भ्रान्तिविज्ञानैर् दृश्येतेन्दाविवाद्वये ॥

ग्राह्य-ग्राहकभेदावभासो भ्रमः एकस्मिन् चन्द्रे द्विचन्द्रत्वभानवत्.

**विज्ञानभेदः**

तच्च विज्ञानं द्विविधम् १. आलयविज्ञानं २. प्रवृत्तिविज्ञानञ्च इति. आ = समन्तात् लीयन्ते वासना यत्र तद् आलयं, तच्च विज्ञानम् 'आलयविज्ञानम्', 'अहम्-अहम्' इति उल्लेखि विज्ञानम्. नीलपीताद्याकारं विज्ञानं 'प्रवृत्तिविज्ञानम्'. आलयविज्ञानं समुद्रस्थानीयं प्रवृत्तिविज्ञानञ्च नानातरङ्गस्थानीयम्. तच्च साकारम्. आकाराः नीलपीतादयः. तएव ज्ञानाकारा

विषयाः. एवञ्च विज्ञानएव विषयि-विषयभावः. ते आकाराः बाह्यत्वेन असत्या आभ्यन्तरत्वे सत्याः. निराकारं विज्ञानं नास्ति. सौत्रान्तिकादिमते तु बाह्याएव अनुमेया नीलपीतादयो विषयाभावाः. ते च विज्ञाने स्वाकारान् अर्पयन्ति. अतएव तत्तद्विषयाकाराणि विज्ञानानि भवन्ति. विसिन्वन्ति स्वाकारेण निरूपणीयं कुर्वन्ति विज्ञानमिति विषयाः. एवञ्च बाह्या वा आन्तरा वासनारूपा वा विषयाः स्वाकारम् अर्पयन्ति. स्वाकारार्पकत्वमेव विषयत्वम्.

विज्ञानवादिनये बाह्यार्थस्य शून्यत्वात् रूप-विज्ञान-वेदना-संज्ञा-संस्काराख्येषु पञ्चसु स्कन्धेषु विज्ञानस्कन्धएव परमार्थः अन्ये बाह्यत्वेन भ्रान्ताः. एकस्मिन् विज्ञानएव प्रमातृ-प्रमाण-प्रमेय-प्रमितिविधाः कल्पिताः. बाह्यत्वेन असत्याकारयुक्तं विज्ञानं प्रमेयम्. तत्प्रकाशनं प्रमाणफलम्. प्रमेयप्रमाणशक्तिः प्रमाणम्. सौत्रान्तिकमते तु ज्ञाने अर्पितं बाह्यनीलादिसारूप्यं भासमानम् अनीलादिव्यावर्तकं प्रमाणम्. तच्च बाह्यम् अर्थं व्यवस्थापयति बिम्बमिव प्रतिबिम्बम्. प्रमेयन्तु बाह्यार्थएव अनुमेयः. तथाच सौत्रान्तिकवचनं — नहि वित्तिसत्तैव तस्य अर्थस्य वेदनायुक्ता. कुतः ? तस्या वित्तिसत्तायाः सर्वत्राविशेषात्. ज्ञानमात्रं हि सर्वं ज्ञेयसाधारणम्. तस्मात् तां वित्तिं स्वेन रूपेण सरूपां कुर्वद् बाह्यं वस्तु घटयेत् वित्त्या सह विषयभावेन योजयेत्.

विज्ञानवादिनस्तु वदन्ति — प्रमाणफलयोः भिन्नाधिकरणत्वे प्रमाणफल-भावो न स्यात्. नहि खदिरगोचरे परशौ पलाशे द्वैधीभावो दृश्यते. तस्मात् प्रत्यक्षादेः प्रमाणस्य तत्प्रकाशनफलस्य च एकाधिकरण्यं वाच्यम्. तच्च तयोः एकज्ञानस्थत्वेएव सम्भवति न अन्यथा. न तावत् कुण्डे बदरवत् तयोः अवस्थानं सम्भवति. ज्ञानस्यासंयोगित्वात्. तस्मात् तयोः तादात्म्यं मन्तव्यम्. तयोः वस्तुतो भिन्नयोः प्रमाण-फलयोः सतो ज्ञानस्य ऐक्यं न सम्भवतीति ज्ञाने एकस्मिन् काल्पनिकएव तयोः ज्ञानाद् भेदो वक्तव्यः. अतो विज्ञानवादिनये आलयविज्ञानसन्ताने वासनारूपेण पूर्वं विद्यमानस्यैव परिपाकवशात् नीलपीतादेः प्रवृत्तिविज्ञानरूपेण प्रकाशो जायते. एकालयविज्ञानस-न्तानवर्तिक्षणानां या प्रवृत्तिविज्ञानजननशक्तिः सैव 'वासना' उच्यते. तस्याः

प्रवृत्तिविज्ञानरूपकार्योपजननं प्रति यद् आभिमुख्यं तत् परिपाकः. तस्य परिपाकस्य प्रत्ययकारणं तत् सन्तानवर्त्तिपूर्वक्षणएव नतु बाह्यनीलादिसन्तानः. अतः आलयविज्ञानगत-वासनापरिपाकरूप-पूर्वक्षणप्रत्ययवशादेव उत्पन्नेषु प्रवृत्तिविज्ञानेषु कादाचित्कत्वोपपत्तौ तदर्थं बाह्यार्थतद्भावो व्यर्थः. आलयविज्ञान-सन्तानक्षणानां प्रवृत्तिविज्ञानरूप-कार्यजननवासनारूप-शक्तिभेदः कल्पनीयः. ते क्षणाः नानाकार्यकरत्वात् नानाशक्तिमन्तः परस्परं भिद्यन्ते. तद्भेदवशादेव नीलपीतादिकार्यभेदः इति. एवं बहुविधः शास्त्रार्थः विज्ञानवादिसौत्रान्तिकयोरिति विस्तरभयात् त्यज्यते. संक्षेपेण कारणताविचारप्रस्तावे तन्मतम् उदीरितम्. आलयविज्ञान-सन्तानपतितमेव असंविदितं संस्काररूपेण विद्यमानं ज्ञानं वासना. तद्वैचित्र्यात् प्रवृत्तिविज्ञानवैचित्र्यं नतु बाह्यविषयकृतं वैचित्र्यम्. एवञ्च पूर्वनीलादि विज्ञानवैचित्र्यात् वासानावैचित्र्यम्. ततश्च नीलादिज्ञानवैचित्र्यम् इत्येवम् अनादिपरम्परातः उभयोर् निमित्त-निमित्तिभावः इति. प्रवृत्तिविज्ञानमेव प्रपञ्चः तद्धेतुश्च आलयविज्ञानगतवासनैव. तत्त्वसाक्षात्कारे जाते तु प्रवृत्तिविज्ञानानाम् उपशमः. ततश्च आलय-वासनोपशमः. ततश्च विमलनिर्वासनविज्ञानसन्ततिः मोक्षः.

**वाल्लभमतम्**

वाल्लभाः वदन्ति. एकम् अद्वितीयं सच्चिदानन्दरूपं स्थिरं नित्यं पुरुषोत्तमाख्यं ब्रह्मैव जगत्कारणम्. तच्च जगदाविर्भाव-तिरोभावशक्त्याधाररूपम्. सर्वं जगत् तदाविर्भावादिशक्तिश्च सर्वम् एतद् भगवद्रूपमेव. भगवानेव स्वेच्छया लीलार्थं भक्तजनानुग्रहार्थञ्च सर्वरूपः सर्वरूपेण आविर्भवति तिरोभवति च. सएव निजस्वरूपस्य जगतः उपादानं निमित्तञ्च. एवञ्च पृथिव्यादिरूपेण भगवानेव आविर्भवति तिरोभवति. तत्र च उभाभ्यामेव उत्पत्तिः नाशश्च उपचर्येते. न वस्तुतः किञ्चिद् उत्पद्यते नश्यति वा. जगच्च सर्वं तेनैव रूपेण भगवति तिरोभूतं तदीक्षणाद् आविर्भवति. भगवद्रूपतया च अस्य जगतः सत्यत्वम् अङ्गीक्रियते. तेष्वेव भगवद्रूपेषु घटादिषु भगवतो व्यामोहिका मायाशक्तिः भगवदंशभूतान् जीवान् व्यामोहयितुं घटपटादिसदृशान् मिथ्याभूतान् जीवबुद्धौ विसृज्य प्रक्षिपति. व्यामोहिका मायाशक्तिः

भगवद्रूपभूतेष्वेव पदार्थेषु ''मम इदं, भगवद्भिन्नं, परकीयं, दुःखात्मकं, मोहमयं, सुखमयम्'' इत्येवं रूपं प्रतिभासं करोतीति भावः. अर्थाद् भगवद्रूपेष्वेव पदार्थेषु भगवद्रूपताम् आवृत्य तत्र अन्यख्यातिं कारयति येन संसारगर्तपातः. संसारश्च व्यामोहिकायाः आवरण-विक्षेपशक्तिद्वयरूपायाः प्रपञ्चो मिथ्याभूतः. तस्य भगवत्स्वरूपविज्ञानात् तिरोधानम् निवृत्तिर्वा. एतदेव आदाय श्रुतिस्मृतीतिहासादिषु मिथ्यात्वप्रवादः. जगत्तु संसाराद् अन्यद् भगवद्रूपमेव. तस्य पुरुषोत्तमाख्यस्य प्राप्तिस्तु अनन्यया भक्त्यैव. किञ्च तदनुग्रहरूपपुष्टचैव भवति. एवञ्च जगद्रूपेण स्वयं परिणमद् आविर्भवदपि ब्रह्म अविकृतमेव कुण्डलादिषु सुवर्णमिव अवस्थितं भवति. जीवोऽपि परमेश्वरांशत्वात् तदभिन्नएव वस्तुतः. अत्र मतेऽपि एकस्मिन्नेव भगवति प्रमाणप्रमेयादि विभागाः. विज्ञानवादिमते ते काल्पनिकाः. अत्रतु सत्याएव, प्रमाणप्रमेयादीनां वस्तुतो भगवद्रूपत्वात्. तथाच अत्र मते वस्तुकार्यकारणभावो लोकव्यवहारादेव. लोके आविर्भावके कारणम् इति आविर्भाव्ये कार्यम् इति व्यवहारात्. तथापि लोकम् अनुसन्धानैः विद्वद्भिः कार्यकारणभावो मीमांसितव्यएव. अत्र अतिसंक्षेपेण वाल्लभमतं वर्णितम्. अस्य उपपत्तिः, व्याख्यानं, विस्तारश्च यथाशास्त्रम् अवगन्तव्यम्.

**कारणताविचारः**

एवम् उभयोः मतयोः वर्णनं संक्षेपतः कृतम्. तत्र का नाम कारणता? इति विचार्यते. प्रस्थानरत्नाकरे प्रमाकरणस्वरूपनिरूपके कल्लोले करणकारणसा-मान्यस्वरूपनिरूपके आद्ये तरङ्गे ''**व्यापारवत् कारणं करणम्**'' इति अभ्युपगम्य ''**कारणत्वञ्च आविर्भावकशक्त्याधारत्वम्**'' इति उक्तम्. तथा अन्यथासिद्धिशू-न्यत्वविशिष्टस्य नियतपूर्ववर्त्तित्वस्य सुप्रसिद्धस्य न्यायादिसम्मतस्य कारणतालक्ष-णस्य खण्डनमपि कृतम्.

विज्ञानवादिनये भावानं क्षणिकत्वाद् ''**व्यापारवत्त्वम्**'' इति करणलक्षणस्य असम्भवात्. व्यापाराङ्गीकारे तत्काले भावस्य सत्त्वाभ्युपगमे क्षणभङ्गभङ्गापत्तेः. क्षणभङ्गे क्षणस्य कस्यापि व्यापारवत्ता न अभ्युपगम्यते.

तेषां क्षणानाम् उत्पत्तिरेव व्यापारः. निर्व्यापारएव पूर्वक्षणे उत्पन्नः उत्तरक्षणस्य कारणं भवति. उक्तञ्च

क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया।
भूतिर्येषां क्रिया सैव कारणं सैव चोच्यते॥
भूतिर्भवनं व्यापारः सैव कारणमुच्यते।

अतः प्रथमक्षणोत्पन्नो घटः तं प्रतीत्य द्वितीयक्षणे घटान्तरम् उत्पद्यते. द्वितीयक्षणश्च प्रथमक्षणस्य नाशक्षणः उत्तरस्य च उत्पत्तिक्षण इति सर्वएव क्षणाः उत्पाद-विनाशशालिनो भवन्ति. यथा तुला-दण्डः एकस्मिन्नेव क्षणे एकस्यां कोटौ नमति अपरस्याञ्च उन्नमति इति तथा बोध्यम्. ननु विज्ञानवादिभिः उक्तम् "**नित्यं सत्त्वमसत्त्वं वाऽहेतोरन्यानपेक्षणात्, नियामकाद्धि भावानां कादाचित्कत्वसम्भवः**" ( प्र.वा.३।३५ ). तदनुसारं नित्यसत्त्वासत्त्वप्रसक्तिनिवारकत्वमेव कारणत्वम्. अन्यथा कारणं विना कार्यस्य नित्यं सत्त्वं वा असत्त्वं वा स्यात्. अन्यस्य कस्यचित् कारणाद् भिन्नस्य अनपेक्षणाद् इति चेत् , न, आत्माश्रयात् निवारकपदेन निवारणकारणत्वस्य विवक्षणात्. तस्यैव विचार्यमाणत्वात्. सत्त्वासत्त्वयोः अन्यतरत्वस्य अनिर्वचनात्. 'अन्यतर'शब्देन सत्त्वोपगमे नाशकारणे अव्याप्तिः. असत्त्वोपगमे जन्मकारणे अव्याप्तिः. उभयानुगतम् अन्यतरत्वं जातिः उपाधिः वा नास्ति.

नच यदनभ्युपगमे यस्य तत्पूर्वसत्त्वप्रसङ्गः तत् तस्य कारणम्. मृदाद्यनभ्युपगमे घटादेः उत्पत्तेः पूर्वमपि सत्त्वप्रसङ्गः, तस्य घटादेः मृदादिः कारणं तद्भावश्च कारणत्वम् इति वाच्यं, ध्वंसे अतिव्याप्तेः. भावस्य घटादेः विनाशित्वानभ्युपगमे अनादित्वप्रसङ्गात्. खण्डनग्रन्थे श्रीहर्षैः एवंविधानि लक्षणानि बहूनि खण्डितानि. विस्तरभयात् न इह वितन्यते.

यद्यपि विज्ञानवादे ब्रह्माद्वैतवादे च कारणता अनिर्वचनीया. विज्ञानवादे बाह्यार्थस्य क्षणिकत्वात् भ्रान्तत्वात् तत्र कार्य-कारणभावो मिथ्यैव. अद्वैतवादे

च प्रपञ्चस्य मिथ्यात्वाद् घटादिनिरूपिता मृदादिनिष्ठा कारणता कल्पितैव.

वाल्लभमतेऽपि सर्वप्रपञ्चस्य ब्रह्मरूपत्वाद्, उत्पाद-विनाशयोः अभावात् कारणता कार्यता च व्यवहारसिद्धैव. तथापि व्यवहारसिद्धैव कारणता कार्यता मीमांसितव्या भवत्येव. नियताव्यवहितपूर्वसत्त्वं कारणत्वं तु केषाञ्चिदपि मते न विरुध्यते.

विज्ञानवादे क्षणिकत्वे भावानां स्वीकृतेऽपि पूर्वक्षणस्य हेतुम् अङ्गीक्रियते. वाल्लभमतेऽपि आविर्भावात् पूर्वसत्त्वम् आविर्भावकस्य अङ्गीक्रियतएव.

विज्ञानवादिमते कार्यं न कारणे कार्यात्मना कारणात्मना वा अवतिष्ठते. नच उभयोः तादात्म्यं समवायः संयोगादिः वा कश्चित् सम्बन्धः उपपद्यते. नवा असम्बन्धो अतिप्रसक्तेः. न सत्कार्यवादो नवा आरम्भवादः. नहि कश्चित् कार्यस्वभावः कारणे कारणस्य वा स्वभावः कार्ये. नवा कारणस्य अनुवृत्तिः कार्ये. अनुवृत्तिदर्शनं भ्रमएव. अपितु ''इदम् अस्मात् प्राक् सद्''इत्येवं बुद्धिविषयत्वादेव पूर्वक्षणस्य कारणत्वम् अङ्गीक्रियते. करणस्यापि **''व्यापारवत् कारणम्''** इति लक्षणं न तन्मते घटते. व्यापारक्षणस्य अस्वीकारात्. भूतिरेव तेषां मते व्यापारः. यदि द्वितीयक्षणे भावो अवस्थितः स्यात् तर्हि व्यापारवान् भवेत् नतु क्षणभङ्गवादे तत् सम्भवति. अतः साधकतममेव करणं स्वीकार्यम्. अतः प्रमितिं प्रति प्रमागतं प्रमेयसारूप्यमेव करणम्. उक्तञ्च **''अर्थेन घटयत्येनां नहि मुक्त्वार्थरूपताम्, तस्मात् प्रमेयाधिगतेः प्रमाणं मेयरूपता''** ( प्र.वा.३।३०६ ). ज्ञाननिष्ठाम् अर्थरूपतां विहाय अन्यत् किमपि अर्थेन प्रमेयज्ञानं न घटयति. अतः अर्थाकारतैव साधनम् अर्थज्ञानस्य. **''अर्थेन घटयत्येनां नहि मुक्त्वार्थरूपताम् अन्यः स्वभेदाद् ज्ञानस्य भेदकोऽपि कथञ्चन''** ( तत्रैव ३०५ ) ज्ञानगतार्थाकाररूपभेदाद् अतिरिक्तो भेदः इन्द्रियार्थादिकृतो नास्ति येन अन्यो ज्ञानभेदः स्यात्. अतः स्वगतार्थाकारो भिन्नो भिन्नएव नीलज्ञानं पीतज्ञानम् इत्याकारेण ज्ञानम् अर्थेन योजयति.

अयं भावो : बाह्यत्वेन भ्रमात् प्रतीयमानां घटादिपदार्थानमपि ज्ञानाकारतया ज्ञानरूपतया वस्तुतः तेषां बहिरभावाद् भावे वा तेषां विज्ञानेन सह सम्बन्धानिरूपणात् विज्ञानगतमेयाकारतैव सर्वमेयहेतुः. सा च मेयरूपता मेयावगतिक्षणात् पूर्वक्षणरूपा. अतो अव्यवधानेन नियतप्राक्क्षणवर्त्तित्वमेव अस्य मते कारणत्वम्. कार्यानुकूलशक्त्याधारत्वादिरूपं कारणत्वं न अत्र सङ्घटते, पूर्वक्षणस्य कार्यक्षणे नाशात्. शक्त-शक्ययोः सम्बन्धएव शक्तिः. सम्बन्धश्च उभयोः अत्र मते न सम्भवति. कारणक्षणे कार्यक्षणस्य अभावात् कार्यक्षणे च कारणस्य नाशात् कार्य-कारणयोः न कश्चित् सम्बन्धः. अवगतिक्षणात् पूर्वक्षणे सत्यपि करणादिसन्निधाने न तस्य साधनत्वम्, अव्यवहितत्वाभावात्. तथाच आलयविज्ञानसन्ताने नीलादिप्रवृत्तिविज्ञानोत्पत्तिक्षणाव्यवहितपूर्व-मेयाकारक्षणएव हेतुः. मेयाकारतापि पूर्वक्षणाभिन्नैव. 'क्षण'शब्देन भावः उच्यते. मेयसारूप्यपरिपाकक्षणात् पूर्वं तस्मिन् सन्ताने यदा कदाचित् पीतादिप्रत्ययाः ते अन्यथासिद्धाः. तथाच उक्तलक्षणं घटते.

विचित्रनीलपीतादि-वासनारूप-शक्त्याधारत्वं वा कारणत्वम्. सा वासनारूपशक्तिः संस्काररूपा नीलादिविज्ञानक्षणात् पूर्वक्षणरूपा परिपाकं प्राप्ता. एवञ्च ''**असाधारणं कारणं करणम्**'' इत्येव करणलक्षणम्. तच्च कारणमेव. असाधारण्यम् अव्यवधानेन कार्योत्पत्तिकत्वम् विज्ञानवादिनोऽपि अन्यबौद्धमतवद् प्रतीत्यसमुत्पादम् अङ्गीकुर्वन्ति. पूर्वक्षणं प्राप्यैव उत्तरविज्ञानक्षण-रूपं कार्यं जायते. नहि कार्य-कारणयोः कश्चित् प्राप्त्यतिरिक्तः तादात्म्यादिलक्षणः सम्बन्धः सम्भवति, भावानां स्वभावेन अनुत्पादात्. प्रतीत्य कारणं प्रत्ययं वा प्राप्य समुत्पद्यते यः सः 'प्रतीत्यसमुत्पादः'. प्रतीत्य समुत्पादनं वा 'प्रतीत्यसमुत्पादः'. हेतुसमुदायः 'प्रत्ययः' उच्यते. एकसन्ताने पूर्वक्षणं कारणं प्राप्य=प्रतीत्य क्षणान्तरं जायते. प्राप्तिश्च न संयोगो अपितु पौर्वापर्यरूपः. अस्मिन् सति भवति इदम् इति एवंरूपा. पूर्वक्षणे भावः उत्पद्यते द्वितीयं क्षणे च नश्यति. द्वितीयक्षणएव उत्तरक्षणजन्म-पूर्वक्षणनाशश्च इत्येवं क्रमः.

**प्रतीत्यसमुत्पादः**

सङ्क्षेपतः सुगतेन प्रतीत्यसमुत्पादः उक्तः. इदं प्रत्ययफलम् इति प्रत्ययोपनिबन्ध-प्रतीत्यसमुत्पादस्य सङ्ग्राहकं सूत्रम्. अस्य अर्थः — इदं कार्यं प्रत्ययस्य कारणसमवायस्य फलम्. कारणसमुदायादेव पुरोदृश्यमानं जगद् जायते इति भावः. अन्यं हेतुं प्रति अयते गच्छति इति 'प्रत्ययः'; इतरसहकारिमिलितो हेतुः 'प्रत्ययः'.

हेतूपनिबन्ध-प्रतीत्यसमुत्पादस्य सङ्ग्राहकं सूत्रम् : उत्पादाद् वा तथागतानाम् अनुत्पादाद् वा स्थितैव एषां धर्माणां धर्मता=धर्मस्थिता धर्मनियामकता प्रतीत्यसमुत्पादानुलोमता. अस्य अर्थो — हेतूपनिबन्धः एकैक-कारणसम्बन्धः. तथागतानां बुद्धानां मते धर्माणां=कार्याणां कारणानां च या धर्मता कार्यकारणभावरूपा सा उत्पादाद् अनुत्पादाद् वा स्थिता. 'धर्म'शब्देन उभयं कार्य-कारणञ्च विवक्षितम्. धत्ते इति धर्मः कारणं ध्रियत इति धर्मः कार्यम्. उत्पादानुत्पादौ अन्वयव्यतिरेकौ. धर्मता=धर्मस्थितिता. कार्यस्य धर्मस्य कारणानतिक्रमेण स्थितिः. 'स्थिति'शब्दात् स्वार्थिकः 'तल्'. धर्मनियामकता=धर्मस्य कारणस्य कार्यं प्रति नियामकता. अत्र 'धर्मता' इत्यस्य अर्थो धर्मस्थितिता धर्मनियामकता च. कारणानतिक्रमेण कार्यस्थितिः इति भावः. एषैव प्रतीत्यसमुत्पादानुलोमता. प्रतीत्य कारणं प्राप्य समुत्पादे अनुलोमता अनुसारिता या अस्ति सैव धर्मता कार्यकारणभावरूपा. सा च अन्वयव्यतिरेकसिद्धा. न चेतनः तत्र हेतुः. तथाच हेतुप्रत्ययसापेक्षो भावानां स्वभावेन अनुत्पत्तिः प्रतीत्यसमुत्पादः. सच द्विविधः. द्वावपि बाह्याध्यात्मभेदेन द्विविधौ.

१. बाह्यकार्ये हेतूपनिबन्धस्य उदाहरणम् — बीजादिफलपर्यन्तम्.

२. आध्यात्मिककार्ये तदुदाहरणम् — अविद्यादिदौर्मनस्यान्तम्.

३. बाह्ये कार्ये प्रत्ययोपनिबन्धस्य उदाहरणम् — बीजाद् अङ्कुरोत्पादे पृथिव्यादिपञ्चभूतानाम् ऋतोश्च समवायं प्राप्य अङ्कुरजन्म.

४. अध्यात्मकार्ये तदुदाहरणम् — पञ्चभूतानि, अहंप्रत्ययरूपविज्ञानधातुश्चेति षण्णां धातूनां समवायं प्राप्य कार्यस्य उत्पत्तिः.

एवं सौगतसमये विस्तरेण एतत प्रतिपादित दिङ्मात्रम इह दर्शितम्.

एवं चतुर्विधान् हेतून् प्राप्य चित्त-चैत्ता उत्पद्यन्ते. 'चित्तं' विज्ञानम्. 'चैत्ताः' सुखदुःखादयः. आलम्बन[१]-समनन्तराधिपति[२-३]-सहकारि[४]प्रत्ययाः चतुर्विधाः. यथा नीलाभासस्य प्रवृत्तिविज्ञानस्य नीलविषयएव 'आलम्बनप्रत्ययः'. तस्मात् तत्र नीलाकारता. पूर्वक्षणविज्ञानमेव 'समनन्तरप्रत्ययः'. तस्मात् तत्र बोधरूपता. आलोकादयः 'सहकारिप्रत्ययः'. तस्मात् तज्ज्ञाने स्पष्टता. चक्षुरादयो 'अधिपतिप्रत्ययः'. तस्मात् तत्र ज्ञाने रूपादिग्रहनियमः. एवं चतुर्विधप्रत्ययाः. उत्तरविज्ञानजनने हेतुः समनन्तरप्रत्ययः नीलादिवासनावान्. इतरे प्रत्ययाः सहकारिभूताः. ते च नीलादिविज्ञानात् पूर्वक्षणे नीलादिवासनां परिपाचयन्ति नीलादिविज्ञानजननोन्मुखतां प्रतिपादयन्ति. एवं चतुर्विधप्रत्यया नीलादिज्ञानजनने हेतुः. एवं प्रवृत्तिविज्ञानम् आलयविज्ञानाद् जायते. आलयविज्ञान्तु सकलवासनाबीजभूतं सतत प्रवहत् क्षणिकं पूर्व-पूर्वप्रवृत्तिविज्ञानम् आलयविज्ञानाद् अविच्छिन्नप्रतिक्षणं प्रवृत्तिविज्ञानम् उत्पादयत् जाग्रत्स्वप्नसुषु-प्त्यादिष्वपि अविरतं भवति प्रवृत्तिविज्ञानानि आलयविज्ञानं वासनाभिः संस्कारयन्ति तादृशवासनावासिताद् आलयविज्ञानात् तानि जायन्ते. आलयविज्ञानम् आत्मस्थानीयम्. प्रवृत्तिविज्ञानञ्च मनोवृत्तिरूपम्. प्रवृत्तिविज्ञान-मेव संसारः प्रपञ्चः. प्रवृत्तिविज्ञानस्य तत्त्वावबोधात् निरोधे सर्वप्रपञ्चोपशमः. तदुपशमाद् वासनानिवृत्तिः ततः सर्वोपप्लवोपशान्तिः. निर्वासनालयविज्ञानसन्ततिः मोक्ष इति सङ्क्षेपः.

तदेतन्मतं केवलतर्कमूलत्वात श्रुतिस्मृत्यादिप्रमाणासिद्धत्वात्, अनन्तक्षण-कल्पने प्रमाणाभावात्, सोऽयम् इत्यादि प्रत्यभिज्ञया स्थैर्यस्य सिद्धत्वात् क्षणिकत्वस्य बाधितत्वात् सर्वथा उपेक्ष्यम्. कार्यकारणयोश्च तादात्म्यसम्बन्धस्य कार्ये कारणानुवृत्तेः स्वीकारात् मृत्स्वभावेनैव घटादिप्रवृत्तेश्च सर्वत्रैव कार्ये कारणे च कारणस्य भगवद्रूपस्य अनुगतत्वात् प्रतीत्यसमुत्पादो न युक्तः. नच कार्यानुवृत्तिः कारणस्य अतिसादृश्यात् भ्रमः इति वाच्यम्, उत्तरकालिकबाधाभावात्, सादृश्यस्य यत्किञ्चिद् उभयानुगतसामान्यधर्मवत्त्वप्र-

योज्यत्वात्. क्षणिकपक्षे च कार्यकारणयोः अनुगतधर्मस्य अभावात्. किञ्च निर्व्यापारस्य कारणत्वायोगात् पूर्वक्षणस्य कारणत्वं न स्यात्. नच साकारज्ञानस्य स्वरूपं सम्भवति निराकारे ज्ञानएव बाह्यविषयकृताकारार्पणाद् उपपत्तेः त्वयापि निर्वाणे निर्वासन-निराकार-विमलविज्ञानधारा-स्वीकारात् अन्यथा वासनोपप्लव-सद्भावाद् अनिर्मोक्षापत्तेः. एवंरूपेण बहुविधानुपपत्तिभिः आकुलं मतम् इदं न आदरणीयं सन्मतिभिः.

वल्लभमते च सच्चिदानन्दस्वरूपात् स्वेच्छयैव तिरोहितसर्वगुणात् निर्गुणात् पुरुषोत्तमात् तत्स्वरूपाविर्भावशक्त्या तदीयेच्छया नियमितया सर्वं भगवद्रूपमेव जगत् सत्यं विविधम् आविर्भवति. नच एतत् केवलं तर्कमूलम् अपितु श्रुतिस्मृत्यादिभिः सम्मतं तदनुग्राहकतर्कसिद्धञ्चेति. भगवदिच्छानियमित-मेव. नच सर्वस्य सर्वरूपत्वात् सर्वत्र सर्वस्य सत्त्वात् क्वापि किञ्चिद् भवतु इति वाच्यम् ईश्वरेच्छया नहि सर्वस्य सर्वत्र आविर्भावः. घटादौ च पटादिरूपस्य तिरोभावात्. एवम् आविर्भाव-तिरोभावाभ्यां व्यवस्था साधीयसी. तादृक्शक्तिमत्त्वं कारणत्वम्. साच शक्तिः पूर्वं मध्ये पश्चाच्च परमेश्वरे अस्ति तदिच्छानियमिता इति दिक्.

॥ श्रीहरिः ॥

# प्रस्थानरत्नाकरनिरूपितकरणकारणसामान्यस्वरूपस्य श्रीमद्भागवतप्रस्थानदृष्ट्या परीक्षणम्

डो. विन्ध्येश्वरीप्रसादमिश्रः

यः सृष्ट्वा जगदञ्जसाऽञ्जितदृशा तत्प्राविशल्लीलया,
नानात्वं बिभराञ्चकार च पुनर्बिम्बात्मना भानुवत्।
यस्मिन्प्रोतमिदं प्रपञ्चपटलं सूत्रे यथा विद्रुमास्
तं श्रुत्यन्तसुरद्रुमं द्रुतिमतां चित्तेषु भान्तं नुमः ॥१॥

यत्पादपङ्कजमरन्दमधुव्रतानां नान्या रतिर्न च गतिर्भवतीह भूयः।
तं सृष्टिसर्जनविसर्जनपोषणानां सत्कारणं धृतगुणं हरिमानमामः ॥२॥

वेदान्तस्य तुरीयं प्रस्थानं यत्समन्वयेत्याख्यम्।
'रसभाष्यं' स्वोपज्ञं वेदव्यासस्य नैजसूत्राणाम् ॥३॥

श्रीमद्भागवतं तत्पुराणरम्यं तथापि सच्छास्त्रम्।
परमरसं मधुकाव्यं भगवद्रूपञ्च नूयते नित्यम् ॥४॥

वन्दामहे च शास्त्रीयां कामपि प्रत्नपद्धतिम्।
तांस्तांश्च सम्प्रदायस्थान् आचार्यान् भगवत्परान् ॥५॥

करणं करणं यच्चाकरणं कारणात् परम्।
सत्कार्यञ्चाप्यसत्कार्यम् अकार्यं तं प्रभुं नुमः ॥६॥

श्रीमद्वल्लभतत्त्वचिन्तनरसागाधे बुधै राधिते
तत्तद्बोधविबोधशोधनेपरे शुद्धाध्वबाधाहरे।
श्रीश्रीमत्पुरुषोत्तमैः शुचिधिया क्लृप्ते सुधास्फीतया
पद्धत्या रमते न कस्य हृदयं 'प्रस्थानरत्नाकरे' ॥७॥

अथ अस्माभिः अन्यत्रक्त[१] प्रमाणपुरस्सरं व्यवस्थापिते श्रीमद्भागवतमहापु-

राणस्य वेदान्तदर्शनोपयिक-सर्वसमन्वयाख्य-तुरीयप्रस्थानत्वे प्रख्यापिते च अस्य शास्त्रीयसन्दर्भदृष्ट्या अनतिसाधारणे महत्त्वेक्त[२], सम्प्रति सम्प्रतिपादनाय अयम् अवसरः, शुद्धाद्वैतवेदान्तस्य प्रथिततमविद्वदुत्तंस-श्रीमदाचार्यवंशसरसी- राजहंस-श्रीपुरुषोत्तमगोस्वामिसन्दृब्ध - 'प्रस्थानरत्नाकरा'ख्य सन्दर्भोद्धृत-'करणकारण-सामान्यस्वरूपस्य' स्वानुशीलितवर्त्मना निगदव्याख्यातश्रीमद्भागवतप्रस्थानदृष्ट्या समीक्षणपरीक्षणयोरिति विपश्चिदपश्चिमानां मनोमोदाय सङ्क्षिप्य किञ्चिद् उपपपादयामः.

ननु "वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि, समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयम्" (त.दी.नि.१।७) इति निबन्धकारिकया "व्यासस्य समाधिभाषा भागवतम्" (तत्रैव) इति च तद्वृत्त्या श्रीमदाचार्यवल्लभचरणैरपि प्रमाणत्वेन अस्य स्वीकारात्, पुरुषोत्तमगोस्वामिवर्येणापि स्वान्यसन्दर्भेष्विव 'प्रस्थानरत्नाकरे' श्रीमद्भागवतवचनोद्धृत्यैव स्वसिद्धान्त-दार्ढ्यसम्पादनाद्, भवदुक्ततथ्योपन्यासे को विशेषः इति चेद् ब्रूमः— श्रीमद्भागवते नैकान्ततः वाल्लभस्य शुद्धाद्वैतस्य अन्यस्य वा केवलाद्वैत-विशिष्टाद्वैत-द्वैताद्वैत-द्वैतादीनाम् एकमतस्यैव समर्थनं, तत्र-तत्र अधिकारिभेदानु-कूलं समेषां वेदान्तभेदानाम् आस्तिकषड्दर्शन्यामपि च नैकेषां, विशिष्य साङ्ख्य-योग-मीमांसादीनां स्वसिद्धान्तानुगुणम् अङ्गीकारात्. पुष्टिमार्गव्यतिरिक्त-भिन्नभिन्नसम्प्रदायाननुसरद्भिः श्रीचित्सुख-श्रीधरस्वामि-वीरराघव-शुकसुधीरूपगोस्वामिप्रभृतिभिः टीकाकृद्भिरपि स्वस्वसिद्धान्तानुकूलतया पुराण-शिरोमणेः अस्य व्याख्यानात् च इत्यलम् आनुषङ्गिकेन. प्रकृतम् अधुना अनुसरामः.

**श्रीपुरुषोत्तमकृत'करणलक्षणं' तद्विमर्शश्च :**

प्रस्थानरत्नाकरस्य प्रथमे प्रमाणपरिच्छेदे करणलक्षणं तावद् "व्यापारवदसाधारणं कारणं करणम्" इति न नव्यनैयायिकनयोक्तव्यतिरिक्तम्. अथ किमिदम् अत्र असाधारणत्वम्? इति आकाङ्क्षायाम् ईश्वरादृष्ट-दिक्कालादीनां कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात् साधारणकारणत्वं तस्मात्

लक्षणे अमीषां व्यावृत्यर्थम् 'असाधारणम्' इति पदम्. प्रस्थानरत्नाकरकृत्तु असाधारणत्वञ्च अत्र कार्योत्पादनकाले तदनुकूलव्यापारातिरिक्तव्यापाररहितत्वम् इति असाधारणत्वं व्याकरोति. अनेन ईश्वरेच्छादीनाम् इतरव्यापाररहित्याभवात् न तत्र अतिव्याप्तिः. पूर्वोक्तव्यापारलक्षणं ''तज्जन्यत्वे सति तज्जन्यजनकत्वम्''अपि खण्डयति, समवायादौ तद्व्यभिचारप्रसक्तेः. समवायस्तु नित्यो जन्यत्वाभावादिति एतन्मते ''कारणेन कार्यजनने यदन्तरा अवश्यम् उपयुज्यते स व्यापारो. यथा तन्तुद्वयसंयोगः तुरीतन्तुसंयोग, इन्द्रियाणां प्रसङ्गे विषयेन्द्रियसंयोगश्चेति स्वप्रस्थानदिशा परस्ताद् वक्ष्यते अस्य यौक्तिकत्वम् अयौक्तिकत्वं वा पूर्वम् अत्र श्रीमद्भागवते करणत्वप्रसङ्गा उन्नीयन्ते.

श्रीमद्भागवते 'करण'पदमिदं स्पष्टतया अस्मिन् अर्थे न उपयुक्तं किन्तु सृष्टिप्रक्रियानिरूपणे भगवतः तात्त्विकस्वरूपनिरूपणे वा इन्द्रियसमष्ट्युपलक्षकत्वेन व्यवहृतम्. यथा तृतीये स्कन्धे कपिल-देवहूतिप्रसङ्गे :

महत्तत्वाद्विकुर्वाणाद् भगवद्वीर्यसम्भवात्।
क्रियाशक्तिरहङ्कारस्त्रिविधः समपद्यत॥
वैकारिकस्तैजसश्च तामसश्च यतो भवः।
मनसश्चेन्द्रियाणाञ्च भूतानां महतामपि॥
सहस्रशिरसं साक्षाद् यमनन्तं प्रचक्षते।
सङ्कर्षणाख्यं पुरुषं भूतेन्द्रियमनोमयम्॥
कर्तृत्वं कारणत्वञ्च कार्यत्वञ्चेतिलक्षणम्।
(भाग.पुरा.३।२६।२३-२६)

इत्यत्र करणग्रामस्य बुद्धि-बुद्धीन्द्रियादिरूपस्य तैजसाद् अहङ्काराद् अभिव्यक्तिः उपवर्णयद्भिः श्रीमद्भागवतकृद्भिः

वैशारदी सातिविशुद्धबुद्धिर् धुनोति मायां गुणसम्प्रसूताम्।
(श्रीभाग.पुरा.३।२६।२३-२६)

इन्द्रियाणीन्द्रियार्थेभ्यो मनसाऽऽकृष्य तन्मनः।
बुद्ध्या सारथिना धीरः प्रणयेन् मयि सर्वतः॥

( तत्रैव ११।१०।१३ )

न मन्यते वस्तुतया मनीषी...

( तत्रैव ११।१४।४२ )

एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम्।
यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम्॥

( तत्रैव ११।२८।।३२ )

इत्येवमादिभिः श्लोकैः शुद्धबुद्ध्यादिकरणग्रामस्यापि प्रमात्मके भगवत्तत्वज्ञाने प्रकृष्टोपकारकता अभ्युपगता. प्रकृष्टत्वञ्च अत्र, यद्व्यापारानन्तरं फलनिष्पत्तिः तत् तत्त्वं. यदुक्तं शाब्दिकैरपि ''क्रियायाः फलनिष्पत्तिर्यद्व्यापाराद-नन्तरं, विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतमुक्त[३]'' इति. किन्तु एतद् व्यावहारिक्यामेव सत्तायां न पारमार्थिक्यामिति प्रायशः सर्वत्रापि भागवतकृतां द्वैपायनर्षीणाम् अभिमतिः. भगवानेव वस्तुतो अद्वयज्ञानम् ''वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्, ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'' ( तत्रैव १।२।११ ) इति ग्रन्थोपक्रमएव कक्षीकारात्. तच्च ज्ञानं निरपेक्षं करणादिसामग्र्यनधीनम्. ''नैतन्मनोविशति वागुत चक्षुरात्मा, प्राणेन्द्रियाणि च यथाऽनलमर्चिषिः स्वाः'' ( तत्रैव ११।३।३६ ) ''ज्ञानं स्वतः'' ( तत्रैव ११।४।४ ) इति वचनैरपि च उक्त्वात्. किञ्च, ''ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरःपुमान्, दृश्यादिभिः पृथग्भावैर् भगवानेक ईयते'' ( तत्रैव ३।३२।२६ ) इत्यत्र ''ज्ञानमेकं पराचीनैर् इन्द्रियैर् ब्रह्म निर्गुणम्, अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा'' ( तत्रैव ३।३२।२८ ) इत्यत्र च अन्यत्रापि, ज्ञाने करणादीनां व्यावहारिकत्वस्यैव पर्यनुयोगात्. तथाच, ''त्वमकरणः स्वराडखिलकारकशक्तिधरः'' ( तत्रैव १०।८७।२८ ) इति अस्मिन् वेदस्तुतिवचनेऽपि आपाततो यद्यपि ब्रह्मणो निर्गुणस्वरूपे न इन्द्रियाणाम् अपेक्षा प्रसक्तिः वा इति उच्यते तथापि पदशक्तिमहिम्ना 'अखिलकारकशक्ति-धर' इति विशेषणोपन्यासेन भगवतएव समग्रक्रियाश्रयित्वम् अथच कर्तृत्वं, करणादीनां तद्विवर्त्तमात्रत्वञ्च अङ्गीचक्रुः श्रीमद्भागवतप्रणेतारः. तद् यथाह शाब्दिकधुरन्धरो भर्तृहरिरपि ''निमित्तभेदाद् एकैव भिन्ना शक्तिः प्रतीयते, षोढा कर्तृत्वमेवाहुः तत्प्रवृत्तेः निबन्धनम्'' ( वाक्यप.३ साधनसमुद्दे.३६ ) इति.

केवलाद्वैतवेदान्तस्य 'तत्त्वप्रदीपिका'ख्यसन्दर्भकर्त्तारः श्रीचित्सुखाचार्याअपि तात्त्विकदृशा अद्वयज्ञानात्मके ब्रह्मणि करणत्वं न शक्यसम्भवम् इत्येव व्यवस्थापयामासुः[क्र]. श्रीमद्वल्लभाचार्यचरणैरपि भङ्ग्यन्तरेण इदमेव निरणायि श्रुतिस्तुतौ 'त्वमकरणम्'इति पूर्वोदाहृतपद्यव्याख्याने. यथा :

> "किञ्च, अखिलकारकशक्तिधरस्त्वम्. सर्वेषां कारकाणां षण्णामपि आधारादिशक्तयः तेषां शब्दाश्रयत्वाद् अनित्यत्वाज् जातिवन् नियतशक्तिमत्वे कार्यान्तरानुदयात् सर्वशक्तिमत्त्वे एकेनैव सर्वकार्यसम्भवात् शुद्धब्रह्मत्वापत्तेः अनेककृतिवैयर्थ्यात् च, सर्वाः शक्तीः कारकाणां भगवानेव सर्वदा बिभर्ति. तत्तदवसरे तां-तां तत्र स्थापयतीति मन्तव्यम्"(भाग.पुरा.सुबो. १०।८७।२८)

इत्यत्र 'तत्तदवसर'इति पदयोगेन, "कदाचित् ता नापि स्थापयति, प्रमातुः ब्रह्मावबोधात्मिकायां पारमार्थिक्याम् अवस्थायाम्. कुतः ? 'स्वराड्'इति मूलस्थपदशक्त्या 'स्वेनैवाद्वयज्ञानरूपेण राजत" इत्यभिप्रायाभिव्यञ्जनाद् इति प्रकारान्तरेण अस्मदभिमतं सुतरां प्रमाणीभवति. इत्थं प्रस्थानरत्नाकरोक्तं लक्षणम् अव्याप्तं, व्यवहारएव चरितार्थत्वात् तत्त्वस्य च युगपद्व्यवहारपरमार्थोभयसङ्गतत्वादिति प्रतीमः.

किञ्च, "कार्योत्पादनकाले तदनुकूलव्यापारातिरिक्तव्यापाररहितत्वम्"- इति असाधारणत्वं यद् आम्नातं तदपि चिन्त्यम्. वृक्षच्छेदनकार्ये कुठारस्य छेदनकार्यानुकूल-व्यापारातिरिक्त-कर्तृश्रमकरत्वरूप-व्यापारान्तरशालित्वात् खट्-खटादिरवेण तच्छाखास्थित-विहङ्गमजन-त्रासकरत्वाच्च. तस्माद् भागवत-प्रस्थानम् अनुसृत्य "अन्ययोगव्यवच्छित्या कार्यजननप्रतिभासकत्वं तदनुकूल-व्यापारयुक्तत्वञ्च करणत्वम्" इति नूत्नं, व्यवहारे परमार्थे च उभयत्र निर्बाधं तल्लक्षणम् उद्भावनीयम्.

अथ अस्य सङ्गतिः. वस्तुनः कार्यत्वं न पारमार्थिकम्

अप्रच्यवमानपरतत्त्वस्य विवर्त्तमात्रत्वाद्. यथा हि ग्रन्थः —

नास्य कर्माणि जन्मादौ परस्यानुविधीयते।
कर्तृत्वं प्रतिषेधार्थं माययाऽऽरोपितं हि तत्॥

(भाग.पुरा.२।१०।४५)

दृश्यतेऽसन्नपि द्रष्टुरात्मनो नात्मनो गुणः।(भाग.पुरा. ३।७।११)

विश्वोद्भवस्थाननिरोधकर्म ते ह्यकर्त्तुरङ्गीकृतमप्यपावृतः।
युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मनि व्यतिरिक्ते च वस्तुतः॥

(तत्रैव ५।१८।५)

तस्मादिदं जगदशेषमसत्स्वरूपम्। (तत्रैव १०।१४।२२)

संसृतिर्न तु वास्तवी (तत्रैव ११।११।२)

नानात्वभ्रममात्मनि (तत्रैव ११।११।२१)

तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः।

(तत्रैव ११।२८।७)

मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि।

(तत्रैव १२।४।२५)

इत्यादिभि: ग्रन्थोक्तवचनसहस्रप्रामाण्यात्. तस्मात् लोके येन करणेन यस्य कार्यस्य जननं दृश्यते तत्प्रातिभासिकमेव. तथापि ''न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनन्ति'' (तत्रैव ५।११।१) इति न्यायेन अविद्वद्दशायां व्यवहारस्यापि अपलापो न युज्यते तत्र च कारणकार्यनियमः स्वीकरणीयएव, तदभावे सर्वेभ्यः सर्वेषाम् उत्पत्तिप्रसङ्गात्. शास्त्रमपि एतत् स्वीकरोत्येव ''महत्तत्त्वाद्विकुर्वाणाद् भगवद्वीर्यसम्भवात्, क्रियाशक्तिरहङ्कारस्त्रि-विधः समपद्यत'' (तत्रैव ३।२६।२३) इति, यथाऽत्र महत्तत्त्वादेव त्रिविधस्य अहङ्कारस्य उत्पत्ति: न अन्यस्य इति अन्ययोगव्यवच्छेदे सति जन्यजनकनियमस्य प्रतीति: तथा तदुत्तरप्रपञ्चेऽपि अस्मिन् जगति यदवश्यम्भाविना स्वजातीय-विजातीयव्यतिरेकिणा व्यापारवता कारणेन कार्यस्य उत्पत्तिप्रतीति: तत् तस्य कारणम् इति सङ्गमनीयम्. व्यापारत्वञ्च वयं नैयायिकादिसम्मतमेव आद्रियामहे.

**कारणलक्षणं तत्र शक्तिसङ्कल्पना :**

अथ किं नाम कारणत्वम्? इति विमर्शे नैयायिक-मीमांसकयोः "अनन्यथासिद्धनियतपूर्ववर्तित्वम्" इति, "कार्यानुकृतान्वयव्यतिरेकित्वम्" इति च प्रसिद्धलक्षणद्वयम् अन्यच्च अवान्तराणि लक्षणानि निरस्य भगवति जगत्कर्त्तरि आविर्भाव-तिरोभावौ इति शक्तिद्वयम् उद्भाव्य स्वाभिमतसिसाधयिषया गोस्वामिवर्यः विशिनष्टि :

> "कारणत्वञ्च आविर्भावकशक्त्याधारत्वम्. उपादानस्थं कार्यं या व्यवहारगोचरं करोति सा शक्तिराविर्भाविका. आविर्भावश्च व्यवहारयोग्यत्वं तिरोभावश्च तदयोग्यत्वम्. ते द्वे यद्यपि भगवतः शक्ती, "आविर्भावतिरोभावौ शक्ती वै मुखैरिणः", "मयूराश्चित्रिता येने"ति च वाक्याद् आविर्भावयतीत्याविर्भाव इत्यर्थात्. तथापि भगवता विभज्य तत्र-तत्र स्थापितेइति तस्य-तस्य तत्तदाविर्भावकत्वात् तत्तच्छक्तित्वम् उच्यते. तथात्वञ्च एकादशस्कन्धे उक्तम् "अब्जयोनिम्..." उपक्रम्य "विश्लिष्टशक्तिर्बहुधेव भाति बीजानि योनिं प्रतिपद्य यद्वद्" इति कथनात्. एवञ्च व्यवहारे यत्र यदाविर्भाविका शक्तिः तत् तस्य कारणं, यस्य च यतो व्यवहारयोग्यत्वं तत्तस्य कार्यम्. इदञ्च यथा तथा 'आविर्भावतिराभाववादे' प्रपञ्चितमस्माभिः. एतेनैव कुलालवितुरपि न कारणतेति सिद्धं फलोपधानाभावात्" इति.

अस्य मूलन्तु श्रीन्महाप्रभुवचनेष्वेव. यथा

> "अभावास्तु अस्मन्मते तिरोभावातिरिक्ता न भवन्तीति तस्य च भगवच्छक्तित्वात्... उद्भूतस्य सर्वस्य तिरोभावप्रापणे यत् तिरोभूतं न भवति. तिरोभावः तदाश्रयो वा, अंशभेदेन वा तदपि अहमस्मि इत्यनेन सर्वाएव क्रियाः तद्विषयाश्च अहम् इति ज्ञापयति"इति.

(भाग.पुरा. २।९।३३ सुबोधिनी)

श्रीपुरुषोत्तममहाभागः स्वसम्प्रदायाभिमतजगत्सत्यत्वरूपब्रह्मवादसिद्धान्तं व्याचक्षाणएव महता अभिनिवेशेन अत्र अन्येषु च प्रकरणान्तरेषु सिद्धान्तम् इमं प्रसाधयाम्बभूव. तेषु 'सृष्टिभेदवादः' 'आविर्भावतिरोभाववाद'श्चेति ग्रन्थद्वयं विशिष्य सुधीभिः अवलोकनीयम्. तत्र, तत्तद्वादिपक्षतः प्रश्नान् उत्थाप्य तेषां समाधानानि कौशलेन साधयता अनेन विदुषा श्रीमद्भागवतस्य तादृशान्यपि वचनानि, येषु विस्पष्टम् अस्य जगतो मिथ्यात्वम् अभ्युपगम्यते, व्याख्याभेदेन स्वाभिमतत्वेन साधितानि. यथा :

> तदपि मतान्तरसृष्टिरूपं तदभिमतमेव आदाय वैराग्यार्थम् उच्यते, नतु सृष्टिमात्रमिथ्यात्वाय. ... अतो अत्रापि वैराग्यार्थं मतान्तरसृष्ट्यनुवादः पूर्ववेदेवेति न चोद्यावकाशः. ... एवं सति एकोनविंशे यदुक्तं ''त्वय्युद्धवाश्रयति'' इत्यनेन तदपि ''मायामात्रम् इदं ज्ञात्वा'' इति उपक्रमोक्तसन्न्यासाङ्ग-वैराग्यसिद्ध्यर्थं पूर्वोक्तसृष्टिं लक्षीकृत्यैव उक्तम् अतो अत्रापि न चोद्यावकाशः. (सृष्टिभेदवादे पृ. १०५-१०७)

इत्यादीनां यथायथं विवेचनन्तु बृहन्निबन्धस्य विषयत्वम् अपेक्षते. इह विस्तरभिया न तद्विषये बहूच्यते किन्तु श्रीमद्भागवतोक्तं 'ब्रह्मवादस्य' न तथात्वं यादृशम् एभिः व्याख्यायते इति सङ्क्षेपेण सप्रमाणं किञ्चिद् उपपाद्य प्रक्रान्तएव विवरीतुम् इष्यते.

श्रीमद्भागवते ''सुदुश्चरामिमां मन्ये योगचर्यामनात्मनः, यथाञ्जसा पुमान् सिद्ध्येत् तन्मे ब्रूह्यञ्जसाऽच्युत'' (भाग.पुरा.११।२९।१) इत्युद्धवस्य प्रश्नम् उत्तरयता भगवता ''मामेव सर्वभूतेषु''इति उपक्रम्य द्वादशाद् आरभ्य ''एष तेऽभिहितः कृत्स्नो ब्रह्मवादस्य सङ्ग्रहः, समासव्यासविधिना देवानामपि दुर्लभः'' इत्यात्मकत्रयोविंशतितमश्लोकपर्यन्तं साधकेन सर्वत्र भगवद्धियै वेदम् अवलोकनीयं जगदिति उपासनायाः कश्चन साधीयान् पन्थाः प्रादर्शि. तेषु उपसंहृतिपद्यस्य अव्यवहितपूर्वपद्यएव ''एषा बुद्धिमतां बुद्धिर्मनीषा च

मनीषिणाम्, यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम्'' इत्यत्र, 'अनृतेन'-'मर्त्येने'ति पदद्वयेन देहाद्युपलक्षितस्य जगतो मिथ्यात्वं तुच्छत्वं च न जातु शक्यसंवरणम्. वल्लभानुयायिभिः असकृन् 'मायावादी'इति दुरुक्त्या शङ्कराचार्यभगवत्पादपदानुवर्तिनः प्रथमे श्रुत्यन्तवेदिनः केवलाद्वैतिनः तत्र-तत्र आक्षेपविषयीक्रियन्ते. यदि सदसद्विलक्षणमायायाः अङ्गीकारएव, मायोपात्तत्वात् सृष्टिप्रपञ्चस्य मिथ्यात्वाभ्युपगमएव मायावादत्वेन अभिमन्यते तर्हि श्रीमद्भागवतेऽपि अस्य मायावादस्य प्रसङ्गो दुरुद्धरएव स्यात्. तत्र प्रत्येकमपि स्कन्धे सहस्रशः तादृशवचनोपन्यासद्भावात्, प्रादेशमात्रं यथा

प्रथमस्कन्धे :

स एवेदं ससर्जाग्रे भगवानात्ममायया।
सदसद्रूपया चासौ गुणमय्यागुणो विभुः॥

(२।३०)

द्वितीये स्कन्धे :

अमुनी भगवद्रूपे मया ते अनुवर्णिते।
उभेअपि न गृह्णन्ति मायासृष्टे विपश्चितः॥

(१०।३५)

तृतीये स्कन्धे

सा वा एतस्य सन्द्रष्टुः शक्तिः सदसदात्मिका।
माया नाम महाभाग ययेदं निर्ममे जगत्॥

(५।२५)

चतुर्थस्कन्धे

यस्मिन्निदं सदसदात्मतया विभाति माया विवेकविधुति स्रजि वाहि बुद्धिः॥

(२२।३८)

पञ्चमस्कन्धे

वदन्ति विश्वं कवयःस्म नश्वरं पश्यन्ति चाध्यात्मविदो विपश्चितः।

(१८।४)

षष्ठस्कन्धे

अथ भगवंस्तवास्माभिरखिलजगुदुत्पत्तिस्थितिलयनिमित्ताय-

मानदिव्यमायाविनोदस्य ...।

(९।२४)

सप्तमस्कन्धे

सृष्ट्वा गुणव्यतिकरं निजमाययेदम्।

(९।३०)

अष्टमस्कन्धे

स्वमाययाऽऽत्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः॥

(६।११)

नवमस्कन्धे

त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु।
भ्रमन्ति कामलोभेर्ष्यामोहविभ्रान्तचेतसः॥

(८।२६)

दशमस्कन्धे

त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये।

(२।२८)

तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरु दुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति॥

(१४।२२)

एकादशस्कन्धे

त्वं मायया त्रिगुणयात्मनि दुर्विभाव्यं।
व्यक्तं स्रजस्यवसि लुम्पसि तद्गुणस्थः॥

(३।८)

यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः।
नश्वरं गृह्यमाणञ्च विद्धि मायामनोमयम्॥

(७।७)

द्वादशस्कन्धे

मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि।

(४।२५)

इत्थं 'मायावादो' 'ब्रह्मवाद' इति वाचारम्भणमात्रं, श्रुतिस्मृतिपुराणादीनां प्रामाण्याद् ब्रह्मैव परमार्थसत्, तत उत्थितमपि इदं जगद् असदेव. वयन्तु महाप्रभून् आचार्यवल्लभचरणानपि तद्वदेव अभ्यर्हितत्वेन अभ्युपेमः. तैरपि श्रीमद्भागवतं तिलकयद्भिः वेदस्तुति-षट्त्रिंश-सप्तत्रिंशपद्यद्वयव्याख्याने सुस्पष्टम् अस्य जगतो असत्ता अनिर्वचनीयता वा प्रत्यपादि तत् के वा तथ्यम् इदम् अपह्नुवीरन् प्रेक्षावन्तः? ततएव केचन वाक्यांशा, यथा "सत इदमुत्थितं सदिति चेन्ननु तर्कहतम्" (भाग.पुरा.१०।८७।३६) इति मूलस्य व्याख्याने —

> "किञ्च, न केवलं ब्रह्मकारणवादएव सर्वत्र वक्तव्यः किन्तु प्रकृतिपुरुषकारणवादोऽपि अतः उभययोगाज् जगत् सदसदात्मकं न केवलं सद् इत्यर्थः" इति. (तत्रैव सुबोधिनी)

एवमेव, "न यदिदमग्र आस न भविष्यदतो निधनादनुमितमन्तरा त्वयि विभाति मृषैकरसे" इति सप्तत्रिंशस्यापि व्याख्यायाम् —

> "इदं जगद् असत् कादाचित्कत्वाद्, यन्नैवं तन्नैवं यथा ब्रह्मेति. केवलव्यतिरेकी हेतुः अस्तीति निरूपयति 'न यद्'इति. कादाचित्कमेव निरूप्यते यदि अस्माद् इदं जगद् अग्रे सृष्टेः पूर्वं न आस नवा अतो निधनात् प्रलयानन्तरं च भविष्यति अतो मध्ये कदाचिदेव जातं तेन ज्ञायते असद् इति. यद्धि सत् तत्कालत्रयेऽपि भवति, नहि सत् कदाचिद् असद् भवति अन्यथा कदाचिद् घटोऽपि पटः स्यात्. तस्माद् आन्तरालिकत्वाद् असज् जगत्" (भाग.पुरा.सुबो. १०।८७।३७).

इत्थं श्रीमद्भागवतमपि केवलाद्वैतवत् प्रपञ्चस्य अवास्तविकत्वमेव मनुतइति आचार्याणामपि नात्र विमतिः. वस्तुतस्तु दृष्टिकोणभेदमात्रविग्रहोऽयम् उक्तं पूर्वं ब्रह्मवाद-मायावादयोः व्यतिरेकः केवलाद्वैतवादिनः कार्यत्वेन न अस्य जगतः सत्ताम् उररीकुर्वन्ति किन्तु कारणत्वकल्पनां व्यावहारिकीम्

अङ्गीकृत्य तेऽपि जगद् ब्रह्मेति सिद्धान्तम् अभ्युपयन्त्येव. यथाहुः जगद्गुरवः श्रीशङ्कराचार्यवर्याः 'अपरोक्षानुभूतौ' :

ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः।
तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेद्॥
सुवर्णाज्जायमानस्य सुवर्णत्वञ्च शाश्वतम्।
ब्रह्मणो जायमानस्य ब्रह्मत्वञ्च तथा भवेत्॥
(४७, ५१)

तद्वद् वाल्लभाअपि प्रकारान्तरेण मायावादं न स्वीकुर्वन्ति. यथोक्तवान् लालूभट्टोपनामा श्रीबालकृष्णभट्टः 'प्रमेयरत्नार्णवे' ''व्यामोहिका माया जीवं व्यामोहयित्वा तदीयबुद्धौ प्रापञ्चिकसद्वस्तुसदृशं मायिकं पदार्थम् उत्पाद्य पुरः स्थितविषये प्रक्षिपति'' इति (पृ. ४). किन्तु अमी एतत् समर्थकवाक्यानां वैराग्यार्थमेव उपयोगं ''प्रतीतिरेवमुग्धानां मायिकी न वस्तुनि कश्चिद् दोषः स्वाभाविकः'' (तत्रैव पृ. ४), ''पुराणेषु क्वचिद् आन्तरालिकीं सृष्टिं, क्वचिद् विषयतां, क्वचिद् अहन्ताममतात्मकं संसारम् अवलम्ब्य मायिकत्वोक्तिः, क्वचिद् वैराग्यार्थञ्च न वस्तु स्वरूपनिरूपणाय'' (तत्रैव पृ. ९१) इत्यादिभिः वाक्यैः प्रथयन्ति. अथच ''विद्धि मायामनोमयम्'' (भाग.पुरा.११।७।७) ''मायात उद्यदपि यत् सदिवावभाति'' (तत्रैव १०।१४।-२२) ''स्वप्नाभमस्तधिषणम्'' (तत्रैव १०।१४।२२) इत्यादि श्रीमद्भागवतोक्त-वचनानाम् अभिप्रायमपि अन्यथयन्ति. किन्तु, सर्वत्रापि एतादृशवाक्यजातेषु वक्तॄणाम् अभ्यर्हितत्वाद् अधिकारसम्पन्नसाधकेभ्यः तद्विधेयत्वेनैव उपदेशात् क्वापि तदर्थानाम् अनिराकरणाच्च वयं ऋजुवर्त्मानिमेव अनुसरन्तः परमार्थतो जगदसद्वादएव एतेषां तात्पर्यं निश्चिनुमइति कृतं पल्लवितेन शक्तिद्वयकल्पनाम् अधुना विवेचयामः.

**आविर्भावतिरोभावौ श्रीमद्भागवतसम्मतौ न वेति ? :**

कृतेऽपि वारद्वयम् अवधानतया समग्रस्य श्रीमद्भावगवतस्य आवृतिक्रमे



५

नात्र अस्माभिः अलम्भि शक्तिप्रसङ्गे आविर्भाव-तिरोभावौ इति शब्दद्वितयी. तत्र,

"गृहीतशक्तित्रितयाय" (भाग.पुरा. २।४।१२)
"शक्तिः सदसदात्मिका" (तत्रैव ३।५।२४)
"नानाशक्त्युपबृंहितः" (तत्रैव ३।१२।४८)
"भगवन् स्वशक्तिभिः" (३।२१।१९)
"सर्गादियोऽस्यानुरुणद्धि शक्तिभिर्द्रव्यक्रियाकारकचेतनात्मभिः" (४।१७।३३)
"शक्तित्रयसमेताय ..."(तत्रैव ४।२४।४३)
"यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भुवन्ति" (तत्रैव ६।४।३१)
"दुरन्तशक्तये" (तत्रैव ७।८।४०)
"नमोऽस्तु तस्मा उपशान्तशक्तये" (तत्रैव ८।५।४४)
"जगदुदयस्थितिसंयमात्मशक्तिम्" (तत्रैव १२।१२।६६)
"उपचितनवशक्तिभिः" (तत्रैव १२।१२।६७)

इत्यादिषु 'शक्ति'पदेन क्वचिद् गुणत्रयं, कुत्रचिन् माया, क्वापि अविद्यायाः बह्व्यो विच्छित्तयः, कुत्रचन कर्तृकरणकर्मेति त्रितयी, कुत्रचिच्च प्रकृतिपुरुषमहदहङ्कारतन्मात्ररूपा नवधा सृज्यविषयाः श्रीमत्पुराणकृद्भिः द्वैपायनमहर्षिभिः उद्दिष्टाः. एतान् प्रसङ्गान् व्याकुर्वद्भिः वल्लभाचार्यैरपि "नानाशक्त्युपबृंहितः" इत्यस्मिन् "अनेकाः शक्तयो भगवति वर्तन्तइति तत्तदनुरोधेन तथा-तथा वचनम्. अन्यथा तासां गुप्तशक्तीनां प्रकाशो न स्यात्" (भाग.सुबो. २।१२।४८). "भगवन् स्वशक्तिभिः" (भाग.पुरा. ३।२१।-१९) इत्यत्र "स्वशक्तयः सत्वादयः" इत्येतेषु टीकासन्दर्भेषु न क्वापि एतयोः चर्चा अकारि श्रीमद्भागवतप्रसङ्गे.

ननु "तस्मै समुन्नद्धनिरुद्धशक्तये नमः परस्मै पुरुषाय वेधसे" (तत्रैव ४।१७।३३) इत्यत्र "यः स्वात्मनीदं निजामाययार्पितं क्वचिद् विभातं क्वच तत् तिरोहितम्" (तत्रैव ८।३।४) इत्यत्र च 'समुन्नद्धनिरुद्ध' पदद्वारेण

'विभाति'-'तिरोहित'पदद्वारेण च क्रमश आविर्भाव-तिरोभवावेव सङ्केतिताविति चेन्न, कैश्चिदपि टीकाकृद्भि: अतादृशव्याख्यानाद् 'विभातिम्'इतिपदेन च 'आभास'मात्रस्य पर्यवसानाद्, वल्लभवेदान्ताभिमतस्य अविर्भावस्य अविकृतपरिणामवादानुसारेण कारणरूपस्य ब्रह्मणएव कार्यरूपजगदाकारेण प्राकट्यस्वीकाराच्च. यथा ''प्रपञ्चभावो भगवत्येव लीन: प्रकटी भवति''( तत्वार्थदीपनिबन्ध प्र.१।६८ ) इति सिद्धान्तोऽयं न श्रीमद्भागवतसमर्थितमिति मन्यामहे. यत्तु ''तदेतदक्षयंक्त[५] नित्यं जगन्मुनिवराखिलम्, आविर्भावतिरोभावजन्मनाशविकल्पवत्'' ( विष्णुपुराण १।२२।६० ) इति विष्णुपुराणश्लोके शब्दमात्रोपलम्भनाद् आविर्भावतिरोभावसिद्धान्तस्य प्रामाणिकता साध्यते सन्दर्भान्तरेक्त[६] तदपि आपातरमणीयम्.

ज्ञानस्वरूपो भगवान्यतो सावशेषमूर्त्तिर्नतु वस्तुभूत:
ततो हि शैलाब्धिधरादिभेदाञ्जनीहि विज्ञानविजृम्भितानि॥
( विष्णुपुरा.२।१२।३७ )
वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्।
यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तत्र कुतो हि तत्त्वम्॥
( तत्रैव २।१२।४१ )
तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित्कदाचिद् द्विज वस्तुजातम्।
विज्ञानमेकं निजकर्मभेद - विभिन्नचित्तैर् बहुधाऽभ्युपेतम्॥
( २।१२।४३ )

इति श्रीविष्णुपुराणेऽपि श्रीमद्भागवतवदेव जगत्सत्तानङ्गीकाराद्.

अपिच ''यत्तु कालान्तरेणापि नान्यां सञ्ज्ञामुपैति वै, परिमाणादिसम्भूतां तद्वस्तु नृप तच्च किम्'' ( तत्रैव २।१३।१०० ) इत्यनेन श्लोकेन अत्र परिणामवादस्य सुस्पष्टतया अनादृतत्वात् शुद्धाद्वैतदर्शनस्य तदुपात्तस्य च आविर्भाव-तिरोभावसिद्धान्तस्य तन्मूलकत्वान् निर्निबन्धनम् अस्य विष्णुपुराणमूलकत्वम्.

**अथास्य श्रीमद्भागवतदर्शनदृशा यौक्तिकत्वं न वेति विमर्शः :**

अथ आचार्यवल्लभैरेव इदम्प्रथमतया सिद्धान्तस्य अस्य स्वरूपम् अभ्यधायि. तद्यथा, 'सर्वनिर्णये' :

> घटादीनामपि ब्रह्मत्वाद् नित्यता इति वक्तुं युक्तिम् आह :
> आविर्भावतिरोभावौ शक्ती वै मुरवैरिणः।
> सर्वाकारस्वरूपेण भविष्यामीति या हरेः॥
> वीक्षा यथा यतो येन तथा प्रादुर्भवत्यजः।
> मृदादिभगवद्रूपं घटाद्याकारसंयुतम्॥
> मूलेच्छातस्तथा तस्मिन् प्रादुर्भावो हरेस्तदा॥
> (तत्वार्थदीपनिबन्धे सर्वनिर्णयप्रकरणम्)

इति एतस्यैव वैशद्यम् आधीयते श्रीपुरुषोत्तमवर्येण 'आविर्भावतिरोभाववादे'. यथा :

> 'आविर्भाव'-'तिरोभाव'शब्दौ च करणव्युत्पन्नौ भावव्युत्पन्नौ च. तत्र आद्ये पक्षे आविः प्रकटं भावयति उपादानान्तःस्थं बहिः प्रकटीकरोति या निमित्तगता च शक्तिः सा 'आविर्भाव'शब्दवाच्या. एवं तिरो अप्रकटं भावयति बहिष्ठं कार्यम् उपादानान्तः स्थापयति या शक्तिः नाशकगता सा 'तिरोभाव'शब्दवाच्या. द्वितीयपक्षे आविर्भवनम् आविर्भावः तिरोभवनं तिरोभावः.
>
> (सृष्टिभेदवादे पृ. १९१).

एतस्य प्रक्रिया कथं प्रथत इति सोपपत्तिम् उदाजहार सिद्धान्तपारदृश्वा श्रीबालकृष्णः

> भगवदिच्छायां कारणरूपायां मृदि विद्यमानस्य

भगवद्रूपघटस्य आविर्भावः. एवं सति यस्मिन् भगवद्रूपे रूपान्तरस्य आविर्भावः तत् कारणं, यथा मृद्, यस्य रूपस्य प्राकट्यं तत्कार्यं, यथा घट, इति कार्यकारणभावव्यवस्था बोध्या.

(प्रमेयरत्नार्णवे प्रपञ्चभेदे पृ.३) इति.

श्रीपुरुषोत्तममहाभागेन एतन्नामके स्वीये लघुप्रकरणे (आविर्भावतिरोभाववादे) स्वयं काश्चिद् विप्रतिपत्तीः समुद्भाव्य तासां समाधानं व्यधायि तन्न तासामेव उद्भावनेन पिष्टपेषणताम् आधातुम् इच्छामः तथापि स्वप्रस्थानगतविसंवादम् अभिलक्ष्य कक्षीकर्तुम् अशक्यत्वात् वादोऽयं प्रतिविद्यीयते.

किं भोः! ब्रह्म सजातीय-विजातीय-स्वगतभेदरहितमिति भवन्तोऽपि अस्मद्रीत्येव अभिप्रयन्ति न वा? ''सजातीयविजातीयस्वगतद्वैतवर्जितम्'' (त.दी.नि.शास्त्रार्थप्रकरणे) इति स्वाचार्यमुखेनैव निरूपणत्वात्. तर्हि आविर्भाव-तिरोभावौ इति शक्तिद्वयं तत्त्वेन कथम् अभ्युपगन्तुं शक्यते? तस्य ब्रह्मातिरिक्तसत्ताकत्वत्वाद्. तथात्वे च द्वैतापत्तेः अवश्यम्भावित्वात्. किञ्च शक्तिः ब्रह्मणो विलक्षणा सलक्षणा स्वरूपान्तर्गता वेति? आद्यं न, विजातीयभेदस्वीकार्यत्वाद् द्वितीयमपि न समीचीनं, सजातीयत्वसम्पातात्. तृतीयमपि न क्षोदक्षमं, स्वगतभेदावहत्वादिति न स्वारसिकम् इदं श्रीमद्भागवतशास्त्रोक्तदिशापि ''एकस्त्वमेव जगदेतदमुष्य यत्त्वम् आद्यन्तयोः पृथगवस्यसि मध्यतश्च, सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितः तदनुप्रविष्टः'' (भाग.पुरा.७।९।३०) इत्यत्र ब्रह्मणः एकस्यैव पारमार्थिकी सत्ता, सृष्ट्यादिकं मायिकम् अवस्तुभूतं, माया च औपचारिकदृष्ट्या 'शक्ति'पदवाच्याऽपि न ब्रह्मणो अतिरिक्ता भ्रमरूपत्वाद् इत्यत्र अद्वैतं निर्बाधमेव.

अपि च, बृहत्वाद् बृंहणत्वाद् वा इति 'ब्रह्म'पदसङ्गतिः. भवन्मतेऽपि,

"ब्रह्म व्यापकमव्ययम्" (त.दी.नि.शास्त्रार्थप्रकरणम्) इति उच्यते. आविर्भाव-तिरोभावौ च सापेक्षिकत्वं, प्राकट्यनिलीनत्वधर्मसङ्गत्यर्थं स्वाश्रयाद् भिन्नत्वम् अपेक्षेते. तौ यदि ब्रह्माश्रितौ, कुतः तदतिरिक्ताधारत्वं श्रयेताम्? सत्याधारे द्वैतदुर्ग्रहः तदनङ्गीकारे च स्वरूपासिद्धिः इति उभयतः पाशारज्जुः. किञ्च, यत्र यस्य कार्यस्य यस्मिन् क्षणे आविर्भावः तस्मिन्नेव न तिरोभावइति अन्योन्याभावो अवश्यम् अभ्युपेयः. तत्सर्वविद्याभावं निराचिकीर्षुभिः भवद्भि न शक्यस्वीकरणइति न आविर्भाव-तिरोभावौ मायातो व्यतिरिक्तौ, भ्रमरूपस्यायाः तस्याः स्वीकारे सर्वाक्षेपजालोच्छेदशक्यत्वादिति नः प्रतिपत्तिः. तस्मात् कारणत्वम् "आविर्भावकशक्त्याधारकत्वम्" इति भवदुक्तम् अलक्षणं, तन्मूलस्यैव उच्छिन्नत्वाद्. अधुना श्रीहरिगुरुकृपाकटाक्षमहिम्ना श्रीमद्भागवतप्रस्थानम् अनुसृत्य तन्निर्वक्तुं कोऽपि यत्न आधीयते.

तद्धि "स्वतः स्वेतरजन्यत्वप्रतिभासकत्वं कारणत्वम्" इति. अयम् अस्य अभिप्रायः. स्वता हि ब्रह्मापरपर्यायस्य आत्मनएव भावः "आत्मावास्यमिदं सर्वम्" (भाग.पुरा.) "तस्मान्न ह्यात्मनोऽन्यस्मादन्यो भावो निरूपितः" (तत्रैव ११।२८।७) इति असकृत्सिद्धान्तितत्वात्. सएव आत्मा मायाम् आधाय स्वस्मिन् स्वकृतप्रपञ्चरूपकार्यस्य उपादानत्वं निमित्तत्वञ्च आरोप्य कर्तृत्वम् आसज्जते. "आत्मैव तदिदं विश्वं सृज्यते सृजति प्रभुः" (तत्रैव ११।२८।६) इत्यपि तत्रैव समाम्नातत्वात्. माया अङ्गीकारे तस्य परिच्छिन्ने जीवत्वादिरूप-स्वेतरजन्यत्व-प्रतिभासः तदेव कार्यत्वं तद्दृष्ट्या च तस्यैव कारणत्वम् इति पारमार्थिकी स्थितिः. व्यवहारे च, मृद्हिरण्यादिकं वस्तुभूतं कुलालस्वर्णकारादि-निमित्तकारणैः घटशरावकटककुण्डलादिरूपतां तत्त्वम् अप्रच्यवमानेऽपि भिन्नाम् अभिरूपतां च प्रातीतिकीम् आधत्तइति स्वतःस्वेतरजन्यत्वप्रतिभासकत्वात् कारणताम् आवहतीति यथोक्तम् अत्रैव "त्वय्यग्र आसीत् त्वयि मध्य आसीत् त्वय्यन्त आसीद् इदमात्मतन्त्रे, त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात्" (तत्रैव ८।६।१०) "एकस्त्वमेव सदसद् द्वयमद्वयञ्च स्वर्णं कृताकृतमवेह न वस्तुभेदः" (तत्रैव ८।१२।८) "यथा हिरण्यं

बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु'' ( तत्रैव १२।४।३१ ) इत्यादौ. एवं श्रीमद्भागवतप्रस्थानोत्थं कारणत्वम् उपपन्नम्.

**श्रीपुरुषोत्तमकृतः कारणभेदोपभेदानां विमर्शः :**

तत्र भवता प्रस्थानरत्नाकरकृता श्रीपुरुषोत्तममहाभागेन कारणभेदेऽपि स्वप्रस्थानसिद्धान्तानुगुणं नावीन्यम् अन्यवादिवैलक्षण्यञ्च उद्भावितम्. तद्यथा,

> ''तच्च कारणं द्विविधं समवायि-निमित्तभेदात्. तत्र तादात्म्यसम्बन्धेन यदाश्रयं कार्यं भवति तत् समवायिकारणं. समवायश्च तादात्म्यस्यैव नामान्तरम् इति''.

अत्र एतद् अवधेयम्. 'समवाय'इत्याख्या मुख्यतया वैशेषिकदर्शनव्यवहार्या परस्ताद् अन्यैरपि अस्याः स्वमतानुरूपनिरूपणम् अकारि मीमांसकादिभिः. अतः तन्मतएव प्रथमम् उपादीयते. यदाह प्रशस्तपादः — ''अयुतसिद्धानाम् आधार्याधारभूतानां यः सम्बन्ध इह प्रत्ययहेतुः स समवायः'' ( वैशेषिकसूत्रभाष्य ) इति. अस्य अयम् अर्थः युतसिद्धः पृथक्सिद्धः एवम् अयुतसिद्ध इति अपृथक्सिद्धो, अयुतसिद्धयोः यः सम्बन्धः स समवायः. ययोः द्वयोः सम्बन्धिनोः मध्ये एकम् अपरेण सम्बद्धं सदेव तिष्ठति सम्बन्धराहित्यदशायाञ्च स्थातुं न शक्नोति स समवायेन सम्बद्धः सह इतरेण इति तात्पर्यम्. यथा घटरूपं घटे असम्बद्धः सन् न स्थातुं क्षमो, घटश्च घटत्वेन सह असम्बद्धः सन न तिष्ठतीति घट-घटरूपयोः घट-घटत्वयोः च सम्बन्धः समवायः.

किन्तु धीमन्तः एतद् न अनुमन्यन्ते ''इह भूतले घटाभावः'' इत्यत्र विशेषण-विशेष्यभावलक्षणेऽपि सम्बन्धे अस्य लक्षणस्य अतिप्रसङ्गादक्त[७]. गोस्वामिवर्योऽपि लक्षणमिदं प्रतिचिक्षेप ''प्रलये जातिस्थितिः काले वक्तुम् अशक्यत्वात्'' ( प्र.र.प्र.परिच्छेदे ) मीमांसकश्रीपार्थसारथिमिश्रोक्तं ''येन

सम्बन्धेन आधेयम् आधारे स्वानुरूपां बुद्धिम् आधत्ते, स्वाकारेण बोधयतीति यावत् स सम्बन्धः समवायः'' इत्यपि न साधीयो, ''गुणगुणिनोः क्रियाक्रियावतोः सम्बन्धे असमवायत्वापत्तेः इति गोस्वामिनो विमतिः अत्र उज्जृम्भते. ततो ''न समवायः तादात्म्यातिरिक्तः, तादात्म्यञ्च भेदसहिष्णुः अभेदएव. भेदसहिष्णुता च ''बहुस्यां प्रजायेय'' इति इच्छायां तद्व्यापारभूतशक्तिविभागेनेति नात्र पूर्वोक्तदोषञ्चारः श्रुतिशरणत्वात् कल्पनायाः'' ( तत्रैव ) इति तादात्म्यमेव तद् मनुते. नैयायिकानां मते तादात्म्यं न उक्तपूर्वदृशा भेदाभेदः किन्तु अभेदएव, पदार्थस्य तत्त्वावच्छिन्ने तदसाधारणधर्मत्वावच्छिन्ने वा वृत्त्युपजनकसम्बन्धत्वात्. यथा घटत्वावच्छिन्ने घटस्य सम्बन्ध इति स्वस्मिन् स्वनियामकः सम्बन्धः तादात्म्यम् इति फलितम्. वाल्लभमतेतु ''द्वित्वात्यन्ताभावरूपत्वे सति एकत्वात्यन्तभावरूपत्वं तादात्म्यम् इति भेदसहिष्णवभेदत्वम् अस्य सङ्घटते बहुभवनसङ्कल्पश्रुत्या इति उदाहृतपूर्वम्. राद्धान्ते अस्मिन् —

> उपादानन्तु समवायिनएव अवस्थाविशेषः, परिच्छिन्नस्य कर्तृक्रियया व्याप्तस्यैव मृत्पिण्डसूत्रादिरूपस्य पृथिव्यंशस्यैव घटपटाद्युपादानत्वदर्शनात्. अन्यथा पृथिवीत्वाविशेषात् पिण्डादिरूपताभावेऽपि घटादिः उत्पद्येत. अतएव भगवान् अविकृतएव जगतः एकांशेन समवायी, सएव क्वचित् कालरूपं क्वचित् प्रकृतिरूपं स्वांशम् उपादानं करोति इति. ''प्रकृतिर्ह्यस्योपादानमाधारः पुरूषः परः, सतोऽभिव्यञ्जकः कालो ब्रह्म तत्त्रितयन्त्वहम्'' ( भाग.पुरा.११।२४।१९ ) इति. ''गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः, पुरुषस्तदुपादानमात्मानं लीलयाऽसृजत्, विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया, ईश्वरेण परिच्छिन्नं कालेनाव्यक्तमूर्तिना'' ( भाग.पुरा.३।१०।११-१२ ) इत्यादिवाक्याद् अवसीयते.
>
> ( प्रस्थानरत्नाकर पृ.४३ )

अतः परम् अनेन स्वसिद्धान्तानुसारेण उपादानस्यापि द्वैविध्यम् उपपादि

परिणाम्युपादन-विवर्तोपादानभेदेन. वस्तुतो विवर्तोपादनत्वम् एभिः न उत्सङ्गताम् आनीयते वाल्लभैः विवर्त-विवर्तोपादानयोः मध्ये सत्तावैषम्यकल्पनाश्रितानिष्टा-पत्तेः. तत्र आद्यस्य लक्षणम् :

> ''स्वसमानसत्ताककार्याकारेण आविर्भवति (यत्तत्), परिणामश्च उपादानसमसत्ताको अन्यथाभावः'' तदपि ( परिणाम्युपदानम् ) द्विविधम् क. अविकृतोपादानं, यथा सुवर्णकृतकटककुण्डलादेः सुवर्णधातुः ख. विकृतोपादानं घटशरावोदञ्चनादेः यथा मृत्तिका. अपरम् उपादानविषमसत्ताको अन्यथाभावो विवर्तः. सएव उपादानम् इति विवर्तोपादानम्. एतत्तु एकविधं, यथारजतादिरूपेण बुद्धेः ख्यानम्. निमित्तकारणत्वञ्च समवायिकारणातिरिक्तकारणत्वं, यथा, घटकार्यस्य कृते कुलालचक्रचीवरदण्डादिकं, पटस्य कृते तुरीवेमादिकं ज्ञानस्य कृते विषयेन्द्रियव्यापाराः''.
>
> ( प्रस्थानरत्नाकर पृ.४४ )

**अधुना श्रीमद्भागवतप्रस्थानदृष्ट्या अस्य विमर्शः :**

कारणत्वादिप्रसङ्गे श्रीमद्भागवतस्य मूलविग्रहे 'समवाय'शब्दस्य अनुपलब्धेः न वयं समवायाख्यं कारणभेदम् अभ्यूहितुं शक्नुमः. उपादानत्वं निमित्तत्वञ्च पूर्वोक्तप्रातिभासिकत्वदृष्ट्या नच निराकुर्मः. अत्रापि मुण्डकश्रुतिरिव[c] ब्रह्मणः प्रपञ्चजातस्य अभिन्नमिमित्तोपादानत्वस्यैव अभिस्वीकृतिः.

एकः स्वयं सञ्जगतः सिसृक्षयाऽद्वितीययाऽऽत्मन्नधियोगमायया।
सृजस्यदः पासि पुनर्ग्रसिष्यसे यथोर्णनाभिः भगवन् स्वशक्तिभिः॥
( भाग.पुरा.३।२१।१९ )

यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः॥
( तत्रैव ११।७।२१ )

सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः।

(तत्रैव १२।८।४१)

इति मूलग्रन्थे तत्र-तत्र प्रतिपादनत्वात्. उपादानत्वम् अत्र "यदुपादाय पूर्वस्तु भावो विकुरूते परम्" (तत्रैव ११।२४।१६) इति ग्रन्थोक्तवचनविन्यासेनैव निष्कृष्य अवगन्तुं शक्यते. तस्य अयम् अर्थः तावत्. 'यत्' यन्मूलतत्त्वं, कारणत्वेन तदुपाधिना 'उपादाय' स्वीकृत्य, मनसि समुपकल्प्य इति यावत्. 'पूर्वस्तु भावः' कारणत्वकल्पनाभावः 'परं विकुरूते' तज्जन्यकार्यत्वाकारेण अवधारयति प्रमाता, तत् तस्य कल्पितकार्यस्य उपादानकारणम्. श्रीमद्भागवते परमार्थदृष्ट्या अस्य विवर्तत्वं व्यवहारदृशातु परिणामित्वम् इति उभयथाऽपि सङ्गमयितुं न दुःशकम्.

तद् यथा "गुणव्यतिकराकारो निर्विशेषोऽप्रतिष्ठितः, पुरूषस्तदुपादानमात्मानं लीलयाऽसृजत्" (भाग.पुरा.३।१०।११) इत्यत्र परमात्मनः कालरूपेण निमित्तता, पुरूष(चैतन्य)रूपेण च उपादानता लीलया मायाया व्यपदिश्यते. अयं भावः. स कालः उपादानं निमित्तं यस्मिन् तम् आत्मानमेव विश्वरूपेण असृजत्, स्वव्यतिरेकेण सृज्यस्य अभावात्. एवं वस्तुगत्या विवर्तोपादनत्वं सिद्धम्. विवर्तोपादानत्वं स्वासमसत्ताककार्यजनकत्वं, यथा शुक्तेः रजतं प्रति. तथा च प्रपञ्चस्य ब्रह्मभिन्नसत्ताकत्वेन मिथ्यात्वाद् उपादानं शुद्धम् अद्वितीयं ब्रह्मेति निरवद्यम्.

व्यवहारिकपरिणाम्युपादानत्वेऽपि प्रमाणम् अत्रैव. यथा "प्रकृतिर्ह्यस्योपादानम्" (तत्रैव ११।२४।१) इति. अनयैव दृष्ट्या तत्र-तत्र श्रीमद्भागवते तृतीयस्कन्धादौ सृष्टिवर्णनं साङ्ख्योक्तरीत्या नैयायिकाद्युक्तरीत्या वा न विसङ्गतिम् उपैति. अस्मादेव "माया मनः सृजति" (तत्रैव ७।९२१) इति कथञ्चित् प्रधानकारणत्वम्. "चरमः सद्विशेषाणाम् अनेकोऽसंयुतः सदा परमाणुः स विज्ञेयो नृणाम् ऐक्यभ्रमो यतः" (३।११।५) इति. "अणु द्वौ परमाणू स्यात् त्रसरेणुस्त्रयः स्मृतः" (तत्रैव ३।११।५) इति च आरम्भवादोऽपि न न सार्थकताम् आवहतः.

अथ किं नाम व्यवहारिकत्वम् इति चेद् ब्रूम. ''स्वसत्ताकालीनाभावप्रतियोगिज्ञानविषयताकत्वं व्यवहारिकत्वम्'' इति आधुनिकवेदान्तविदुषः श्रीसुब्रह्मण्यशास्त्रिणः परिभाषाम् अभ्युपगच्छामः ( अद्वैतदीपिका, द्वितीयपरिच्छेदः पृ.१८२ ) 'परिणाम'शब्दोऽपि अत्र रूपान्तरापत्त्यर्थकः. ''कालाद् गुणव्यतिकरः परिणामः स्वभावतः'' ( भाग.पुरा.२।५।२२ ) इत्यादौ उपलभ्यमाणो व्याख्येयः.

अथ ब्रह्मणो निमित्तत्वमपि औपाधिकं तत्र-तत्र अवलोकयितुं न ठिनम्. यथा प्रथमएव ''जन्माद्यस्य यतः'' ( तत्रैव १।१।१ ) इत्यात्मके ब्रह्मसूत्रगर्भिते मङ्गलपद्ये. श्रीमद्भागवतप्रस्थाने मायाविशिष्टस्यैव ब्रह्मणः कारणत्वं न शुद्धस्य. ब्रह्माश्रिता मया परिणामिकारणं मायाविषयो जीवाश्रिताऽविद्याविषयो वा ब्रह्म विवर्तोपादानम्. तत्रच ब्रह्मव्यतिरेकेण इतराभावएव जगतइति कार्यस्य यावल्लक्ष्यकालम् अनवस्थितस्य तटस्थलक्षणत्वसङ्गतिः. निमित्तकारणतापि अत्र मायोपहितम् उपहितरूपेण मायापरिणामात्मकवृत्तिद्वारेक्षितृत्वेन.

वस्तुतो रज्जोः अविकृतायाः भुजङ्गाकारेणेव ब्रह्मणो जगदात्मना भानमेव अतएव ''सदेवसौम्येदम्'' ''एकमेवाद्वितीयम्'' ''नेह नानास्ति किञ्चन'' इत्यादि श्रुतयो मिथ्यात्वप्रतिपादनपराः, अतो अस्मद्दृष्ट्या मिथ्याजगदधिष्ठानत्वमेव तदात्मना विवर्तमानत्वम् उपादानत्वम् इति. तदेतद् ब्रह्मवादिब्रुवा न सहन्ते. यथा उच्यते तृतीयाधिकरणस्य अणुभाष्ये श्रीमद्वल्लभाचार्यैः —

> ननु एवमेव अस्तु अपवादार्थत्वात् रज्जुसर्पवदयुक्तार्थकथनेऽपि न दोषः ''सर्वं समाप्नोषि ततोऽसि सर्व'' इति स्मृतेश्चेत् मैवं, तथा सति पाखण्डित्वं स्यात्. एतादृशशास्त्रार्थाङ्गीकर्तुः आसुरेषु भगवता गणितत्वात्... नहि वेदो निष्प्रपञ्चरूपकथनम् उक्त्वा स्वोक्तं जगत्कर्तृत्वं निषेधति. तस्माद् अध्यारोपापवादपरत्वेन व्याख्यातृभिः वेदान्ताः तिलापः कृता इति

मन्यामहे, सर्ववाक्यार्थबाधात्''. (''तत्तु समन्वयाद्'' - इत्यस्य भाष्ये).

श्रीमद्भागवते तु अध्यारोपापवादौ नैकत्र समाम्नातौ, यथा —

अमुनी भगवद्रूपे मया ते अनुवर्णिते।
उभे अपि न गृह्णन्ति मायासृष्टे विपश्चितः॥
(भाग.पुरा.२।१०।३५)

इत्थम्भावेन कथितो भगवान्भगवत्तमः।
नेत्थम्भावेन हि परं द्रष्टुमर्हन्ति सूरयः॥
कर्तृत्वप्रतिषेधार्थं माययाऽऽरोपितं हि तत्।
(तत्रैव २।१०।४४-४५)

सेयं भगवतो माया यन्नयेन विरुध्यते।
यदर्थेन विनाऽमुष्य पुंस आत्मविपर्ययः॥
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकः॥
यथा जले चन्द्रमसः कम्पादिस्तत्कृतो गुणः॥
दृश्यतेऽसन्नपि द्रष्टुरात्मनो नात्मनो गुणः।
(तत्रैव ३।७।९,१०,११)

अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते।
(तत्रैव ३।२७।४)

तस्मादिदं जगदशेषमसत्स्वरूपं स्वप्नाभमस्तधिषणं पुरूदुःखदुःखम्।
त्वय्येव नित्यसुखबोधतनावनन्ते मायात उद्यदपि यत्सदिवावभाति॥
(तत्रैव १०।१४।२२)

आद्यन्तवदसज्ज्ञात्वा निःसङ्गो विचरेदिह।
(तत्रैव १२।२८।१३)

मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि।
(तत्रैव १२।४।२५)

अपिच, रज्जुसर्पवद् अयुक्तार्थकथनमपि अत्रैव जगतो यथा —

यस्मिन्निदं सदसदात्मतया विभाति।
माया विवेकविधुति स्त्रजि वाहिबुद्धिः ॥
( तत्रैव ४।२२।३८ )

समविषममतीनामतमनुसरसि यथारज्जुखण्डः सर्पादिधियाम् ॥
( तत्रैव ६।९।३७ )

ज्ञानेन भूयोऽपि च तत्प्रलीयते रज्ज्वामहेर्भोगभवाभवौ यथा ॥
( तत्रैव १०।१४।२५ )

किमेतया नोऽपकृतं रज्ज्वा वा सर्पचेतसः।
रज्जुस्वरूपाविदुषो योऽहं यदजितेन्द्रियः ॥
( तत्रैव ११।२६।१७ )

इत्थं श्रीमद्भागवतानुसारि कार्यकारणतादिकं न पारमार्थिकम् इति अवगन्तव्यम्. ननु असतः कुतो ह्यर्थक्रियाकारित्वम् अथच कथं व्यावहारिकत्वम् इति चेत्, न, रज्जुसर्पेणापि भीत्या कम्पादिसद्भाव दर्शनाद्. अथच ग्रन्थे "छायाप्रत्याह्वयाभासा ह्यसन्तोऽप्यर्थकारिणः, एवं देहादयो भावा यच्छन्त्यामृत्युतो भयम्" ( तत्रैव ११।२८।५ ) इति सर्वमपि अनवद्यम्.

**प्रस्थानरत्नाकरोक्तकारणताद्वैविध्यविमर्शः :**

ग्रन्थकृद्गोस्वामिशिरोमणिः प्रकरणस्य अस्य पर्यन्ते कारणताद्वैविध्यपक्षम् उद्भावयामास. तत्र "दण्डचक्रादिन्यायेन सामग्रीकारणाता प्रथमा, तृणारणिमणि-न्यायेन प्रत्येकपर्यवसायिनी इति अपरा". अयमाशयः. धर्माणां धर्मिपदार्थेषु द्विधा वर्तित्वं, व्यासज्यवृत्या प्रत्येकपर्याप्त्या वा. द्वित्वधर्मावच्छेदकतायाः आश्रयत्वं पदार्थद्वयएव न एकस्मिन् इत्यत्र द्वित्वे व्यासज्यवृत्तित्वं, वस्तुद्वयस्य उपस्थित्यैव तद्व्यवहाराद् अतथात्वे "एको न द्वौ" इति व्यतिरेकदर्शनाच्च. प्रत्येकपर्याप्तिश्च निरपेक्षत्वेन अवस्थानत्वम्. कारणातायाः विभागेऽपि दृष्ट्या अनया विचारयितुं शक्यते. तद्यत्र कार्यस्य उत्पत्तौ नैकेषां कारणानां युगपद् आवश्यकत्वं तत्र 'सामग्रीकारणता', यथा घटनिर्माणे दण्डचक्रचीवरादीनां सम्भूयैव कारणत्वं न नैरपेक्ष्येणेति समज्जसम्. ननु दण्डेन चक्रचङ्क्रमणं

चक्रेण भ्रमिद्वारेण मृत्पिण्डस्य घटजननौपयिकत्वं, चीवरेण च निष्पन्नघटाकृतेः चक्रस्थभ्रमिशीलमृत्पिण्डात् पृथक्करणमिति अनेकेषां कार्याणां क्रमदर्शनात् न अत्र सम्भूयकारित्वम् अपितु प्रति कार्यं प्रति कारणस्य स्वतन्त्रत्वं निरपेक्षत्वं वा इति चेत्, न, चक्रभ्रमणादौ न कार्यत्वम् अनुभवविरहात् तेषां व्यापारत्वकुक्ष्यन्तर्भावाच्च, तस्मात् पुरुषोत्तममहानुभावाभिमता सामग्रीकारणता अस्माभिरपि अवश्यम् अभ्युपगन्तव्या. श्रीमद्भागवतेऽपि —

प्रबुद्धकर्मा दैवेन त्रयोविंशतिको गणः ।
प्रेरितोऽजनयत् स्वामिर्मात्राभिरधिपूरूषम् ॥
परेण विशता स्वस्मिन् मात्रया विश्वसृग्गणः ।
चुक्षोभान्योन्यमासाद्य यस्मिंल्लोकाश्चराचराः ॥

(भाग.पुरा. ३।६।४-५)

इत्यादौ, अन्यत्रापि विसर्गाख्यावान्तरसृष्टिनिरूपणप्रसङ्गेषु च 'सामग्रीकारणतायाः' विद्यमानत्वात्.

अथ अन्या विचार्यते. प्रत्येकपर्यवसायित्वं नाम ''स्वभिन्नकार्यजनकविद्यमानत्वे स्वतएव कार्यजनकत्वम्''. एतद् न अलौकिकेषु निमित्तोपादानकारणेषु, जगत्कारणे ब्रह्मणि वा सङ्घटे इति निष्प्रयोजनैव इति आमनामः. कुतः? निमित्तकारणानां परस्परापेक्षित्वस्वरूपाद् उपादानस्य च एकं प्रति एकस्यैव निर्धार्यमाणत्वाद् यथा ''मृदैव घटः तन्तुभिरेव पटः''च इतरथा सर्वस्मात् सर्वभवनप्रसङ्गदुर्वारत्वं तत्त्वे अनिष्टापतिश्च.

ननु अग्निप्रज्वालनात्मके कार्ये तृणारणिमणिषु एकतरग्रहणस्य कामचारात् कथं न एतद् युज्यत? इति चेत्, श्रूयताम्. अग्निप्रज्वालनं न तत्त्वतो अग्नेः उत्पत्तिः अपिच ज्वालामालाकुलकृपटयोः न तृणारणिमण्यादयः उपादानत्वम् आप्तुम् अर्हन्ति, तत्र जन्यजनकभावस्य औपचारिकत्वाद् ब्रह्माण्डे सर्वत्र अनुप्रसक्ततेजस्तत्त्वस्यैव तत्त्वतः तदुपादानत्वाच्च. किञ्च अत्र न विकल्पोपलब्धिरिति तृणारणिमण्यादयो मिथो निरपेक्षत्वेऽपि प्रज्वालनाङ्गभूतसमित्तूलसूर्यप्रकाशादिकं सहायकवस्तुजातम् अपेक्षन्तएवेति ते निमित्तकारणत्वज-

ठरएव निक्षेप्तव्या इति आवेदयामः.

श्रीमद्भागवतानुसारेण च ब्रह्मणः स्वरूपे अभिन्ननिमित्तोपादानत्वे न एतस्या यौक्तिकत्वं प्रत्येकपर्याप्तिकारणतायाः तदन्यत्वस्य अल्पशक्तिमत्वस्य च न कथञ्चनापि शक्यस्वीकारात् कृतम् अनभिमतपल्लवितेन. साम्प्रतं समापनमङ्गलपद्यैः एभिः सम्पूर्यते श्रीहरिगुरुकृपोद्भावितो लघीयान् अयं सन्दर्भः. तद्यथा :

अब्धौ वारिपृषत्कवद्व्यधुरमी जीवाः पृथक्कल्पनां।
यन्मायावशगाश्च संसृतिमये चक्रे क्रमन्तः पुनः॥
कादाचित्कमथप्रपत्तिपरमं लब्ध्वा महत्तत्क्षणं।
यद्दृष्ट्यैव विदन्ति तत्त्वमखिलं तं ज्ञानमूर्तिं नुमः॥

शास्त्राब्धिमन्थाचलविग्रहाणां तत्त्वामृतोल्लाससुधाधराणाम्।
श्रीनिश्चलानन्दमहेश्वराणां[१] जयन्ति पादाब्जमरन्दरेणवः॥

वृन्दाविपिनविहारं, व्रजजीवनमिन्द्रनीलमणिहारम्।
ध्यायेन्नन्दकुमारं, सुखसारं वल्लवीनयनतारम्॥

शरद्गोस्वामिवर्यैः सन्नियुक्ता ह्यस्य लेखने।
कुर्मस्तत्तेभ्य एवास्य प्रबन्धस्यार्पणं वयम्॥

**सन्दर्भ**

१. पूर्वगोष्ठ्यां प्रस्तुते स्वकीये ''श्रीमद्भागवतप्रस्थाने प्रस्थानरत्नाकरे च शब्दप्रमाणस्वरूपविमर्शः' इत्याख्ये निबन्धे.

२. ''श्रीमद्भागवते शास्त्रीयाः सन्दर्भाः'' इत्यप्रकाशिते विस्तीर्णे ग्रन्थे.

३. ''साधकतमं करणम्'' इति सूत्रव्याख्याने 'सिद्धान्तकौमुद्याः' तत्त्वबोधिनी'टीकायामुद्धृतः श्लोकः.

४. दृष्टव्यः 'चित्सुखी'तिप्रथितायाः तत्त्वप्रदीपिकायाः द्वितीयपरिच्छेदे करणलक्षणनिराकरणम्.

५. 'तदेतदक्षयम्'इति पाठान्तरम्.

६. द्रष्टव्यं पुरुषोत्तमगोस्वामिनएव 'सृष्टिभेदवादे' पृ. १०८

७. द्रष्टव्यं तत्वप्रदीपिकायां द्वितीयपरिच्छेदे समवायलक्षणनिराकरणम्.

८. यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति यथा सतः पुरुषात् केशलोमानि ततोऽक्षरात्सम्भवतीह विश्वम्॥

( मुण्डकोपनिषदि १।१।७ )

९. पूर्वाम्नायश्रीगोवर्धनमठपुरीपीठाधीष्ठितजगद्गुरुशङ्कराचार्यवर्याणाम् अनन्तश्रीविभूषित-स्वामिनिश्चलानन्दसरस्वतीमहाराजानाम् अस्मद्गुरुचरणानाम् इत्याशयः.

# चर्चा

## प्रस्थानरत्नाकरनिरूपित - करणकारणसामान्यस्वरूपस्य श्रीमद्भागवतप्रस्थानदृष्ट्या परीक्षणम्

**डॉ. विन्ध्येश्वरीप्रसाद मिश्र**

**बी.आर्.शुक्ल :** भागवते मायायाः प्रतिपादनं वर्तते इति तु समीचीनं परन्तु सदसदात्मकं मायायाः स्वरूपम् उक्तं तत् कथं सङ्गच्छते? सदसद् उभयरूपत्वं कथं भवितुम् अर्हति? मायायाः लक्षणं यद् अद्वैतिभिः क्रियते सदसद्विलक्षणात्मकत्वं "सद्भिन्नत्वे सति असद्भिन्नत्वे सति सदसद्भिन्नत्वरूपम्" इति तल्लक्षणन्तु भागवते न कुत्रापि प्रतिपादितं दृश्यते.

**वि. प्र. मिश्र :** अत्र असकृद् मया निरूपितं वर्तते. असद् इदं जगत्. **"न गृह्यते वस्तुतया मनीषिभिः"** इत्यत्र मया उदाहरणानि दत्तानि. तत्र सदद्विलक्षणा तादृशी माया नास्ति. किन्तु जगदिदं असदेव. सदसद्विलक्षणत्वं सदसद्रूपेण... एभिः यथा व्याख्या क्रियते तथा विलक्षणत्वं नास्ति. अध्याहारेण आयाति तत्र. तत्र यः सन्दर्भो वर्तते तत्र अध्याहारेण सदसद्विलक्षणत्वमेव आयाति.

**बी.आर्.शुक्ल :** कथम् एवं वक्तुं शक्यम्? यदि असत्त्वं प्रतिपाद्यते चेत् तर्हि किं नाम असत्यत्वम्?

**वि. प्र. मिश्र :** बाध्यबाधकलक्षणम्. माया बाध्यते इति कृत्वा भागवते वस्तुरूपेण जगतः सत्यत्वं न स्वीकृतमस्ति. इति सर्वत्र मया निरपेक्षेणैव यथायथं प्रतिपादितम्.

**रा. कि. त्रिपाठी :** यादृशं सत्यत्वं स्वीकृतं अद्वैतिभिः त्रिकालाबाध्यत्वरूपं तद्रूपं सत्यत्वं मायायाअपि?

**वि. प्र. मिश्र :** नहि. मायाया: सत्यत्वं प्रातिभासिकम्.

**बी.आर्.शुक्ल :** सत्यत्वं यदि तत् स्यात् तर्हि असत्यं कथम् ? सदसदुभयरूपत्वं तत्र प्रतिपादितं वर्तते.

**वि. प्र. मिश्र :** इदमेव मया निवेदितम्. अर्थेन अनिर्वचनीयतैव आयाति.

**रा. कि. त्रिपाठी :** किं वैलक्षण्यं वाल्लभस्य ?

**वि. प्र. मिश्र :** केवलाद्वैतदृशा अथवा भागवतदृशा मया उक्तम्.

**बी.आर्.शुक्ल :** मायाया: स्वरूपं तैरपि अङ्गीक्रियते. तत्र माया भगवच्छक्तिरूपेण.

**वि. प्र. मिश्र :** श्रीमद्भिः वल्लभाचार्यैरपि व्यामोहिकामाया स्वीकृता वर्तते. तत्र को भेद: ? इमे कथं ब्रह्मवादिन: ?

**गो. श्या. म. :** तत्र भगवत्पादानां श्रीशङ्कराचार्याणां भाष्ये एवम् अस्ति ''**अनन्ता ह्यस्य शक्तयो:**''.

**वि. प्र. मिश्र :** अथ किम् ?

**गो. श्या. म. :** एकैव शक्ति: तत्र न अङ्गीकृता.

**वि. प्र. मिश्र :** प्रातिभासिकत्वम्.

**गो. श्या. म. :** प्रतिभासिकत्वं भवतु. भवताम् आक्षेपो अयम् आसीद् यद् एकैव शक्ति: माया. भाष्येतु ''**अनन्ता ह्यस्य शक्तयो:**''.

**बी.आर्.शुक्ल :** अनन्ता: शक्तयो भवेयु:. माया इति एका शक्ति:.

**गो. श्या. म. :** एतेषाम् आक्षेपो अयम् आसीत्. द्वे शक्ती कुतो अङ्गीक्रियते ? एकैव शक्ति: भागवते अङ्गीकृता. किन्तु भगवत्पादेन श्रीशङ्कराचार्येणतु ''**इन्द्रो मायाभि: पुरुरूप ईयते**'' तत्र भाष्ये ''**अनन्ता ह्यस्य शक्तयो:**'' एवमेव शब्दश: लिखितम् अस्ति.

**पा. ना. द्विवेदी :** तथा भवतु.

**गो. श्या. म. :** शक्त्यैक्यं वा शक्त्यनैक्यं वा इत्येतस्मिन् विषये ब्रवीमि.

**रा. कि. त्रिपाठी :** तत्र शक्तय: मायाया: स्वीकृता: भगवत्पादै: शङ्कराचार्यै:.

**गो. श्या. म. :** नहि. परब्रह्मण:.

**पा. ना. द्विवेदी :** मायोपहितस्य ब्रह्मण:.

गो. श्या. म. : मायोपहितस्य वा भवतु शुद्धस्य वा भवतु. अस्य ब्रह्मणो अनन्ताः शक्तयः.

वि. प्र. मिश्र : तत्र निवेदयामि. श्रीमद्भागवते मायान्तर्गता बहवः शक्तयः.

गो. श्या. म. : वयन्तु सर्वभवनसामर्थ्यरूपां मायां, योगमायां, व्यामोहिकामायाम् अनेकविधां मायां स्वीकुर्मः. सर्वापि माया व्यामोहिका नास्ति. योगमाया व्यामोहिका नास्ति. सर्वभवनसामर्थ्यरूपा मायापि व्यामोहिका नास्ति. व्यामोहिकैव माया परं व्यामोहिका.

वि. प्र. मिश्र : सर्वासां मायानाम् अत्र बाधो अभ्युपगन्तव्यः श्रीमद्भागवते. भवन्मते काचन माया लीलात्वेन स्वीकृता. लीलापि यदा वृत्तिः भवति तदैव लीला भवति. वृत्तेः लोपे जाते कुतो लीला का च लीला. श्रीमद्भागवते ''**अहं ब्रह्म**'' इत्यादिकम् उपपादितम्.

गो. श्या. म. : ''**अहमेवासमेवाग्रे नान्यद्यत् सदसत्परं**'' भवतः सदसद्रूपा मायापि तत्र निराकृता. ''**पश्चादहं यदेतच्च योवशिष्येत सोऽस्म्यहम्**'' इति शुद्धस्यैव ब्रह्मणो जगतः रूपेण परिणामः तत्र उच्यते.

बी.आर्.शुक्ल : मायायाः अनन्तत्वे तत्र न कापि विप्रतिपत्तिः अद्वैतवादिनाम् , अज्ञानस्य अनेकविधत्वात्. अज्ञानस्य शक्तिरूपमायायाअपि आनन्त्यम्. ''**अनेकाश्रयत्वात् च**'' मायायाः आनन्त्यम् अस्माभिरपि स्वीक्रियते अद्वैतिभिः. लीला यदि स्वीक्रियते तत्र एको मम प्रश्नः. ''**एकोऽहं बहु स्यां प्रजायेय**'' इति लीलातु भवति. तत् सर्वत्र वेदेषु प्राप्यते. परन्तु ''बहु अहम् एकः स्याम्, विनाशयेयम्'' इति कुत्र उक्तम् ? कथं तादृशी विनाशलीला भवितुम् अर्हति ?

गो. श्या. म. : ''**अथाऽतो ब्रह्मजिज्ञासा**'' ''**जन्माद्यस्य यतः**''. अब इसमें देखने लायक बात है शुक्लजी! यद्यपि मुझे ज्ञात है कि अद्वैतमतमें यह ब्रह्मका तटस्थलक्षण है स्वरूपलक्षण नहीं है मगर मैं शुद्धाद्वैतकी दृष्टिसे कुछ मुद्दोंपर ध्यान

आकृष्ट करना चाहूंगा. किसी कारणसे जब कार्यका जन्म होता है तो आवश्यक नहीं है कि कार्य और कारण का अभेद हो. क्योंकि कुम्भकारसे कुम्भका जन्म होता है परन्तु उन दोनोंमें अभेद नहीं होता है. यदि बात "जन्म अस्य यत:" होती तब तो इतनी हो सकती थी. श्रुति भी "**यतो वा इमानि भूतानि जायन्ते. येन जातानि जीवन्ति. यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद् ब्रह्म**" कहती है. और सूत्रकार भी "**जन्माद्यस्य यत:**" में यही कहते हैं. तो "स्थितिरस्य यत:" यह भी तो बात है! तो उत्पत्तिकारणत्वके साथ स्थितिकारणत्व भी आया. कुम्भकारका कुम्भमें स्थितिकारणत्व नहीं होता है, उत्पत्तिकारणत्व होता है. तो जब उत्पत्तिकारणत्व भी कहा है और स्थितिकारणत्व भी कहा है तो कुछ स्थिति बदल रही है. अभिन्ननिमित्तोपादानता जैसा कुछ ध्वनित होने लगा. और वह अभिन्ननिमित्तोपादानता विवर्तोपादानात्मिका है या परिणाम्युपादानात्मिका है यह फिर एक प्रश्न होता है. यदि बात यहीं अटक जाती--- यहीं उपसंहृत हो जाती भी कथा अलग होती. मगर "**जन्माद्यस्य यत:**" में "**यत्प्रयन्ति अभिसंविशन्ति**" भी कहा गया है. जिसमें लीन होता है यह भी लक्षणतया कहा गया है. शुक्तिपर भासित होती रजत शुक्तिकामें कभी लीन नहीं होती है. वाल्लभ वेदान्तकी समस्या यह है. रजत शुक्तिकामें बाधित होती है. लय कोई भिन्न वस्तु है और बाध कोई भिन्न वस्तु है. यदि लय और बाध को आप एक मानेंगे तो...

**वि. प्र. मिश्र :** मैं निवेदन करूं. ये परवर्ति शब्द हैं. भागवतमें लयका नाम ही 'बाध' है.

**गो. श्या. म. :** परवर्ति यानि उपनिषद्में परवर्ति हो तो पता नहीं. यह

उपनिषद्का शब्द है. ''**तज्जलान्**'' में तस्मिन् जायते लीयते अनिति इति तज्जलान्.

**पा. ना. द्विवेदी :** बाधः कः ? बाधनिवृत्तिः. स्वस्मिन् उपादानेएव यस्य नाशो भवति स 'बाध'शब्देन उच्यते. उपादानेन सह यस्य निवृत्तिः सो निवृत्तः इति उच्यते. शुक्तिकारजतस्यापि शुक्त्यविच्छिन्नचैतन्ये यद् अज्ञानं शुक्तिविषयकं तदेव उपादानहेतुः रजतस्य. रजतम् उपादाने सह तत्र विलीयते. किन्तु शुद्धब्रह्मनिष्ठाज्ञानपरिणतं जगत्, घटपटादि, यदा दण्डेन नश्यति तदा स्वोपादानएव तस्य लयो जायते. निवृत्तिस्तु ब्रह्मविषयकवृत्त्या जायते अद्वैतिनां मते. अतः इदं न वाच्यं यद् रजतस्य लयो अज्ञानेन भवति. स्वोपादानसहितस्यैव रजतस्य तत्र नाशः...

**गो. श्या. म. :** नहि. अहम् एवं न वदामि. अज्ञाने लयो न भवति. अज्ञानएव लयो भवितुम् अर्हति ब्रह्मणि लयो भवितुं न अर्हति यदि ब्रह्म तस्य परिणाम्युपादानं न स्यात्. नहि विवर्तस्य कदाचित् परिणाम्युपादाने बाधो दृश्यते नवा तस्य अधिष्ठाने लयो भवति.

**पा. ना. द्विवेदी :** अद्वैतसिद्धान्तः उच्यते. शुद्धं निर्विशेषं ब्रह्म जगत्कारणम् इति न अङ्गीक्रियते. सोपहितं ब्रह्म जगत्कारणम्. परिणतिः भवति. अधिष्ठानतया...

**गो. श्या. म. :** अत्रतु एवं भवति. जिज्ञास्यं ब्रह्म अन्यद् उपास्यं च अन्यत् ज्ञेयं च अन्यत्. कोऽयं ब्रह्माद्वैतवादः ?

**पा. ना. द्विवेदी :** आनन्दमयाधिकरणे भगवत्पादैः उक्तम्. द्विविधं हि ब्रह्म.

**गो. श्या. म. :** सूत्रकारेणतु ''**अथाऽतो ब्रह्मजिज्ञासा**'' ''**यतो वा इमानि भूतानि जायन्ते. येन जातानि जीवन्ति. यत्प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासस्व तद् ब्रह्म**'' इत्येव उक्तम्. भगवत्पादेन श्रीशङ्कराचार्येणापि उक्तमस्ति ''इत्युपासीत'' इत्येवं यत्र 'इति'प्रयोगः चेद् उपासना मन्तुं शक्या. तत्र पारमार्थिकत्वं तस्य विधेयस्य नास्ति. यत्र 'इति'शब्दरहितं विधानं भवति

तत्रतु पारमार्थिकत्वं भवति इति भगवत्पादानां भाष्ये उक्तिः वर्तते. "**तद् ब्रह्म इत्युपासीत**" इत्येतादृग्वचनं तत्र नास्ति.

**वि. प्र. मिश्र :** उपनिषदि तत्प्रकरणम् उपासनायाएव. यत्र...

**गो. श्या. म. :** अहं तन्न वदामि. अहम् एवं वदामि यद् भगवत्पादेन यादृशो विवेकः कृतः. कुत्र उपासना अङ्गीकर्तव्या, कुत्र मिथ्या आरोपो अङ्गीकर्तव्यः उपासनार्थम्, कुत्रच पारमार्थिकत्वं तस्य तथा भवति. नो चेद् भवद्भिः एवं उच्यते "**तत्त्वमसि**" इत्यत्रापि वयम् एवम् अङ्गीकर्तुं शक्नुमः "तव तत्त्वेन उपासना कर्तव्या". कुतो न वक्तुं शक्यते? एतस्मादेव भगवत्पादाः एवं वदन्ति. "**तत्त्वमसि**" इत्यत्र "**अहं ब्रह्मास्मि**" इत्यत्र "अहं ब्रह्म इति उपासीत" इति उक्तिः नास्ति. "तत् त्वम् इति उपासीत" इति उक्तिः नास्ति. 'इति'पदरहितं "तत् त्वम्" इत्येतादृशः उद्देश्य-विधेयभावः 'इति'पदरहितो "अहं ब्रह्म" इत्येतादृशः उद्देश्यविधेयभावः तद्वदेव मया उच्यते आभाससमानयोगक्षेमतया मया एवम् उच्यते : "तद् ब्रह्म"इत्यत्र 'इति'पदं नास्ति. यदि इयं भगवत्पादानां युक्तिः समीचीना नास्ति तदा अहं न वक्तुं शक्नोमि. यदि समीचीना तदा अत्र 'इति'पदन्तु नास्ति. अयमेव मम अभिप्रायः. यदि जिज्ञास्य-ज्ञेयब्रह्मणोः भेदः अङ्गीक्रियते चेद् जिज्ञासा अन्यस्य ज्ञानम् अपरस्य एवं यदि भवति चेत् तदा ब्रह्मद्वैतापत्तिः आयाति.

**बी.आर्.शुक्ल :** व्यावहारिक-पारमार्थिकभेदेन द्वैतम् अस्माभिः स्वीक्रियतएव.

**वि. प्र. मिश्र :** "**आर्तो जिज्ञासुरर्थार्थी**" इत्यत्र जिज्ञासायाः उपासनान्तःपातित्वात.

**गो. श्या. म. :** किन्तु यद् जिज्ञासितं तद् ज्ञेयतया न ज्ञायते चेद् अन्यद्धि जिज्ञास्यं अन्यत् च ज्ञेयं तदा जिज्ञासायाः क्वोपयोगः? घटजिज्ञासायां पटज्ञानम् उपदिश्यते चेत्! एतादृग्गुरोः पुरतः को हि जिज्ञासां कुर्यात्?

पा. ना. द्विवेदी : तथा नास्ति. आनन्दमयाधिकरणे स्पष्टतया भगवत्पादैः उक्तम् : द्विविधो ब्रह्मोपदेशः. सविशेषरूपेण निर्विशेषरूपेण च. जिज्ञास्यं ज्ञेयं निर्विशेषं ब्रह्म. सविशेष्यं च उपास्यम् अभ्युदयकार्यार्थम्. मोक्षार्थं च ज्ञेयं ब्रह्म. तर्हि यद्ब्रह्म निर्विशेषं शुद्धं निर्गुणं तद् जिज्ञास्यं नतु सविशेषम्. सविशेषं ब्रह्म उपास्यम्. यश्च भेदः उच्यते भवद्भिः सविशेष-निर्विशेषयोः भेदः. नास्ति भेदः.

गो. श्या. म. : सूत्रे तादृशी प्रतिज्ञा न कृतेति अस्माकम् उदरे पीडा भवति. यदि ''अथातो जिज्ञास्योपास्यब्रह्मणोः जिज्ञासा''...

पा. ना. द्विवेदी : सूत्रे ''सविशेषं ब्रह्म जिज्ञासितव्यम्'' इत्यपि न उक्तम्. केवलं ''ब्रह्म जिज्ञासितव्यम्'' इत्येव उक्तम्.

प्र ादाचार : किन्तु ''**अथातो ब्रह्मजिज्ञासा**'' इति प्रथमसूत्रे यस्य ब्रह्मणो जिज्ञास्यत्वम् उक्तं तस्यैव ब्रह्मणो लक्षणम् उच्यते द्वितीये सूत्रे ''**जन्माद्यस्य यतः**''. एवञ्च ''**जन्माद्यस्य यतः**'' इति सूत्रे यल्लक्षणम् उक्तं तत् सविशेषब्रह्मणो लक्षणं भवति. एवञ्च सविशेषब्रह्मैव जिज्ञास्यत्वेन वक्तुं स्यात् प्रथमसूत्रे. यदि प्रथमसूत्रे निर्विशेषं ब्रह्म जिज्ञास्यत्वेन वक्तुं स्यात् तर्हि तत्र जन्मादिकारणत्वं कथं तस्य लक्षणं भवेत्?

पा. ना. द्विवेदी : जगज्जन्मादिहेतुत्वोपलक्षितं निर्विशेषं ब्रह्म इति अर्थः.

गो. श्या. म. : सूत्रे नास्ति तादृशी प्रतिज्ञा. ''**यथाचायमर्थः सर्वेषां वेदान्तानां तथा वयम् अस्यां शारीरकमीमांसायां प्रदर्शयिष्यामः**'' **इति सम्पूर्णमपि अध्यास्यभाष्यं उत्सूत्रमिव लक्ष्यते.**

पा. ना. द्विवेदी : तेषां मते सविशेष-निर्विशेषब्रह्मणोः भेदो भवति. अत्रतु भेदो नास्ति. भेदस्तु पारमार्थिको नाङ्गीकृतः अद्वैतवादिभिः. पारमार्थिको भेदो नास्ति चेत् सविशेष-निर्विशेष...

प्र ादाचार : यदि पारमार्थिको भेदो नास्ति, एकं ब्रह्म उपास्यम् अन्यत्तु जिज्ञास्यम्. यद् उपास्यं न तत् जिज्ञास्यम्. यच्च जिज्ञास्यं न तद् उपास्यम्.

पा. ना. द्विवेदी : एवं न. तदेव ब्रह्म जिज्ञास्यं तदेव उपास्यम्. उपासना गुणधर्मारोपणं विना न सम्भवतीति गुणान् धर्मान् च आरोप्य तदेव विशुद्धं ब्रह्म उपास्यत्वेन विहितम्. नतु अन्यत् किञ्चिदस्ति सविशेष-निर्विशेषब्रह्मणोः. अयम् अभिप्रायः.

प्र ादाचार : एतत्प्रबन्धविषये वक्तुमिच्छामि. एतैः श्रीविन्ध्येश्वरीप्रसादमहा-भागैः भागवतप्रस्थानरीत्या निरूपणं क्रियते इति उच्यते. क्वचित् च अद्वैतसिद्धान्तोऽपि तत्र यश्च सूत्रप्रस्थानाधारेण अद्वैतसिद्धान्तः निरूपितो वर्तते सोऽपि सिद्धान्तः तत्र सम्मिश्रितो वर्तते. तत्र भेदः कुत्र भवति कुत्र नास्ति इति न सम्यग् ज्ञायते. भवद्भिः माया प्रातिभासिका भवति इति उच्यते. परन्तु अद्वैतसिद्धान्ते मायायाः प्रातिभासिकत्वं न अङ्गीकृतम्. व्यावहारिकत्वम् इत्येव. सत्तात्रयम् अङ्गीक्रियते चेत् तर्हि व्यावहारिकी सा माया इत्येव वाच्यम्. तैश्च सदसद्रूपा भवति माया इत्येवं भागबतश्लोके यदा श्रूयते तदानीं भवद्भिः नहि तादृशी माया विवक्षिता वर्तते अन्यैव माया भागवतप्रस्थाने वर्ण्यते इति उच्यते. अपिच पुनश्च 'सदसद्रूपा' इति पदश्रवणेऽपि तत्र अध्याहारः कोऽपि करणीयः इति उच्यते. एवम् एतद्विषये किञ्चित् स्पष्टतया वक्तव्यम् इति मम भाति. कोऽयं मायासिद्धान्तः ? किं अद्वैतसिद्धान्तप्रतिपादितः ...

वि. प्र. मिश्र : श्रीमद्भागवते समेषां सिद्धान्तानां वैलक्षण्यं वर्तते. इत्यस्मादेव हेतोः समेऽपि टीकाकृतः प्रभवेयुः टीकाकृतः...

गो. श्या. म. : शुद्धाद्वैतवादं ...

वि. प्र. मिश्र : शुद्धाद्वैतवादमपि. मया तु कथ्यते यत् तत्र आरम्भवादोऽपि अस्ति. इत्यस्माद् हेतोः मया सर्वसमन्वयप्रस्थानत्वेन श्रीमद्भागवतम् अङ्गीक्रियते. तत्र केवलाद्वैतस्यैव चर्चा नास्ति. श्रीमद्भावतस्य या माया सा विलक्षणा.

गो. श्या. म. : शुद्धाद्वैतस्य चर्चा भागवते कुत्र वर्तते इत्यपि भवद्भिः निरूपणीयम्. वयं श्रोतुकामाः. एक बात और.

श्रीविन्ध्येश्वरीप्रसादजीने यहां वल्लभाचार्यका एक वचन असद्वादके समर्थनमें उद्धृत किया है. वहीं महाप्रभुने उस वचनका अत्यन्त स्पष्ट शब्दोमें खुलासा भी किया है. उसका उल्लेख यहां करना आवश्यक है. अन्यथा अनुक्तोपालम्भ हो जायगा इसलिये मैं आप सभीका ध्यान आकृष्ट करना चाहता हुं. वहां महाप्रभु यह कहते हैं कि **''सद्बुद्ध्या सर्वथा सद्भिः न सेव्यमखिलं जगत्''**. जगत्का सद्बुद्धिसे सेवन नहीं करना चाहिये. यदि सद्बुद्धिसे सेवन करनेमें कृष्णसेवनाका परित्याग होता है तो महाप्रभु कहते हैं कि उस स्थितिमें हम असद्वादी हैं. और वहां अत्यन्त सावधानीसे और स्पष्टरूपसे महाप्रभु वल्लभाचार्यने निराकरण किया है कि फिर इस जगत्को सदसद्विलक्षण भी नहीं परन्तु सर्वथा असद् ही मानना पड़ेगा. जो आप( ? )का सिद्धान्त नहीं है. महाप्रभु उस अन्तिम छौर तक गये हैं. यदि जगत्की सत्यता कृष्णसेवामें किसीको आड़े आती है तो हम जगत्की असत्यताका प्रतिपादन करेंगे. आओ करो मुकाबला हमारा. परन्तु, यदि जगत्की सत्यता कृष्णसेवामें सहायक होती है तब तो जगत् कृष्णलीलारूप होनेसे सदात्मक ही है.

**वि. प्र. मिश्र :** प्रश्न यह है कि कृष्णसेवाको भी तो कोई सिद्धान्त देना पड़ेगा! यदि कल्पित हैं तब तो कुछ भी करिये परन्तु यदि दर्शनसे सिद्ध कृष्ण हैं; श्रुतिसिद्ध हैं तभी वे बन पायेंगे. ब्रह्म यदि आत्मीय मात्र रह जायेगा तो छूटेगा. निद्रामें सारी चीजें छूट जाती हैं. उसको आत्मरूप मानना पड़ेगा. इसलिये कृष्णको श्रुतिसिद्ध और युक्तिसिद्ध दोनों मानना पड़ेगा.

**गो. श्या. म. :** हम तो कृष्णको **''ब्रह्मेति परमात्मेति भगवानिति शब्द्यते''** कहते हैं. हम कृष्णको व्यापक ब्रह्म भी मानते हैं.

परमात्मा भी मानते हैं; अन्तर्यामी भी मानते हैं आत्मतया. "**अहमात्मात्मनां धातः प्रेष्ठः सन् प्रेयसामपि, अतो मयि रतिं कुर्याद् देहादिः यत्कृते प्रियः**". तो आत्मा परमात्मा=अन्तर्यामी. इस अर्थमें हम उसको आत्मा भी मानते हैं. और केवल आत्मा ही नहीं उसको हम भगवान् भी मानते हैं. व्यापिवैकुण्ठादि लोकमें ऐश्वर्य वीर्य यश श्री ज्ञान वैराग्यादि गुणों सहित अपने किसी दिव्य स्वरूप या विग्रह में वह भगवान् भी है. और केवल वैकुण्ठमें ही विराजमान् भगवान् ही नहीं है, सातवें आसमां पर जैसे अल्लाताला बिराजता है, वह जगत्में श्रीरामतया, श्रीवामनतया अनेक अवतारोमें प्रकट भी होता है. और वह जहां-जहां जिस-जिस रूपमें प्रकट होता है. उन सारे रूपोमें उसकी ब्रह्मरूपता, उसकी परमात्मरूपता, उसकी भगवद्रूपता, उसकी अवताररूपता, यह तो अल्पीयसी कथा है, विग्रहरूपता भी जहां है, शिलादिमें, वहां भी हम उसकी पारमार्थिकी सत्ताको स्वीकारते हैं. और एक बात बताउं ...

**वि. प्र. मिश्र :** भगवत्पाद शङ्कराचार्य भी मानते हैं. और अन्तमें मधुसूदनसरस्वती तक आते आते ...

**गो. श्या. म. :** हमको तो उसके जड़त्वसे भी आपत्ति नहीं है क्योंकि हम यह मानते हैं कि यदि केवल जड़बुद्धि हमको है तो "**शिलाबुद्धिर्न कार्या तत्र नारद कर्हिचित्, ज्ञानानन्दात्मको विष्णुः यत्र तिष्ठति अचिन्त्यकृत्**". ज्ञानानन्दात्मक विष्णु कहीं अपना शालिग्रामकी तरह शिलारूप भी प्रकट करता है तो हम आपत्ति करनेवाले कौन होते हैं? वह जिस रूपमें अपनेको प्रकट करता है उस रूपमें हम उसकी उपासना करने तैयार हैं. और हमको यह भय लगता है कि...

वि. प्र. मिश्र : आप लोग आभूषणोंको भी सत्य मानते हैं हम लोग केवल सोनेको ही सत्य मानते हैं. आभूषण तो हम भी पहनेंगे लेकिन सोना समझकर पहनेंगे. आप सोनेको भी आभूषण समझकर पहनेंगे अन्तर केवल इतना है.

गो. श्या. म. : हम तो सोना और आभूषण दोनोंमें तादात्म्य मानते हैं. हम भी यह बात कहते हैं कि केवल आभूषणमें ही पर्यवसायिनी जिसकी बुद्धि है उसकी बुद्धिको *रिफर्* करके यह कहा गया है कि जगत् मिथ्या है. जिसकी सुवर्णबुद्धि है तब फिर जगत्को मिथ्या कहने-माननेका कोई हेतु नहीं रहता.

कश्चित् : तब फिर केवलाद्वैत और शुद्धाद्वैतमें कोई भेद नहीं रहा.

गो. श्या. म. : इस अर्थमें महान् भेद है कि आभूषण सुवर्णज्ञानसे बाधित नहीं होते हैं. प्रत्युत उनके मूल्यमें द्वैगुण्य आता है : सुवर्णमूल्य और आभूषणकी कुशल घड़ाईकी कारिगरीका मूल्य भी!

----*----

## संगोष्ठ्युत्तरलेखनम्

### गोस्वामी श्याममनोहरः

''प्रस्थानरत्नाकरनिरूपितकरणकारणसामान्यस्वरूपस्य श्रीमद्भागवतप्रस्थानदृष्ट्या परीक्षण''परेण स्वकीयेन आलेखपत्रेण श्रीमद्भिः डो.विन्ध्येश्वरीप्रसादमिश्रैः अस्मासु नूनं बहूपकृतं न तत्र कश्चन शंकालेशोऽपि. एतेषां श्रीमद्भागवतपुराणे हि असाधारणं वैदुष्यं वरीवृत्यते, येन तमेतं पुराणं सर्वसन्देहवारकत्वेन अभ्युपगच्छताम् अस्मादृशानां च कृतेऽपि नितान्तं काञ्चन स्पृहणीयतां तदेतद् वैदुष्यम् आवहतीति न तां स्वहृदयाद् अपन्होतुं शक्नुमः!

तथापि भगवत्पादश्रीमच्छंकराचार्याणामेव मतम् अनुसृत्य श्रीमद्भागवतार्थावगमनिष्ठा एतेषां हृदये बद्धमूला आहोस्वित् श्रीमद्भागवतव्याख्यानव्याजेनापि

शांकरवेदान्तैकपरिपोषणनिष्ठा वा इति पर्याकलने अहम् आत्मानम् असमर्थमिव भावये.

यतोहि एकत्र ''श्रीमद्भागवते नैकान्ततो वाल्लभस्य शुद्धाद्वैतस्य अन्यस्य वा केवलाद्वैत-विशिष्टाद्वैत-द्वैताद्वैत-द्वैतादीनाम् एकमतस्यैव समर्थनं, तत्र-तत्र अधिकारिभेदानुकूलं समेषां वेदान्तभेदानाम् आस्तिकषड्दर्शनानामपि च नैकेषां, विशिष्य साङ्ख्य-योग-मीमांसादीनां स्वसिद्धान्तानुगुणम् अङ्गीकाराद्'' इति उज्जुघोषयिषन्तोऽपि इमे सर्वत्र केवलाद्वैतवादमेव प्रमापयन्ति. साग्रहञ्च खलु सर्वत्र श्रीमद्भागवतस्य वाल्लभव्याख्याने दूषणमेव बाभावयन्त्यपि. पुनश्च उपक्रमे ''मया सर्वसमन्वयप्रस्थानत्वेन श्रीमद्भागवतम् अङ्गीक्रियते. तत्र केवलाद्वैतस्यैव चर्चा नास्ति. श्रीमद्भावतस्य या माया सा विलक्षणा'' इत्यपि उच्चैः कथयन्ति!

अस्माकं विद्वद्गोष्ठीसमायोजनप्रयोजनन्तु तावत् तत्तद्दर्शनसम्प्रदायानुसारेण अस्मन्मतौचित्यानौचित्यचिन्तनमेव. न तेन अस्मन्मते एतैः प्रदर्शितेन अनौचित्येन कश्चन पीडालेशोऽपि प्रत्युत गोष्ठीप्रयोजनसम्पूर्त्या महानेव सन्तोषः प्रादुर्भवति! तथापि एतदालेखपत्रे यदि उपक्रमांशस्य प्रामाण्यं तदा आलेखमध्यभागे शांकरवाल्लभवेदान्तयोः समन्वयो येन भागवतवचनेन सिद्धयेत् तादृग्व्याख्यानप्रतिपत्तिः हि अभीष्टा आसीत्. यदितु आलेखमध्यभागे प्रदर्शितस्य वाल्लभवेदान्तखण्डनपूर्वकशां-करवेदान्तमण्डनस्य प्रामाण्यं तदा श्रीमद्भागवतं सर्वसमन्वयाख्यं तुरीयं प्रस्थानम् इति वादाय वितीर्णो हि जलाञ्जलिः!

अथ वाल्लभवेदान्तिभिः कृतस्य शांकरमतालोचनस्य निरसनं विना श्रीमद्भागवतस्यापि समन्वयप्रतिपादकत्वं न शक्यवचनम् इति चेत्, तदा मिथो विरोधाद् आलेखोपक्रमगता सर्वसमन्वयप्रतिज्ञा अपार्थकैवेति घट्टकुट्यां प्रभातवृत्तान्तः संवृत्तः! नच अविद्यामोहग्रस्तानां ब्रह्मवादिब्रुवाणां वाल्लभवेदान्तिसदृशानां मनस्तोषायैव श्रीमद्भागवते परमार्थतः कार्यकारणभावातीतस्य सकलद्वैतोपाधिरहितस्य ब्रह्मणोऽपि क्वचित्क्वचित् परिणाम्युपादानतापि निरूपिता व्यवहारेच अभ्युपगतापीति सर्ववेदान्तसमन्वयपरता अस्य शास्त्रस्य अक्षुण्णैव इति वाच्यं, निर्मत्सरणां सतां प्रोज्झितकैतवधर्मोपदेशपरस्यापि शास्त्रस्यास्य कैतवपूर्णोपदेशकत्वापातात्. तस्माद् निबन्धोपक्रम-मध्यभागयोः ध्रुवं एकवाक्यताराहित्यमेव प्रतिभाति. तत्परिहाराय चेमे महोदयाः नूनं प्रभवेयुरेवेति वयन्तु स्वकीयं भृशं कार्तज्ञ्यमेव इह विनिवेदयामो,

अस्मदायोजितविद्वद्गोष्ठीप्रयोजनसाफल्याय एतादृशं परिश्रमपूर्णं पाण्डित्यप्रकाशकं च निबन्धं सुहृद्भिः एतैः प्रस्तुतमिति.

अथ प्रस्थानरत्नाकरकृतां करणलक्षणविमर्शे मिश्रमहोदयाः यद् निरूपयन्ति—

"व्यापारवदसाधारणं कारणं करणम् अत्र असाधारणत्वञ्च अत्र कार्योत्पादनकाले तदनुकूलव्यापारातिरिक्तव्यापाररहितत्वं कारणेन कार्यजनने यदन्तरा अवश्यम् उपयुज्यते स व्यापारो... श्रीमद्भागवते 'करण'पदमिदं स्पष्टतया अस्मिन् अर्थे न उपयुक्तं किन्तु सृष्टिप्रक्रियानिरूपणे भगवतः तात्त्विकस्वरूपनिरूपणे वा इन्द्रियसमष्ट्युपलक्षकत्वेन व्यवहृतम्"इति.

यच्च इतःपरं महता फटाटोपेन भागवतश्लोकेषु यत्र-यत्र ब्रह्मणः करणाजन्यज्ञानरूपत्वं तत्र तथात्वेऽपि व्यवहारे करणग्रामस्य बुद्धि-बुद्धीन्द्रियादिरूपस्य तैजसाद् अहङ्काराद् अभिव्यक्तिः या निरूपिता तत्संकलनेन अनेकैः भागवतवचनैः शुद्धबुद्ध्यादिकरणग्रामस्यापि प्रमात्मके भगवत्तत्त्वज्ञाने प्रकृष्टोपकारकतामपि अभ्युपगच्छन्ति. अभ्युपगम्यैव एवं पुनः तत् प्रकृष्टत्वञ्च "यद्व्यापारानन्तरं फलनिष्पत्तिः तद्" इति अङ्गीकुर्वन्ति.

तदनु पुनः मिश्रमहोदयाः कथयन्ति :—

"किन्तु एतद् व्यावहारिक्यामेव सत्तायां न पारमार्थिक्यामिति प्रायशः सर्वत्रापि भागवतकृतां द्वैपायनर्षीणाम् अभिमतिः. भगवानेव वस्तुतो अद्वयज्ञानम् **'वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्, ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'** (तत्रैव १।२।११) इति ग्रन्थोपक्रमएव कक्षीकारात्. तच्च ज्ञानं निरपेक्षं करणादिसामग्र्यनधीनम्. **'नैतन्मनो विशति वागुत चक्षुरात्मा प्राणेन्द्रियाणि च यथाऽनलमर्चिषिः स्वाः'** (तत्रैव ११।३।३६) **'ज्ञानं स्वतः'** (तत्रैव ११।४।४) इति वचनैरपि च उक्त्वात्. किञ्च, **'ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान्, दृश्यादिभिः पृथग्भावैर् भगवानेक ईयते'** (तत्रैव ३।३२।२६) इत्यत्र **'ज्ञानमेकं पराचीनैर् इन्द्रियैर् ब्रह्म निर्गुणम् अवभाति अर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा'** (तत्रैव ३।३२।२८) इत्यत्र च अन्यत्रापि, ज्ञाने करणादीनां व्यावहारिकत्वस्यैव पर्यनुयोगात्. तथाच, **'त्वमकरणः स्वराडखिलकारकशक्तिधरः'**

(तत्रैव १०।८७।२८) इति अस्मिन् वेदस्तुतिवचनेऽपि आपाततो यद्यपि ब्रह्मणो निर्गुणस्वरूपे न इन्द्रियाणाम् अपेक्षा प्रसक्तिः वा इति उच्यते तथापि पदशक्तिमहिम्ना 'अखिलकारकशक्तिधर' इति विशेषणोपन्यासेन भगवतएव समग्रक्रियाश्रयित्वम् अथच कर्तृत्वं, करणादीनां तद्विवर्त्तमात्रत्वञ्च अङ्गीचक्रुः श्रीमद्भागवतप्रणेतारः''.

इत्यादिकं बहु मिथो विरुद्धमेव वदन्तो वाल्लभवेदान्ताभिमतब्रह्मणइव स्वाभिप्रेतप्रतिपादने अश्रुतपूर्वां कामपि विरुद्धधर्माश्रयतां प्रकटीकुर्वन्ति इमे श्रीविन्ध्येश्वरीमहाभागाः !.

ममतु अत्र एवं प्रतिभाति यद् वाल्लभवेदान्ते श्रीकृष्णस्यैव ब्रह्मत्वं परमात्मत्वं भगवत्त्वं चापीति ब्रह्मत्वेन "**यद् वाचानभ्युदितं... यन्मनसा न मनुते... यत् चक्षुषा न पश्यति. यत् श्रोत्रेण न शृणोति... तदेव ब्रह्म त्वं विद्धि**" (केनोप.१।४-७) इति श्रुतेः मनोबुद्धीन्द्रियादिसकलकरणागोचरत्वं यथा, तथा परमात्मत्वेनतु पुनः "**को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्याद्, एष ह्येव आनन्दयाति**" (तैत्ति.उप.२।६) इति श्रुतेः आत्मानन्दानुभूतिकरणरूपनिजान्तःकरणगोचरत्वमपि; तथैव भगवत्त्वेन "**भक्त्यात्वनन्यया शक्य अहमेवंविधोऽर्जुन ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च**" (भग.गीता.११।५४) इति श्रीकण्ठोक्तेः बाह्येन्द्रियाणामपि भक्तिरूपव्यापारेण गोचरत्वमपि, भूमौ अवतीर्णस्यतु तस्यैव "**गोपीदृगुत्सवदृशिः**" — "**गोपीनां नयनोत्सवः**" — "**गोपीनां परमानन्दः आसीद् गोविन्ददर्शने**" (भाग.पुरा.१०।१४।४७, ३६।१५, १९।१६) इत्येवमादिभागवतवचनेभ्यः प्रसिद्धमेवेति अन्तर्बाह्यसकल-करणगोचरत्वमपि सिद्धमेवेति तस्यैतादृशस्य विरुद्धधर्माश्रयस्य श्रुतिगीतासूत्रभागवतप्रतिपाद्यस्य तत्त्वस्य करणस्वरूपनिरूपणे प्रस्तुतिः आम्रान् पृष्टः कोविदारान् व्याचष्टे न्यायम् अनुसरति नवा इति एकः प्रश्नः.

तत्र परमार्थे करणागोचरं व्यवहारेतु पुनः करणगोचरं तच्च करणं प्रकृष्टोपकारकम् इत्येवमादिप्रतिपादनं न न अप्रासंगिकं किमु! यतो हि करणस्वरूपचिन्तेयं किल न पुनः करणगोचरवस्तुस्वरूपचिन्तेति मिश्रमहोदयैः प्रत्यभिज्ञातव्यम्.

किञ्च "व्यापारवदसाधारणं कारणं करणम् अत्र असाधारणत्वञ्च अत्र कार्योत्पादनकाले तदनुकूलव्यापारातिरिक्तव्यापाररहितत्वं कारणेन कार्यजनने यदन्तरा

अवश्यम् उपयुज्यते स व्यापारः'' इति यदि भागवते यथोदितरूपेण नोपलभ्यते चेत् युष्मदभ्युपगतं ''प्रकृष्टोपकारकत्वं करणत्वं प्रकृष्टत्वञ्च यद्व्यापारानन्तरं फलनिष्पत्तिः तद्'' करणलक्षणमपि भागवते कुत्र निरूपितम् ? यदितु यथोक्तरूपेण अनुपलब्धस्यापि अस्य भागवतोपवर्णितकरणस्वरूपे संगतिः शक्यनिरूपणा इति चेत्, तदा प्रस्थानरत्नाकरोक्तकरणलक्षणस्यापि संगतौ न कांचन बाधां पश्यामः.

अपिच मिश्रमहोदयाः कथयन्ति '' 'अखिलकारकशक्तिधर' इति विशेषणोपन्यासेन भगवतएव समग्रक्रियाश्रयित्वम् अथच कर्तृत्वं, करणादीनां तद्विवर्त्तमात्रत्वञ्च अङ्गीचक्रुः श्रीमद्भागवतप्रणेतारः'' इति तत्र करणादयो ज्ञानरूपभगवतो विवर्तरूपेण परिणामरूपेण वा सन्ति चेद् भवन्तु नाम तस्य प्रकृते सन्दर्भे क्व उपयोगः ? तस्माद् यथा मिश्रमहोदयैः उदाहृतं **''निमित्तभेदाद् एकैव भिन्ना शक्तिः प्रतीयते, षोढा कर्तृत्वमेवाहुः तत्प्रवृत्तेः निबन्धनम्''** ( वाक्यप.३ साधनसमुद्दे.३६ ) इति तत्र 'एकैव' इति पदप्रयोगात् मायाविद्ययोः निरासेन ब्रह्म एकमेव स्वनिमित्तान्यपि उद्भाव्य षड्विधकारकशक्त्या विलसति इति निश्चिनुमः.

यत्तु मिश्रमहोदयाः ''श्रुतिस्तुतौ 'त्वमकरण...'इति पद्यव्याख्याने 'सर्वाः शक्तीः कारकाणां भगवानेव सर्वदा बिभर्ति. तत्तदवसरे तां-तां तत्र स्थापयति'( भाग.सुबो.१०।८७।२८ ) इत्यत्र 'तत्तदवसर'इति पदयोगेन, कदाचित् ताः नापि स्थापयति, प्रमातुः ब्रह्मावबोधात्मिकायां पारमार्थिक्याम् अवस्थायाम्. कुतः ? 'स्वराड्' इति मूलस्थपदशक्त्या स्वेनैव अद्वयज्ञानरूपेण राजते इति अभिप्रायाभिव्यञ्जनाद् इति प्रकारान्तरेण अस्मदभिमतं सुतरां प्रमाणीभवति. इत्थं प्रस्थानरत्नाकरोक्तं लक्षणम् अव्याप्तं, व्यवहारएव चरितार्थत्वात् तत्त्वस्य च युगपद्व्यवहारपरमार्थोभयसङ्गतत्वाद्'' इति आहुः.

तदेतद् अनालोचितपूर्वोत्तरग्रन्थतात्पर्योट्टंकनौत्सुक्यानां कदाचित् शोभेत न पुनः मिश्रमहोदयसदृशानां विद्वदुत्तमानां, यस्माद् उदाहृतवाक्यांशेऽपि **''सर्वाः शक्तीः कारक्काणां भगवानेव सर्वदा बिभर्ति... तत्तदवसरे तां-तां तत्र स्थापयति''** इति वाक्यांशाभिप्रायपर्यालोचनयापि **कस्य** इदं न स्फुटं यत् स्वस्मिन्तु सर्वाअपि कारकशक्तीः भगवान् सर्वदैव बिभर्तीति—न कदाचिदपि तासां शक्तीनां

स्वप्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वम्. तथाहि 'तत्र' इति स्वोपादानककार्यरू-पेषु, 'तत्तदवसरे' इति तत्तद्व्यापारेण फलप्राकट्यावसरे, 'तासां-तासाम्' इति शक्तीनां, स्थापनम् इति अभिप्रायः. नच एतावता स्वस्मिन् कदाचित् स्थापनं कदाचित् च न इति आशंकायाः प्रसंगो अत्र. अतएव आचार्यचरणाः वदन्ति **''स्वेनैव राजते सर्वसमर्थं स्वरूपमेव तस्य. अन्यथा इन्द्रियाणां तत् सामर्थ्यं कुतः आगच्छेत्? मूलभूतेन्द्रियकल्पनायान्तु अद्वैतविरोधः''** (तत्रैव) इति. तस्माद् ब्रह्मोपादानकतया तदात्मकेषु सर्वेष्वपि नामरूपकर्मवत्सु पदार्थेषु कारणगतशक्त्यनुगमं वदन्तो अस्मदाचार्यचरणाः कथन्नु अनामरूपकर्मविशेष-ब्रह्मवादिभिः साकं साम्यं भजेयुः? ततो हि दूरतरैव खलु प्रस्थानरत्नाकरकृदुक्तकरणलक्षणे अव्याप्तिदोषप्रसक्ति-प्रत्याशा.

किञ्च मिश्रमहोदयाः कथयन्ति '' 'कार्योत्पादनकाले तदनुकूलव्यापारातिरिक्तव्यापा-ररहितत्वम्' इति असाधारणत्वं यद् आम्नातं तदपि चिन्त्यं, वृक्षच्छेदनकार्ये कुठारस्य छेदनकार्यानुकूल-व्यापारातिरिक्त-कर्तृश्रमकरत्वरूप-व्यापारान्तरशालित्वात् खट्-खटादिरवेण तच्छाखास्थित-विहङ्गमजन-त्रासकरत्वात् च'' इति, तदपि 'नियत'विशेषणाभिप्रायकत्वेन न बहुचिन्त्यम् इति मन्ये. तथाहि वृक्षकर्मक-कुठारोन्नमननिपातनरूपस्य व्यापारस्य छेदनमेव नियतं कार्यम्. कर्तृश्रमस्तु यन्त्रेण हस्तिशुण्डाद्वारा कृते सति न नियतो, नापि वृक्षशाखासु विहङ्गमस्थितिरपि नियता यया त्रासो नियतएव स्यात्. किञ्च व्यापारोऽपि न तावद् अन्यः कश्चन इह अनुभूयते एकेनैव व्यापारेण यथा नियततया वृक्षच्छेदनं जायते तथैव अनियततयातु कदाचित् श्रमविहङ्गमत्रासावपि इति किमत्र अनुपपन्नं नाम? तस्माद् अनियतानां कर्तृश्रमविहङ्गमत्रासादिकार्याणां नियतत्वाभावादेव न तत्र लक्षणप्रसारः.

पश्चात्तु '' 'अन्ययोगव्यवच्छित्त्या कार्यजननप्रतिभासकत्वं तदनुकूलव्यापारयुक्तत्वं च करणत्वम्' इति नूत्नं, व्यवहारे परमार्थे च उभयत्र निर्बाधं तल्लक्षणं, तत्सङ्गतिः च वस्तुनः कार्यत्वं न पारमार्थिकम् अप्रच्यवमानपरतत्त्वस्य विवर्त्तमात्रत्वाद्'' इति यद् उत्प्रेक्षितं तत्तु नोभयत्रापि सम्भवति, 'अन्य'त्वनिर्वचनासम्भवादेव. तथाहि किन्नाम अन्यत्वम्? तद् यदि स्वस्माद् अन्यत्वं चेद् द्वैतात्यन्ताभावोपलक्षिते पारमार्थिके

वस्तुनि भेदप्रतियोगितायाः असम्भवादेव न तद् वक्तुं युक्तम्. अथ एतत् स्याद् आरोपितायाः हि अविद्यायाः स्वाधिष्ठाने द्वैतप्रतिभासकत्वोपगमेन द्वैतात्यन्ताभावोपलक्षिते शुद्धचिदात्मके अविद्याधिष्ठानरूपे ज्ञाने, करणत्वासम्भवेनापि, यद् आरोपितम् अन्यत्वं तद्व्यवच्छेदेन कर्तृकर्मकरणादिजननप्रतिभासजनकत्वं मायायाः संगच्छतइति न काचिद् बाधा इति चेत् न, व्यवहारे तावत् 'तदनुकूलव्यापारयुक्तत्वेनैव निर्वाहसम्भवात् 'कार्यजननप्रतिभासकत्वम्' इति व्यर्थमेव विशेषणं प्रतिभाति. प्रातिभासिकेतु 'कार्यजननप्रतिभासकत्वम्' इत्येकेनैव विशेषणेन सार्थक्ये 'तदनुकूलव्यापारयुक्तत्वम्' इति विशेषणस्यापि सुतरां वैयर्थ्यापत्तिः, पुण्यपापादृष्टयोः च स्वकार्यभूतसुखदुःखयोः प्रतिभासकत्वेऽपि स्वकार्यभूतसुखदुःखजननयोः प्रतिभासानुभावाभावेन अव्याप्तिदोषादपि. अन्यथा दृश्यमानजननकरणत्वे 'अदृष्ट'संज्ञैव नोपपद्येत. तस्माद् 'अन्यतर'पदनिवेशेन वैयर्थ्यपरिहारेऽपि इतरदोषपरिहाराभावादेव न निर्मुक्तिः.

किञ्च नूतनत्वेन अभिमते ''अन्ययोगव्यवच्छित्या कार्यजननप्रतिभासकत्वं तदनुकूलव्यापारयुक्तत्वं च करणत्वम्'' इति लक्षणे 'अन्ययोगव्यवच्छेद'रूपस्य विशेषणस्य 'कार्यानुकूलव्यापारातिरिक्तव्यापाररहितत्वे'एव पर्यवसानप्रतीतेः शब्दाडम्बरविडम्बनकत्वमेव. अथ कथञ्चित् तत्र पर्यवसानपरिहारेतु 'अन्ययोगव्यवच्छिति'पदनिर्वचनासम्भवएव. यस्माद्धि न तावत् सेयं व्यवच्छित्तिः कार्यान्तरयोगव्यवच्छित्तिः, स्वोदाहृतस्य कर्तृश्रमविहङ्गमत्रासरूपस्य कार्यान्तरस्य इहापि शक्यसम्भवात्. नवा कर्त्रन्तरयोगव्यवच्छित्तिः क्वचिद् वायुना वा बलिना हस्तिनापि वृक्षोच्छेदनोपलम्भात् च. नापि व्यापारान्तरयोगव्यवच्छित्तिः 'करवत'पदवाच्यायाः काष्ठकर्त्तर्याः व्यापारो नहि उन्नमननिपातनरूपो भवति किन्तु घर्षणरूपएवेति कुठारस्यापि अकरणत्वापत्तेः. नापिच अधिष्ठानान्तरयोगव्यवच्छित्तिः यतो 'अधिष्ठान'पदेन एकस्यैव छेद्यस्य वृक्षस्य, उत छेदनोपकरणस्य, छेत्तुः वा, सर्वेषां वा एकवद्भावेन अधिष्ठानत्वं विवक्षितम्? नाद्यद्वितीयौ, छेद्याधिष्ठानस्य कुठारकरणस्वरूपनिधारे अकिञ्चित्करत्वेन, छेदनोपकरणस्य चैत्रमैत्राद्यनेकाधिष्ठानकत्वेऽपि स्वरूपैक्याक्षत्या च अनियामकत्वात्. नापि तृतीयः, छेत्तुरपि भूमि-काष्ठासन्द-शाखान्तर-गजाद्यनेकाधिष्ठानकत्वेऽपि कुठारीयकरणस्वरूपभेदानापादकत्वादपि. नैवच चतुर्थः प्रत्येकासम्भवेन समवेतानामपि तथात्वात्. अपिच स्वयमेव उदाहृतेन ''**नास्य कर्माणि...**'' इति वचनेन करणनिषेधपर्यवसायिनः

कर्तृत्वनिषेधात् न वस्तुतो व्यवहारपरमार्थोभयसाधारणं लक्षणम् इदम्. अपिच "कार्यस्य जननं प्रातिभासिकमेव" इति गदतां युष्माकं मते 'एव'कारव्यावर्त्यं किं स्यात्? न तावद् व्यावहारिकं कार्यम् 'अहं ब्रह्मास्मि' इति वृत्तिजन्यस्य ज्ञानस्यापि निषेधप्रसंगात् मुक्त्युच्छेदापत्तेः. नापि पारमार्थिकं स्वमते अप्रसक्तत्वाद्, अन्येषान्तु मते कार्यकरणभावरहितस्य ब्रह्मणएव अभावात् च. नच **"न तस्य कार्यं करणं च विद्यते"** इति श्रुतेः तादृग् ब्रह्म अवश्यमेव स्वीकर्तव्यम् इति वाच्यम्, अस्वात्मककार्यकरणनिषेधपरत्वेनैव चारितार्थ्यात्.

ततएव ब्रह्मणि कार्य-करणभावप्रतिषेधार्थं यद् **"न अस्य कर्माणि जन्मादौ परस्य अनुविधीयते कर्तृत्वप्रतिषेधार्थं मायया आरोपितं हि तद्"** (भाग.पुरा.२।१०।-४५) इति वचनम् उदाहृतं तदपि ब्रह्मणः स्वस्माद् अत्यन्तं भिन्नस्य जगतो कर्तृत्वप्रतिषेधपरं न पुनः स्वात्मकजगत्कर्तृत्वप्रतिषेधाय तत् प्रभवेत्. लोकवत् प्रतीतं हि कर्तृत्वं प्रतिषेध्यं भवेद् न पुनः सर्वथैव अप्रतीतं श्रुत्यादिशास्त्रैः वा स्वयमेव प्रत्यापितमपि. शास्त्रप्रत्यापितन्तु कर्तृत्वं तावत् **"तद् आत्मानं स्वयम् अकुरुत" — "आत्मकृतेः परिणामात्...तदनन्यत्वमारम्भणशब्दादिभ्यः" — "अहमेवासमेवाग्रे नान्यद् यत् सदसत् परं पश्चाद् अहं यद् एतत् च यो अवशिष्येत सो अस्मि अहम्"** (तैत्ति.उप.२।७।१, ब्र.सू.१।४।२६-२।१।१४, भाग.पुरा.२।९।३२) इति अतादृगेव. सति चैवं सृष्टस्यापि जगतो ब्रह्मत्वानपायाद् न स्वस्माद् अन्यस्य कर्तृत्वं ब्रह्मणः इति तदेतद् व्याख्यातम् अस्मदाचार्यचरणैरपि **"प्रतीतं हि कर्तृत्वं प्रतिषेध्यं, भगवांस्तु स्वरूपं 'पश्चाद् अहम्' इति उक्तवान्, नतु 'मया कृतम्' इति 'अहं वा जातम्' इति. बुद्धिसौकर्यार्थमेव तथा निरूपितं—'मायया करोति' इति, 'स्वयमेव जायते' इति. तज्जत्वाद् इत्यपि तदेव जः नतु तस्माद् जातः"** (भाग.सुबो.२।१०।४५) इति.

एतेन तृतीयस्कन्धीयं **"दृश्यते असन्नपि द्रष्टुः आत्मनो नात्मनो गुणः"** (भाग.पुरा.३।७।११) इति यद् वचनम् उपन्यस्तं तत्रापि **"कार्यकारणवैजात्यं माययैव समाहितं क्षणमध्ये तया सर्वम् अन्यथैव अन्यथा भवेत्, तादृश्येव हि सा शक्तिः स्वीकर्तव्या अन्यथा न सा, क्रीडासृष्टिः तथा ज्ञानं ज्ञानेऽपि**

अज्ञानसम्भवो अभेदेऽपि यथा जीवः तथा मायैव सा तथा...ननु मायामयम् आत्मा प्रविशतीति आत्मधर्माः मायायां भवितुम् अर्हन्ति नतु मायाधर्माः आत्मनि, आत्मनि मायायाः प्रवेशाभावात् 'तमसः परस्ताद्' इति श्रुतेः...यद्यपि आत्मनि माया न प्रविशति आत्मैवतु प्रविशति तथापि प्रवेशानन्तरं तद्धर्मैः सम्बध्यते नतु अप्रविष्टः. प्रवेशोऽपि प्रतीत्यैव... तद् आह 'दृश्यते' इति... अनात्मनः प्रकृतेः देहादेः वा गुणो दृश्यत्वादिः'' ( भाग.सुबो.३।७।१० ) इति सुबोधिनीव्याख्याने समहितपूर्वत्वेन न अन्यथार्थकल्पनायै अलम्. अपिच एतत् सर्वं नातीव चित्रं मन्ये महद्विस्मापकन्तु इदमेव यत् श्रीमन्मिश्रमहोदयैः श्रीश्रीधरस्वामिप्रज्वालिता भावार्थदीपिकापि फूत्कृता ! तथाहि ''वस्तुनः कार्यत्वं न पारमार्थिकम् अप्रच्यवमानपरतत्त्वस्य विवर्तमात्रत्वाद्'' इति सन्दर्भे ''दृश्यते असन्नपि द्रष्टुः आत्मनो नात्मनो गुणाः'' इति वचनयोजनन्तु स्वस्वामिविरोधएवेति. यथाच आहः श्रीश्रीधरस्वामी ''तथा अनात्मनो देहादेः धर्मो असन्नपि तदभिमानिनो द्रष्टुः आत्मनो जीवस्यैव नतु ईश्वरस्य इति अर्थः'' इति. स्पष्टञ्च नेह परतत्त्वं विवक्षितं किन्तु जीवएव विवक्षितः. तस्माद् अनयैव दिशा अन्येषामपि वचनानां तात्पर्यनिर्धारणेन यत्र नानात्वनिषेधः तत्र भगवदसंकल्पितात्यन्तिकनानात्वनिषेधएव तात्पर्यं न पुनः सर्वभवनसामर्थ्यरूपमायाकरणकस्य भगवत्संकल्पितस्य आत्मनानात्वस्य निषेधे. तस्माद् अध्यारोपापवादौ यादृशौ भागवते अभिप्रेतौ तौतु आत्यन्तिकभेदाध्यारोपतदपवादपरावेव अवगन्तव्यौ. न पुनः ब्रह्मव्यतिरिक्तानिर्वचनीयमायाप्रयुक्तस्य अध्यारोपस्य ब्रह्माधिष्ठाने अपवादाभिप्रायकतया. मिश्रमहोदयास्तु वदन्ति ''इत्थं श्रीमद्वल्लभाचार्यमहाप्रभोः अयम् अध्यारोपापवादगर्हणात्मकः पूर्वोक्तवचनविन्यासः कोमलमतीनां स्वसिद्धान्तानुयायिनां स्वमते श्रद्धादृढीकरणार्थविहितो लीलाविलासएव'' इति तदिदं ध्रुवं सत्यं न तत्र काचन शंका. यतोहि वाल्लभाः श्रीमद्भागवतोक्तभक्तिमार्गानुगामितया नूनं कोमलमतयएव भवन्ति ! निर्विशेषब्रह्मणो रूक्षज्ञानमार्गानुगामिनो भवितुं न वयम् अर्हामइति !! परन्तु भगवत्पादश्रीमच्छंकराचार्यैस्तु स्वलीलाकाले बौद्धमतप्राबल्यम् आलक्ष्यैव बौद्धदर्शनप्रदर्शितदिशा ब्रह्मकारणतां निरस्य मायिकाध्यारोपापवादप्रक्रिया या प्रतिपादिता सातु बौद्धराद्धान्तमोहितमतीनां तद्वासनानिग्रहे असमर्थानां बाह्यमतमिश्रितवेदश्रद्धानां मिश्रमहोदयसदृशानां कृतएव किल प्रचारिता न तत्र शंकालेशोऽपि! अतो यद् मिश्रमहोदयाः निरूपयन्ति ''ततश्च ''येन करणेन यस्य कार्यस्य जननं दृश्यते

तत्प्रातिभासिकमेवेति करणलक्षणे 'कार्यजननप्रतिभासकत्वम्' '' इति. तत्रैवं सति नैतद्विशेषणस्य किञ्चित् कृत्यं शुद्धब्रह्माद्वयवादे वक्तुं साम्प्रतम्. मायिकब्रह्माद्वयवादे भवति चेत् किञ्चित् कृत्यं वदन्तु नाम ते तथा प्रच्छन्नबौद्धाः मायावादिनः. परन्तु "भक्षितेऽपि लशुने न शान्तो व्याधिः" इति न्यायेन पुनः "अविद्वद्दशायां व्यवहारस्यापि अपलापो न युज्यते तत्रच कारणकार्यनियमः स्वीकरणीयएव, तदभावे सर्वेभ्यः सर्वेषाम् उत्पत्तिप्रसङ्गाद्" इति यद् उक्तं तत्तु व्यवहारे कार्यकरणभावं विना कार्यकरणभावरहितब्रह्मवादिनां मतेऽपि न इष्टसिद्धिरिति कृतम् अनेन अन्ते प्रक्षालनीयेनैव पदकृतेन (पदकृत्येन वा) पंकस्पर्शेन! इति स्मारणीयं भवति.

किञ्च सोऽयं करणस्वरूपचिन्तायां हि कार्यकारणभावराहित्यचिन्तनोत्साहातिरेकः किं प्रातिभासिककार्यसत्तानिषेधाय उत व्यावहारिकतन्निषेधाय अथवा पारमार्थिकतन्निषेधाय वा उच्येत? नाद्यः कार्यजननप्रतिभासकत्वोपगमेन वदतोव्याघातापादकत्वात्. न द्वितीयो व्यावहारिककार्यसत्तानिषेधे बन्धाभावप्रसक्त्या 'तत्त्वमस्या'द्युपदेशस्यापि वैयर्थ्यापातात्. नापि तृतीयः स्वमते कार्यकारणभावातीते पारमार्थिके ब्रह्मणिः अप्रसक्तत्वादेव. अथ परेषान्तु अभिमते ब्रह्मणि खलु पारमार्थिकानि यानि कर्तृकरणकार्यरूपाणि अङ्गीकृतानि तन्निषेधार्थं स्वमते तथाविधकरणलक्षणोद्भावनं चेत्, तदेतत् पुष्पवत्यां सासूयकायाः निवृत्तरजोदर्शनायाः वृद्धायाः पुत्रकरणचिन्तनवत् शमोपदेशार्हमेव! व्यवहारेतु "यदवश्यम्भाविना स्वजातीय-विजातीयव्यतिरेकिणा व्यापारवता कारणेन कार्यस्य उत्पत्तिप्रतीतिः तत् तस्य कारणम्" इति अवश्यम् अङ्गीकरणीयत्वादपि तथा. किञ्च 'कार्यजननप्रतिभासकत्वम्' इति करणलक्षणे यद् उपादीयते तत् मायोपाधिकस्य शबलब्रह्मणः परमेश्वरस्य जगत्कर्तृत्वे स्वमतापेक्षितकरणप्रयुक्तस्य कार्यजननस्य प्रतिभासासम्भवादेव नैव शक्यते वक्तुं केवलाद्वैतवादिभिः. सत्ताद्वैविध्यवादिनां मतेऽपि पुनः दृश्यमानस्य जगतः प्रातिभासिकत्वेऽपि परमेश्वरकर्तृकस्य तज्जननस्य प्रतिभासासम्भवादेव.

यदपीह 'कारणलक्षणं तत्र शक्तिसङ्कल्पना'इति शीर्षकमुखेन मिश्रमहोदयैः उदितम्—

"[१] उपासनायाः कश्चन साधीयान् पन्थाः... 'एषा बुद्धिमतां

बुद्धिः मनीषा च मनीषिणां यत् सत्यम् अनृतेन इह मर्त्येन आप्नोति माम् अमृतम्' इत्यत्र [२]'अनृतेन'-'मर्त्येन' इति पदद्वयेन देहाद्युपलक्षितस्य जगतो मिथ्यात्वं तुच्छत्वं च न जातु शक्यसंवरणम्. [३] वल्लभानुयायिभिः असकृन् 'मायावादी'इति दुरुक्त्या शङ्कराचार्यभगवत्पादपदानुवर्तिनः प्रथमे श्रुत्यन्तवेदिनः केवलाद्वैतिनः तत्र-तत्र आक्षेपविषयीक्रियन्ते. [४] यदि सदसद्विलक्षणमायायाः अङ्गीकारएव, मायोपात्तत्वात् सृष्टिप्रपञ्चस्य मिथ्यात्वाभ्युपगमएव मायावादत्वेन अभिमन्यते तर्हि श्रीमद्भागवतेऽपि अस्य मायावादस्य प्रसङ्गो दुरुद्धरएव स्यात्. तत्र प्रत्येकमपि स्कन्धे सहस्रशः तादृशवचनोपन्यासः सद्भावात्... [५]इत्थं 'मायावादो' - 'ब्रह्मवादः' इति वाचारम्भणमात्रं श्रुतिस्मृतिपुराणादीनां प्रामाण्याद्''.

इति.

तत्र इदम् अवधेयं : [१]जडचेतनात्मकस्य निखिलस्यापि जगतो ब्रह्मात्मकत्वं तावद् **''ऐतदात्म्यम् इदं सर्वं, स आत्मा, तत् त्वम् असि''** (छान्दो.उप.६।८।७) इत्याद्यनेकश्रुतिस्मृतिसूत्रपुराणवचनेषु प्रतिपादितमेव. तत्र जडस्य ब्रह्मात्मकत्वं यदि उपासनायाः अकस्मात् साधीयान् पन्थाः तदा जीवस्यापि ब्रह्मात्मकत्वं ब्रह्मोपासनायाएव साधीयान् पन्थाः कुतो न? यदितु जीवस्य ब्रह्मात्मकत्वं पारमार्थिकं तदा जडस्यापि ब्रह्मात्मकत्वं कुतो न पारमार्थिकमेव स्वीक्रियते? [२]अथ देहाद्युपलक्षितस्य जगतो मिथ्यात्वं तुच्छत्वं(!?) न जातु शक्यसंवरणं **''यत् सत्यम् अनृतेन इह मर्त्येन आप्नोति माम् अमृतम्''** इति वचनसिद्धम् इति चेत्, तर्हि जपाकुसुमसंनिहितस्फटिकरक्तिमोपलक्षिताः किमु सर्वाअपि रक्तिमाः भवन्ति न वा गोघटाश्वादिगताः? यस्माद् न भवन्ति तस्मात् तासां मिथ्यात्वं वदन् पुरुषः कथम् आप्तो भवेत्? तस्माद् मिश्रमहोदयैस्तु मिथ्यात्वतुच्छत्वयोः 'च'कारेण समुच्चयमपि द्योतयद्भिः तुच्छमिथ्यात्वयोः अपर्यायतां साधयन्ती अद्वैतसिद्धिरपि तुच्छीकृतैव इति मन्ये. तथाहि **''अत्र मिथ्यात्वे विप्रतिपत्तिः ब्रह्मप्रमातिरिक्ताबाध्यत्वे सति सत्त्वेन प्रतीत्यर्हं चिद्भिन्नं प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगि न वा...अत्र...इतरविशेषणद्वयन्तु तुच्छे ब्रह्मणि बाधवारणाय आदरणीयमेव''**(अद्वै.सि.१।विप्रति.निरु.) इति. [३]यत् पुनः वल्लभानुयायिभिः 'मायावादी' इति दुरुक्त्या केवलाद्वैतिनो निन्द्यन्ते इति

मिश्रमहोदयाः भृशं दूयन्ते तत्र तेषां दुःखनिराकरणे के वयं वाल्लभाः वराकाः! यावद् विवरणप्रमेयसंग्रहकाराः श्रीभारतीतीर्थाअपि **"एकस्य कार्यस्य परस्परनिरपेक्षोपादानद्वयासम्भवाद् माया ब्रह्म च मिलित्वा एकमेव उपादानम् इति वाच्यम्... मायायाः लक्ष्यान्तःपातित्वात्" — "भवेद् अयं दोषः पारमार्थिकप्रपञ्चवादे** ***मायावादे*** **तु न कोऽपि दोषः"** (विव.प्रमे.संग्र.वर्ण.५-४) इति स्वयमेव आत्मनो मायावादित्वम् अमायिकमेव अङ्गीकुर्वन्ति चेत्! तस्माद् न वयं किन्तु तएव अत्र प्रष्टव्याः यत् केवलाद्वैतिनो मायावादिनो सन्ति न वा इति. वयन्तु तपोज्ञानवैराग्यनिष्ठानां श्रीभारतीतीर्थानां भारतीं "न भारतीयं हि मृषोपलक्ष्यते नवै क्वचित् तन्मनसो मृषा गतिः!" इति अनुसन्दधानाः समाश्वस्ताएव. [४] यच्च "सदसद्विलक्षणमायायाः अङ्गीकारएव, मायोपात्तत्वात् सृष्टिप्रपञ्चस्य मिथ्यात्वाभ्युपगमएव मायावादत्वेन अभिमन्यते तर्हि श्रीमद्भागवतेऽपि अस्य मायावादस्य प्रसङ्गो" वर्ततएव इति प्रतिज्ञाय नैकानि भागवतवचनानि उदाहृतानि नूनं तेषु 'सदसदात्मकत्व'न्तु दृष्टं किन्तु इमानि वचनानि दृष्ट्वापि सदसद्विलक्षणत्वदिदृक्षातु मनसि इदानीमपि जागर्त्येव अपरितुष्टा! अपिच [५]मायावादब्रह्मवादौ उभावपि वाचारम्भणरूपौ हि मिश्रमहोदयैः प्रतिपादितौ. तत्र किम् अस्माभिः वक्तव्यं यदि उभयोरपि वादयोः वाचारम्भणत्वं मन्वते भवन्तः! वस्तुतो वाचारम्भणत्वेतु अभ्युपगते मा भूद् 'मायावादी' इत्यस्य सम्बोधनस्य दुरुक्तित्वम्. वयन्तु वाल्लभाः एतदेव वनुमहे!

मिश्रमहोदयाः वाल्लभशांकरवेदान्तयोः स्वानभिमतमपि मिश्रणं कर्तुं कथयन्ति : "केवलाद्वैतवादिनः कार्यत्वेन न अस्य जगतः सत्ताम् उररीकुर्वन्ति किन्तु कारणत्वकल्पनां व्यावहारिकीम् अङ्गीकृत्य तेऽपि जगद् ब्रह्मेति सिद्धान्तम् अभ्युपयन्त्येव. यथाहुः जगद्गुरवः श्रीशङ्कराचार्यवर्याः 'अपरोक्षानुभूतौ' : 'ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः तस्माद् एतानि ब्रह्मैव भवन्ति इति अवधारयेद् सुवर्णाद् जायमानस्य सुवर्णत्वं च शाश्वतं ब्रह्मणो जायमानस्य ब्रह्मत्वं तथा भवेत्'(४७,५१) तद्वद् वाल्लभाअपि प्रकारान्तरेण मायावादं न न स्वीकुर्वन्ति. यथा उक्तवान् लालूभट्टोपनामा श्रीबालकृष्णभट्टः 'प्रमेयरत्नार्णवे' 'व्यामोहिका माया जीवं व्यामोहयित्वा तदीयबुद्धौ प्रापञ्चिकसद्वस्तुसदृशं मायिकं पदार्थम् उत्पाद्य पुरःस्थितविषये प्रक्षिपति' इति (पृ.४). किन्तु अमी एतत्समर्थकवाक्यानां वैराग्यार्थमेव उपयोगं 'प्रतीतिरेव मुग्धानां मायिकी न वस्तुनि कश्चिद् दोषः स्वाभाविकः' (तत्रैव

पृ.४), 'पुराणेषु क्वचिद् आन्तरालिकीं सृष्टिं, क्वचिद् विषयतां, क्वचिद् अहन्काममतात्मकं संसारम् अवलम्ब्य मायिकत्वोक्तिः, क्वचिद् वैराग्यार्थं च न वस्तु स्वरूपनिरूपणाय' (तत्रैव पृ. ९१) इत्यादिभिः वाक्यैः प्रथयन्ति. अथच 'विद्धि मायामनोमयम्' (भाग.पुरा.११।७।७) 'मायात उद्यदपि यत् सदिवावभाति' (तत्रैव १०।१४।२२) 'स्वप्नाभम् अस्तधिषणम्' (तत्रैव १०।१४।२२) इत्यादि श्रीमद्भागवतोक्तवचनानाम् अभिप्रायमपि अन्यथयन्ति. किन्तु सर्वत्रापि एतादृशवाक्यजातेषु वक्तॄणाम् अभ्यर्हितत्वाद् अधिकारसम्पन्नसाधकेभ्यः तद्विधेयत्वेनैव उपदेशात् क्वापि तदर्थानाम् अनिराकरणात् च''. इति.

भो-भो अस्मद्भागवतव्याख्यानदोषज्ञाः! काचेयं भवतां माया या एकस्मिन्नेव पत्रपुटके ''इत्थं श्रीमद्भागवतमपि केवलाद्वैतवत् प्रपञ्चस्य अवास्तविकत्वमेव मनुते इति आचार्यवल्लभस्यापि न अत्र विसम्मतिः''—''वाल्लभाअपि प्रकारान्तरेण मायावादं न न स्वीकुर्वन्ति''—''श्रीमद्भागवतोक्तवचनानाम् अभिप्रायमपि अन्यथयन्ति'' इति एकनैव प्रयत्नेन भवत्सु वदतोव्याघातकरं सामर्थ्यातिशयं खलु निदधाति? तद्यदि वाल्लभैः भागवते शांकरमायावादो अभ्युपगतः चेद् न तस्य अन्यथाभावो अस्माभिः कृतो वक्तव्यः. यदितु वयं वाल्लभाः भागवतोक्तं मायावादम् अन्यथयामो न तदा यादृशो मायावादो युष्माकम् अभिप्रेतः तादृशएव अस्माकमपि अभिप्रेतो भवितुम् अर्हति! तस्माद् नूनं येनापि भणितं सुभणितमेव यद् ''**अनुपपत्तिर्हि मायाम् उपोद्बलयति अनुपपद्यमानार्थत्वाद्धि**(मायावादिनां) **मायायाः!**'' वयं तावद् ब्रह्मवादिनो, ब्रह्मणो विरुद्धधर्माश्रयतां स्वीकुर्वाणाः, भवदुदाहृतभगवत्पादानां ''**ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः. तस्माद् एतानि ब्रह्मैव भवन्ति इति अवधारयेद्. सुवर्णाद् जायमानस्य सुवर्णत्वं च शाश्वतं ब्रह्मणो जायमानस्य ब्रह्मत्वं तथा भवेत्**''इति वचने विवर्तोदाहरणम् अदृष्ट्वा परिणामोदाहरणं च श्रुत्वा तत्र विरुद्धधर्माश्रयतां वीक्षमाणाअपि न भवतां ब्रह्मवादित्वम् अभ्युगच्छामो नवा प्रकारान्तराश्रयणारोपं कुर्मः. यूयं खलु निर्विशेषब्रह्मवादिनो न तत्र अस्माकं काचन विप्रतिपत्तिरिति ब्रह्मणि खलु एवंविशेषे अनेवंविशेषे वा न युष्माकं भरः इति जानीमः. वस्तुतस्तु ''[१]**सर्वं खलु इदं ब्रह्म.** [२]'**तज्जलान्' इति शान्त उपासीत**'' (छान्दो.उप.३।१४।१) इति श्रुतौ प्रथमो अंशो न तावद् उपासनरूपकर्तव्योपदेशपरो किन्तु ब्रह्मणः सर्वतादात्म्यरूपतत्त्वोपदेशपरएव. द्वितीयो

अंशस्तु नूनं उपासनरूपकर्तव्योपदेशपरो यस्मिन् खलु ''तस्माद् जायते लीयते अनिति च=इति 'तज्जलान्' इतिबुद्धिकरणम् उपदिष्टमिति कार्यकारणभेदरूपैव उपासनाबुद्धिः कर्तव्यतया यद् उपदिश्यते तदपि उपादानोपादेयरूपत्वेन तत्त्वस्वरूपसंगतमेव, आत्यन्तिकभेदस्य ब्रह्मणि अप्रसक्तत्वात्. अन्यथा अननक्रियायाः जडे असम्भवाद् जीवस्यैव ब्रह्मभावः उपसानार्थम् उपदिष्टम् इति अकामस्यापि मायावादिनो गले पतितं स्यात्.

यत्तु मिश्रमहोदयाः : ''शक्तिद्वयकल्पनाम् अधुना विवेचयामः आविर्भावतिरोभावौ श्रीमद्भागवतसम्मतौ न वेति? कृतेऽपि वारद्वयम् अवधानतया समग्रस्य श्रीमद्भावगवतस्य आवृतिक्रमे नात्र अस्माभिः अलम्भि शक्तिप्रसङ्गे आविर्भाव-तिरोभावौ इति शब्दद्वितयी. तत्र 'गृहीतशक्तित्रितयाय' (भाग.पुरा.२।४।१२) 'शक्तिः सदसदात्मिका' (तत्रैव ३।५।२४) 'नानाशक्त्युपबृंहितः' (तत्रैव ३।१२।४८) 'भगवन् स्वशक्तिभिः' (३।२१।१९) 'सर्गादयो अस्य अनुरुणद्धि शक्तिभिः द्रव्यक्रियाकारकचेतनात्मभिः' (४।१७।३३) इत्यादिषु 'शक्ति'पदेन क्वचिद् गुणत्रयं, कुत्रचिन् माया, क्वापि अविद्यायाः बह्व्यो विच्छित्तयः, कुत्रचन कर्तृकरणकर्मेति त्रितयी, कुत्रचिच्च प्रकृतिपुरुषमहदहङ्कारतन्मात्ररूपा नवधा सृज्यविषयाः श्रीमत्पुराणकृद्भिः द्वैपायनमहर्षिभिः उद्दिष्टाः. एतान् प्रसङ्गान् व्याकुर्वद्भिः वल्लभाचार्यैरपि 'नानाशक्त्युपबृंहितः' इत्यस्मिन् 'अनेकाः शक्तयो भगवति वर्तन्तइति तत्तदनुरोधेन तथा-तथा वचनम्. अन्यथा तासां गुप्तशक्तीनां प्रकाशो न स्यात्' (भाग.सुबो.२।१२।४८). 'भगवन् स्वशक्तिभिः' (भाग.पुरा.३।२१।१९) इत्यत्र 'स्वशक्तयः सत्त्वादयः' इत्येतेषु टीकासन्दर्भेषु न क्वापि एतयोः चर्चा अकारि श्रीमद्भागवतप्रसङ्गे'' इत्यादि आक्षिपन्ति तत्र **'द्रव्यक्रियाकारकचेतनात्मभिः'**पदे यदि चेतनायाअपि मायिकत्वं स्वीक्रियते चेद् एकपदोपात्ततया अन्यासामपि शक्तीनां मायिकत्वम् अस्माभिरपि चिन्तयितुं शक्येत नच अन्यथा.

यदपि उक्तं मिश्रमहोदयैः ''अथ आचार्यवल्लभेन इदम्प्रथमतया सिद्धान्तस्य अस्य स्वरूपम् अभ्यधायि'' तत्र अस्मदीयां निरतिशयां कार्तज्र्यबुद्धिं मा मा मोषिषुः भवन्तो यतोहि भगवत्पादश्रीशंकराचार्याः श्रीविद्यारण्यास्वामिनः चापि अस्मदाचार्यचर-णात् पूर्वमेव **''जगदुत्पत्त्यादिकार्येषु आविर्भूतनिमित्तशक्तिभिः विभूतिभिः अनेकधा**

तिष्ठन् 'नैकात्मा' "— "जगद्योनिः भवेद् एष प्रभवाप्ययकृत् तु अतः आविर्भावतिरोभावौ उत्पत्तिप्रलयौ मतौ... आविर्भावतिरोभावशक्तिमत्त्वेन हेतुना आरम्भपरिणामादिचोद्यानां न अत्र सम्भवः" ( विष्णुसह.ना.भा.४६८, पञ्चद.६।१८२-१८६ ) इति अङ्गीचक्रुः न तद् विस्मर्यते अस्माभिः. उभयोः भगवत्पादविद्यारण्यस्वामिनोः अत्र अभिमतिमपि आलक्ष्य यत्र भागवते उत्पत्तिनाशौ प्रतिपादितौ तौ आविर्भावतिरोभावार्थकावेवेति न तत्र समाधानावश्यकतामपि अनुभवामः. ननु तद्वचनयोः आविर्भावतिरोभावयोः मायिकत्वमेव विवक्षितम् इति चेद्, तौ तथा वदतां नाम! अस्माकं मतेतु ब्रह्मात्मकत्वेन वास्तविकत्वमपि वयं वदामः. सर्वथातु जगज्जननसंहारकारिण्यौ हि शक्ती 'आविर्भावतिरोभाव'पदवाच्ये इत्यतो भगच्छक्तीनां नामगणनायाम् अनुल्लेखस्तु एतयोः न बहुविचारणीयो भवति. वस्तुतस्तु भागवतेऽपि **"आविर्भावस्तु सम्भवः" — "तिरोधानेन सो असृजद्"** ( भाग.पुरा.३।३१।४४,३।-२०।४४) इत्यत्र तथोपलम्भात् च न किञ्चिद् एतत्. विष्णुपुराणे च उपलभ्यमानस्य नामोल्लेखस्य अन्यार्थकत्वकल्पनस्य अस्यचापि विस्तरेण समाधानन्तु मत्कृतायां श्रीमत्पुरुषोत्तमकृताविर्भावतिरोभाववादस्य आविर्भावप्रकाशिकायां कृतमेवेति अलमिह चर्वितचर्वणेन.

अपिच यत् पृष्टं "ब्रह्म सजातीयविजातीयस्वगतभेदरहितम् इति भवन्तोऽपि अस्मद्रीत्यैव अभिप्रयन्ति न वा? 'सजातीयविजातीयस्वगतद्वैतवर्जितम्' इति स्वाचार्यमुखेन निरूपपितत्वात्. तर्हि आविर्भावतिरोभावौ इति तन्मायाशक्तितो अतिरिक्तं शक्तिद्वयं तत्त्वेन कथम् अभ्युपगन्तुं शक्यते तस्य ब्रह्मातिरिक्तसत्ताकत्वात्, तथात्वेच द्वैतापत्तेः अवश्यम्भावित्वात्. किञ्च भवदभिमतेयं शक्तिद्वयी ब्रह्मणो विलक्षणा सलक्षणा स्वरूपान्तर्गता वा? इति आद्यं न, विजातीयभेदस्वीकार्यत्वात्. द्वितीयमपि न समीचीनं, सजातीयत्वसम्पातात्. तृतीयमपि न क्षोदक्षमं स्वगतभेदावहत्वात्." इत्यादिकं तत्र एतेषां प्रश्नाक्षेपानां समाधाननिराकरणे मत्कृतायाम् अवतारवादावल्यन्तर्गताविर्भावतिरोभावव्याख्यायामेव कृते इति नेह वितन्येते.

किञ्च मिश्रमहोदयैः —

"उपादानत्वम् अत्र 'यद् उपादाय पूर्वस्तु भावो विकुरुते परम्'

> (तत्रैव ११।२४।१६) इति... 'यत्' यद् मूलतत्त्वं, कारणत्वेन तदुपाधिना 'उपादाय' स्वीकृत्य, मनसि समुपकल्प्य इति यावत्. 'पूर्वस्तु भावः' कारणत्वकल्पनाभावः 'परं विकुरुते' तज्जन्यकार्यत्वाकारेण अवधारयति प्रमाता, तत् तस्य कल्पितकार्यस्य उपादानकारणम्. श्रीमद्भागवते परमार्थदृष्ट्या अस्य विवर्तत्वं व्यवहारदृशातु परिणामित्वम् इति उभयथापि सङ्गमयितुं न दुःशकम्. तद् यथा 'गुणव्यतिकराकारो निर्विशेषो अप्रतिष्ठितः, पुरुषः तदुपादानम् आत्मानं लीलया असृजत्' (भाग.पुरा.३।१०।११) इत्यत्र परमात्मनः कालरूपेण निमित्तता, पुरुष(चैतन्य)रूपेण च उपादानता लीलया मायाया व्यपदिश्यते. अयं भावः. स कालः उपादानं निमित्तं यस्मिन् तम् आत्मानमेव विश्वरूपेण असृजत्, स्वव्यतिरेकेण सृज्यस्य अभावात्. एवं वस्तुगत्या विवर्तोपादनत्वं सिद्धम्. विवर्तोपादानत्वं स्वासमसत्ताककार्यजनकत्वं, यथा शुक्तेः रजतं प्रति. तथा च प्रपञ्चस्य ब्रह्मभिन्नसत्ताकत्वेन मिथ्यात्वाद् उपादानं शुद्धम् अद्वितीयं ब्रह्मेति निरवद्यम्''.

इति यदेतद् व्याख्यानम् उपकल्पितं तत्तु श्रीश्रीधरस्वामिकृतभावार्थदीपिकातो हि अंशेन विपरीतमिव प्रतिभाति.

यथाच आहुः ते—

> '''यद्' इति यद्रूपम् उपादाय उपादानकारणतया स्वीकृत्य 'पूर्वः'=कारणरूपो महदादिः भावो 'अपरम्'=अहंकारादिकं भावं विकुरुते सृजति. यथा पिण्डो मृदम् उपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत्. 'आदिः'इति यदा यस्य आदिः अन्तः च विवक्ष्यते तदा तत् सत्यम् इति अभिधीयते श्रुत्या... ननु तथापि प्रकृतिपुरुषकालानाम् अकार्यभूतानां भिन्नत्वात् कथम् अद्वितीयता तत्र आह 'प्रकृतिः' इति. अस्य सतः कार्यस्य उपादानं या प्रकृतिः प्रसिद्धा यश्च तस्य आधारः पुरुषो यश्च गुणक्षोभेण अभिव्यञ्जकः कालः तत् त्रितयं ब्रह्मरूपो अहमेव, नतु पृथक्, प्रकृतेः शक्तित्वात् पुरुषकालयोः अवस्थारूपत्वात्''.
>
> (भाग.भावा.दीपि.११।२४।१८-१९)

मिश्रमहोदयानां व्याख्याने "'यत्' यद् मूलतत्त्वं, कारणत्वेन तदुपाधिना 'उपादाय' स्वीकृत्य, मनसि समुपकल्प्य इति यावत्. 'पूर्वस्तु भाव:' कारणत्वकल्पनाभाव:" इति श्रीश्रीधरव्याख्यायान्तु "**'यद्' इति यद्रूपम् उपादाय उपादानकारणतया स्वीकृत्य 'पूर्व:'=कारणरूपो महदादि: भाव:**" इति निरूपितम्. एकत्र 'पूर्व'पदार्थ: कारणत्वकल्पनाभावो अपरत्रतु कारणरूपो महदादि:. तत्र एतयो: कल्पनाभावस्तु कल्पनाकर्तु: केवलाद्वैतविदु: जीवात्मनो मनसि बुद्धौ वा सृष्ट्युत्तरकालीनएव. कारणरूपस्तु महदादि: पुन: प्रकृतावेव जीवपूर्वकालिकाइति न जीवात्ममनसि तद्बुद्धौ वा, मनोबुद्ध्यहंकारादिविशिष्टस्य जीवात्मन: पश्चादेव जायमानत्वात्. नहि केवलद्वैतविदां जीवात्मनां सृष्ट्युद्भवात् पूर्वकालिको हि उद्भव: शक्यो मन्तुं वक्तुं वा येन मिश्रमहोदयानां व्याख्यानं "जरद्गव: कम्बलपादुकाभ्यां द्वारि स्थित:" इति वचनवत् शाब्दबोधाजनकं न स्यात्. यदितु जीवस्य अनादित्वाभ्युपगमात् न दोष: इति चेत् तदपि असाम्प्रतमेव, अनादित्वे हि बन्धस्य अविद्याकृतत्वं नोपपद्येत अविद्याकृतत्वे तु अनादित्वासम्भवात् च. आविद्यका: हि महदहंकारादयो अविद्याकृताइति मायाया: पूर्वभाव: पश्चात्तु महदहंकारादिबद्धता जीवस्य वक्तव्या. तत्रैवं सति न शक्यते वक्तुं "'परं विकुरुते' तज्जन्यकार्यत्वाकारेण अवधारयति प्रमाता, तत् तस्य कल्पितकार्यस्य उपादानकारणम्" इति सृष्ट्युद्भवकालोत्तरकालिकत्वात् प्रमातु: अवस्थानस्येति. तस्मात् केवलाद्वयवाददृष्ट्यापि न समीचीनता श्रीमिश्रमहोदयकृतव्याख्यानस्य. निरूप्यते च श्रीधरस्वामिभि: "**'अपरम्'= अहंकारादिकं भावं विकुरुते सृजति. यथा पिण्डो मृदम् उपादाय स्वयं निमित्तभूतो घटं सृजति तद्वत्**" इत्येतस्यैव व्याख्यानस्य केवलाद्वैतदृष्ट्या सार्थक्यम्. अपिच कालप्रकृतिपुरुषाणां शक्त्यवस्थारूपत्वेन यद् निरूपणं श्रीधरस्वामिभि: कृतं "**तत् त्रितयं ब्रह्मरूपो अहमेव, नतु पृथक्, प्रकृते: शक्तित्वात् पुरुषकालयो: अवस्थारूपत्वात्**" इति तदपि मिश्रमहोदयै: उपपादनीयं यदिह ब्रह्मण: शक्त्यवस्थयो: ब्रह्मसलक्षणता वा तद्विलक्षणता वा तत्स्वगतभेदवत्ता वा? त्रिष्वपि कल्पेषु द्वैतापत्ति: दुरुद्धरैव . नच मायाशबलितब्रह्मपरतया एवं प्रतिपादनं न पुन: शुद्धस्य निर्विशेषस्य तद् इति वाच्यं, यस्मात् श्रीधरस्वामिभि: एतादृङ्निरूपणं "**परमकारणात्मन: सत्यत्वविवक्षया इति अर्थ:**" इति वदद्भि: 'परमकारणात्मा'-'सत्यत्वविवक्षा'पदाभ्यां शबलब्रह्माशंकापंककलङ्कप्रक्षालनात्.

अथ व्यावहारिकत्वलक्षणतया याहि ''स्वसत्ताकालीनाभावप्रतियोगिज्ञानविषयताकत्वम्'' इति परिभाषा अभ्युपगता सापि सृष्ट्युत्पत्तेः प्राक् सकलद्वैतसृष्टयोत्पादिकायाः मायायाः स्वसत्ताकालीनाभावप्रतियोगित्वेऽपि तदानीं तस्याः तथाविधज्ञानविषयताकत्वाभावेन अव्याप्तिदोषदुष्टैव ननु प्रमातुः अभावादेव. अथ नित्यत्वात् तदानीं प्रमातुरपि अवस्थानं स्वीक्रियते चेत् तदा शुद्धचैतन्ये प्रमातृत्वरूपधर्मस्य अनाविद्यकत्वापत्तिः. यदितु पूर्वकल्पीयया अविद्यया प्रवाहानादिनः प्रमातुः अविद्योत्पन्नत्वे वा आविद्यकत्वे न काचन बाधा इति चेत् न पूर्वकल्पीयाविद्यया सम्बद्धस्य प्रमातुः एतत्कल्पीयाविद्यया सम्बन्धानुपपतेः, तदुपपत्तौ वा चैत्राविद्यया मैत्रस्यापि भ्रान्त्युद्भवापत्तिः. पूर्वकल्पीयजीवाश्रिताविद्याविषयीभूतब्रह्मणो निमित्तकारणत्वेतु घट्टकुट्यां प्रभातम्.

अथ ब्रह्मणः औपाधिकनिमित्तत्वनिरूपणमपि मायाविशिष्टस्यैव ब्रह्मणः कारणत्वं न शुद्धस्य तत् सम्भवति इति वस्तुतः कठिनमेव. यस्मात् तद्वैशिष्ट्यं ब्रह्मणि जीवाश्रिताविद्याविषयत्वेनैव चेद् अविद्याश्रयत्वेन जीवस्य पूर्वभावापत्त्या ब्रह्मणस्तु तद्विषयत्वेन पश्चाद्भावितया कार्यत्वापत्तेः ब्रह्मणो निमित्तकारणत्वभङ्गप्रसङ्गात्.

इत्येवं हि अनेकविधदोषग्रस्तत्वात् सहृदयसुहृदुत्तममिश्रमहोदयोदितः विवर्तवादानुसारिकार्यकारणभावो न प्रमाणपदवीम् आरोढुम् अर्हति. तथापि महता परिश्रमेण यदेभिः श्रीमद्भागवतवचनोपन्यासमूलकं वाल्लभमतालोचनं कृतं तत्तु पूर्वोत्तरपक्षकोटिक्रमेण नूनं विश्वेषामपि भागवतमूलकवेदान्तविद्याविचारोत्सुकानां भृशम् उपकाराय भवेदेवेति मुहुर्मुहुः आत्मीयाधमर्णतानिवेदनेन विरमामि.

# ॥ आरम्भवादः ॥

नैयायिकानां कारणत्वविचारः

**श्रीबलिराम शुक्ल**

*

कारणतासिद्धान्ते न्यायवाल्लभमतयोः समीक्षणम्

**श्रीसच्चिदानन्द मिश्र**

*

वैशेषिकाभिमतः कारणवादः

**श्रीचन्द्रशेखर शुक्ल**

*

कारणलक्षणके प्रसङ्गमें न्याय तथा शुद्धाद्वैत वेदान्तकी मान्यता

**श्रीकिशोरनाथ झा**

*

पाश्चात्य मतके अनुसार कौन सा मत समीचीन है
वाल्लभ या नैयायिकोंका ?

**श्रीअरुण मिश्र**

*

# नैयायिकानां कारणत्वविचारः

डॉ. बलिराम शुक्ल.

कारणता, हेतुता, जनकता इति पदार्थाः. किन्नाम कारणत्वं यदवच्छेदकावच्छिन्नसमुदायः सामग्री. कारणताच कारणेन सह कार्यस्य स्वरूपसम्बन्धः इति केचन वदन्ति. केषाञ्चिद् मते कारणत्वम् अखण्डोपाधिः. बहूनां नैयायिकानां मते कारणता कश्चन अतिरिक्तः पदार्थः, प्रतियोगितादिवत्.

कारणतायाः स्वरूपसम्बन्धरूपत्वस्वीकर्तॄणां मते सम्बन्धस्य सम्बन्धिद्वयनिरूप्यत्वनियमेन कार्य-कारणोभयनिरूप्या कारणता. अन्यमतद्वयेऽपि कारणता कार्यकारणोभयनिरूप्यैव. ताभ्यां विना तस्याः ज्ञानं न भवितुं शक्यम्.

तत्र ''अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं कारणत्वम्'' इति कारणस्य लक्षणं, यथा घटं प्रति नियतपूर्ववृत्तिजातीयाः दण्डाद्याः घटस्य कारणम्. एतल्लक्षणे 'अनन्यथासिद्धत्वं' निवेशितं तत्र 'अन्यथासिद्धत्वं' नाम येन रूपेण यादृशकार्यं प्रति पूर्ववृत्तित्वम् अवगम्यते तादृशकार्यं प्रति तद्रूपम् अन्यथासिद्धं भवति, यथा घटं प्रति दण्डत्वम्. घटं प्रति दण्डो दण्डत्वेन कारणं भवति, अतो दण्डत्वं तत्र अन्यथासिद्धम् इति नैयायिकाः वदन्ति. तथैव कारणान्तरेण सह यद्रूपावच्छिन्नस्य यादृशकार्यं प्रति पूर्ववृत्तित्वम् अवगम्यते, तद्रूपावच्छिन्नं तादृशकार्यं प्रति अन्यथासिद्धं भवति, यथा घटादिकं प्रति दण्डरूपादिकम्. एवम् अन्यं प्रति पूर्ववृत्तित्वे ज्ञातएव यद्रूपावच्छिन्नस्य प्रकृतकार्यं प्रति पूर्ववृत्तिताग्रहः तद्रूपावच्छिन्नं तत्कार्यं प्रति अन्यथासिद्धं, यथा घटादिकं प्रति आकाशत्वाद्यवच्छिन्नम्. यतोहि शब्दसमवायिकारणतया आकाशसिद्धावेव तस्य घटादिकं प्रति पूर्ववृत्तित्वं गृह्यते. आकाशे पूर्ववृत्तित्वग्रहणे शब्दादिपूर्ववृत्तित्वग्रहापेक्षा भवति.

अन्यरूपेण सिद्धस्य आकाशस्य पूर्ववृत्तित्वं गृह्यते इत्यतः आकाशम् अन्यथासिद्धम्.

अवश्यक्लृप्तनियतपूर्ववृत्तित्वएव कार्यसम्भवे तत्सहभूतं यद्धर्मावच्छिन्नमपि तत्र अन्यथासिद्धं भवति, यथा पाकजगन्धादौ रूपप्रागभावः. तत्र अवश्यक्लृप्तनियतपूर्ववर्ती पाकजगन्धप्रागभावः तत्सहभूतत्वं पाकजरूपप्रागभावे; अतः पाकजरूपप्रागभावः पाकजगन्धं प्रति अन्यथासिद्धः. एवमेव प्रकृतकार्यं प्रति यद्धर्मव्याप्यधर्मस्य अगुरोः कारणतावच्छेदकत्वसम्भवः तदवच्छिन्नञ्च प्रकृतकार्ये अन्यथासिद्धं, यथा घटं प्रति द्रव्यत्वावच्छिन्नं, घटकार्यजनकतावच्छेदकं दण्डत्वं तस्य द्रव्यत्वव्याप्यत्वाद् द्रव्यत्वावच्छिन्नम् अन्यथासिद्धम्.

अस्तु तर्हि किम् अन्यथासिद्धस्य सामान्यलक्षणम् ? नियतपूर्ववृत्तितावच्छेदक-यद्धर्मावच्छेदेन यादृशकार्यं प्रति न कारणत्वव्यवहारः प्रामाणिकानां, तद्रूपावच्छिन्नमेव तादृशकार्यं प्रति अन्यथासिद्धम् इति अन्यथासिद्धस्य सामान्यलक्षणम्. अतएव लघुधर्मसमनियतगुरुधर्मावच्छिन्नस्य प्रतिबन्धकाभावनिष्ठ-तद्व्यक्तित्वावच्छिन्नस्य च न कारणत्वं, तद्रूपावच्छिन्नस्य अन्यथासिद्धत्वात्.

अत्र गोस्वामिपादाः — "अनन्यथासिद्धत्वस्य अन्यथासिद्धभिन्नत्वेन अन्यथासिद्धेश्च अन्यत्र गृहीतकारणताकत्वरूपत्वेन तत्रापि अस्यैव कारणलक्षणस्य वक्तव्यत्वाद् आत्माश्रयापत्तेश्च"

अत्र नैयायिकाः — तदनियतपूर्ववृत्तितावच्छेदकत्वं न कारणताशरीरघटकं किन्तु भेदप्रतियोगिनाम् अन्यथासिद्धानां परिचायकमात्रं तादृशानियतपूर्ववृत्त्यवच्छेदकधर्माणां भेदकूटस्य प्रातिस्विकरूपेण कारणतावच्छेदकांशे विशेषणत्वम्; अतो न आत्माश्रयः. कारणं न अन्यथासिद्धान्यत्वेन विशेषणीयं तथा विशेषणे च आत्माश्रयः; किन्तु येन रूपेण अन्यथासिद्धत्वं तदन्यधर्मत्वमेव. यतोहि एकस्यैव केनचिद्रूपेण अन्यथासिद्धत्वं रूपान्तरेण च जनकत्वम्.

अत्र केचित् ''यत् कारणम् अवश्यं क्लृप्तम्'' इत्युक्तौ च आत्माश्रयः स्याद् अतो अत्र लघुनियतपूर्ववृत्तित्वम् अवश्यक्लृप्तत्वं बोध्यं, लघुत्वं च शरीरकृतम् उपस्थितिकृतं सम्बन्धकृतं च इति. प्रथमम् अनेकद्रव्यसमवेतत्वापेक्षया महत्त्वे, द्वितीयं गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे, तृतीयं दण्डत्व-दण्डरूपाद्यपेक्षया दण्डे स्वाश्रयदण्डसंयोगादिपर-म्परायाः गुरुत्वात्.

अयम् आशयः : लाघवस्य शरीरकृतसम्बन्धकृतादिभेदेन नानारूपतया अनन्यथासिद्धत्वम् एकम् अनुगतं न भवितुं शक्यम्. लाघवविरोधिगौरवस्य तत्तत्पदार्थघटितरूपस्यापि तत्तद्व्यक्तिभेदेन भिन्नतया अन्यदिति अस्य गुरुभूतार्थकतया गौरवस्यैव अन्यथासिद्धत्वं वाच्यम् अतो न अन्यथासिद्धत्वलक्षणे कारणत्वस्य समावेशः.

अत्र नव्याः : कारणत्वं यदि अनन्यथासिद्धनियतपूर्ववृत्तितावच्छेदकध-र्मवत्त्वं तदा प्रतिबन्धकाभावस्य तद्व्यक्तित्वेन हेतुतापत्तिः यत्रतु न कारणत्वव्यवहारः इत्यत्र तद्व्यक्तिभेदकूटवत्त्वन्तु सर्वज्ञेनैव ज्ञेयम्. तत्तद्व्यक्तिभे-दकूटवत्त्वसम्बन्धेन कार्यविशिष्टो यो धर्मः तद्वत्त्वं तदित्यपि न वक्तुं शक्यं, तस्य सम्बन्धत्वे प्रमाणाभावात्. तस्मात् कारणत्वं पदार्थान्तरमेव. तत् न समीचीनं, कारणस्य अतिरिक्तत्वे दण्डादौ सर्वदा तद्वत्पक्षापत्तेः. नच अनन्यथासिद्धत्वेनापि इत्यादिधर्मः तद्व्यञ्जकः इति वाच्यम्, अनन्यथासिद्धत्वरूपधर्मज्ञानस्य आवश्यकत्वेन तस्यैव कारणत्वापत्तेः.

कार्यान्वयव्यतिरेककाल-पूर्वकालान्वयव्यतिरेकशालित्वमपि न युक्तम्, आत्मादौ सुखादिकारणे प्रागभावरूपव्यतिरेकासम्भवात्. किञ्च ''अनन्यथासिद्ध-नियतपूर्ववृत्तित्वजातीयत्वम्'' इति कारणत्वलक्षणे, तदघटकान्यथासिद्धि-निरूपकधर्मभेद-कूटस्य प्रातिस्विकरूपेण युगसहस्रेणापि ज्ञातुम् अशक्यतया कारणस्य दुर्ज्ञेयत्वापत्तिः. अतः सा सहायिका कारणत्वं स्वरूपसम्बन्धविशेषेण इति वदन्ति. तदपि न शोभनं, घटादिकारणतायाः कारणीभूतदण्डादिस्वरूपत्वे

तेन समेतस्य आधाराधेयभावानुपपत्तिः. अभेदेऽपि तदुपगमे ''दण्डो घटकारणवान्'' इति प्रतीत्यापत्तेः. दण्डत्वादिरूपत्वे च सप्रतियोगिकत्वानुपपत्तिः. दण्डत्वरूपजातिनिष्प्रतियोगिकत्वाद् दण्डत्वाद्यवच्छिन्नानुपपत्तिः च. यतो अभेदे न अवच्छेद्यावच्छेदकभावो, अभेदेऽपि अवच्छेद्यावच्छेदकभावस्वीकारे दण्डत्वेन घटकारणतावद् दण्डत्वेन दण्डत्वम् इति प्रतीत्यापत्तिः. अतः कारणत्वं पदार्थान्तरमेव.

परन्तु कार्य-कारणभावविषये अस्ति विप्रतिपत्तिः. तत्र केचन वदन्ति सत्कार्यवादस्वीकारेणैव भावानां कार्यकारणभावो भवितुं शक्यते. तत्र कारणेन कार्यं क्रियते तत्र चतुष्टयी गतिः स्यात् : [१]असद् वा क्रियते [२]सद् वा [३]सदसद् वा [४]अनुभयस्वभावं वा ? इति.

तत्र असतः कार्यस्वीकारे शशविषाणादेरपि उत्पत्तिः स्यात्. उत्पत्तेः पूर्वं घटस्यापि शशविषाणादिवद् असत्वाद्. घटो यथा प्रागभावदशायां नास्ति तथैव प्रध्वंसदशायामपि नास्ति. यदि प्रागभावदशायां घटस्य उत्पत्तिः तथैव प्रध्वंसदशायामपि तस्य उत्पत्तिः भवेत्.

असत्कारणे सति नियतोत्पादनं न भवेत्. तैलार्थी तिलानेव आदत्ते न सिकताः. असत्त्वे तैलस्य को भेदः तिलानां सिकताभ्यः ? कार्यस्य असत्त्वे निरालम्बः कारणव्यापारो भवेत्. घटादिकार्यव्यापारः, मृत्पिण्डादिविषयो न भवितुं शक्नोति यतोहि घटादिकार्यम् असत्.

यदिच उपादानाद् उपादेयं भिन्नं घटोत्पत्त्यनन्तरं मृत्पिण्डं कुतो न उपलभ्यते ? स्वविनाशेन कारणं कार्यं जनयति इत्यपि न, अभावाद् भावोत्पत्तिः भवेत्. किञ्च विनष्टमृत्पिण्डाद् घटोत्पत्तिः भवति, इति चेत्, कुतो न चिरविनष्टात् मृत्पिण्डाद् घटोत्पत्तिः ? कस्मिंश्चिद् मृत्पिण्डे नष्टे घटोत्पत्तिः स्यात्. अतो मृतपिण्डविशेषादेव ( क्लिन्नात् पिण्डीकृताद् ) घटस्य उत्पत्तिः भवति. अतः कारणस्य सत्त्वाद् तदनतिरिक्तं कार्यं सदेव.

परन्तु सत्कार्यवादे प्रश्नो अयं जागर्ति : यदि कार्यं सत् तदा कारकव्यापारात् पूर्वं कुतो न उपलभ्यते? इति चेत्, अनभिव्यक्तत्वाद् आविर्भावएव कारकव्यापारात् जायते. कार्यन्तु सदेव.

अत्र नैयायिकाः : यदि अभिव्यक्तेन रूपेण घटो अस्ति चेत् कारकव्यापारवैफल्यम्. अथ मृत्पिण्डरूपेण तदानीं घटो अस्ति इति चेत्, तर्हि तदानीं मृत्पिण्डएव आस्ते न घटो अस्ति. नहि अन्यरूपेण घटो अस्ति इति वक्तुं शक्यते. असन् उष्ट्रोऽपि मृत्पिण्डरूपेण अस्ति इति स्यात्.

अथ उष्ट्रबालमपि उष्ट्ररूपं न प्राप्यते परन्तु घटरूपन्तु प्राप्यते, तर्हि यदा यद्रूपं प्राप्यते तत् तदैव अस्ति न ततः पूर्वम् अतः कार्यम् असदेव.

पूर्वं शक्तिरूपेण अस्ति इदानीं तस्य आविर्भावो घटरूपेण भवति इत्यपि न युक्तम्. आविर्भावः तत्स्वरूपाद् अभिन्नो भिन्नो वा? सद् वा असद् वा? पुनः प्रश्नो अयम् आविर्भावः कः पदार्थः? न कार्यात्मना अवस्थानम्. अथ संस्कारविशेषः उत प्रतीतिः? यदि कार्यात्मना अवस्थानं, तत् पूर्वं न आसीत्. यदि तत्पूर्वमपि अस्ति तदा कारकव्यापारवैफल्यम्.

संस्थानमपि अवयववन्निवेशः. सच पूर्वम् असन्नेव, कारकव्यापारेण क्रियते अवयवाः परमाणुरूपाः सन्तएव पूर्वं विद्यन्ते तेषां विषये नास्ति कश्चन विवादः.

यदि आविर्भावः प्रतीतिरूपः तदा घटस्य प्रतीतिः चक्षुःसन्निकर्षादिसामग्र्यधीना, न दण्डचक्रादिसामग्र्यधीनचक्षुरादिसामग्र्यभावे न प्रतीतिः, परन्तु आविर्भावस्तु कारणसामग्रीजन्यः. अतो असदेव घटः.

यच्च उक्तं ''नासतो विद्यते भावः नाभावो विद्यते सतः'' इत्यस्य

तात्पर्यं कार्यस्य शशश्रृङ्गादितौल्यनिराकरणे अस्ति नतु सत्कार्यवादे. सत्कार्यवादविषये तद् अप्रमाणम् , पूर्वापरयोः भावस्वरूपादर्शनात्.

शक्त्यात्मनापि कार्यस्य न सत्त्वं, मानाभावात्. किञ्च शक्तिः घटस्वरूपाद् भिन्ना अभिन्ना वा? यदि भिन्ना तदा पररूपेण घटो अस्ति घटरूपेण नास्ति इति. अथ घटाद् अभिन्ना चेत् शक्तिरूपेण यदा घटो अस्ति तदा स्वरूपेणापि आस्ते इति स्वीकर्तव्यम्. तत् प्रत्यक्षविरुद्धम्.

असत्कार्यवादे यद् दूषणम् उक्तं—यदि कार्यम् असद् उत्पद्यते तदा शशविषाषादेरपि कदाचिद् उत्पत्तिः स्यात्, तत् न समीचीनम्. न अयं अस्माकम् अभिप्रायः : यद्-यद् असद् तत्-तद् उत्पद्यते, परन्तु यत् क्रियते तद् असत्.

अतएव उक्तं ''स्वरूपसहकार्यादिहेतवो यद्विधायिनो दृश्यन्ते जन्यते तद्धि न व्योमकुसुमादिकम्''. अस्य इदं तात्पर्यं यत् प्रागसत्त्वमात्रं कार्यत्वे प्रयोजकं, नतु असत्त्वमात्रम्.

यच्च उक्तं कार्यानुकूलशक्तिमत्त्वम् अथवा आविर्भावयोग्यशक्तिमत्त्व-मेव कारणत्वं तदपि न समीचीनम्. यतोहि शक्तिस्वीकारे प्रश्नो अयं : शक्तिः नित्या वा अनित्या वा? शक्तिस्तु नित्या सूक्ष्मा च. न इह काचिद् उपयुज्जे तदभ्युपगमे नित्यं कार्योत्पतिप्रसङ्गतः. अनित्या चेद् अनन्तशक्ति-तत्प्रागभावध्वंसकल्पने गौरवात्. अतः शक्तिः न कश्चिद् अतिरिक्तः पदार्थः किन्तु योग्यतावच्छिन्न-स्वरूपसहकारि-सन्निधानमेव शक्तिः. एवं योग्यतापि न पदार्थान्तरं किन्तु वस्तुविशेषएव. एवं वस्तुविशेषनियमाद् उपादाननियमः सिद्धो, न सत् कार्यम्. किञ्च असत्कार्यस्वीकारएव उपादानग्रहणम् उचितं न सत्कार्यवादे अतएव उक्त ''उत्पत्तौ खलु सिद्धायां उपादानं विचार्यते, सतस्तु नैव नास्तीति

किमुपादानचिन्तया''.

सत्कार्यवादे उपादाननियमो न भवितुं शक्यः, सर्वस्य सर्वत्र सत्त्वात्, सर्वेषां ब्रह्मरूपत्वात्. अपिच सत्कार्यवादस्वीकारेण प्रायश्चित्तम् आचरणीयम्. अन्नं च अश्नाति. अन्ने च मांसादिकं कार्यं सद् इति अन्नभक्षणे सति मांसादिभक्षणप्रायश्चित्तम् आचारणीयम्. अतो धर्मशास्त्रादिविरुद्धत्वात् न आदरणीयः सत्कार्यवादः.

कार्यकारणयोः अभेदः चेत् 'कार्यम्' इति न वक्तव्यं, कार्य-कारणयोः अभेदस्य प्रत्यक्षविरुद्धत्वात्, मृत्पिण्डएव घटः इति प्रतीतेः अभावात्. ''कार्यं सदसत् कारणाद्'' इति यद् उक्तं तदपि न युक्तं, व्याप्त्यसिद्धेः. यदि नाम शशाविषाणात् न किञ्चिद् उत्पद्यते तदा पदादपि किञ्चिद् न क्रियते इति कुतः? यथैव हि शशविषाणादेः असत्त्वम् अक्रियमाणत्वं च प्रत्यक्षादिप्रमाणेन सिद्धं तथैव घटादीनामपि प्रागसत्त्वं क्रियमाणत्वं च प्रत्यक्षादिना सिद्धं कुतो न स्वीक्रियते? किञ्च ''सत् क्रियते'' इति उच्यते चेद् ब्रह्मापि क्रियेत, न क्रियते तस्माद् असदेव कार्यम्.

सत्कार्यवाद-शक्तिकारणतावादयोः निरासानन्तरम् इदं सिद्धं यत् कारणत्वम् अतिरिक्तपदार्थएव. कारणतायाः अतिरिक्तपदार्थत्वस्वीकारे अयम् अपरोऽपि तर्कः : यदि कारणत्वं न अतिरिक्तः पदार्थः तदा ''स्वर्गकामो यजेत'' इति इष्टसाधनताबोधकविधिवाक्यम् अप्रमाणं भवेत्. यतोहि स्वर्गाव्यवहितपूर्ववृत्तितावच्छेदकान्यथासिद्धनिरूपको धर्मो अप्रसिद्धो, अन्यथा-सिद्धिनिरूपकस्य अश्वमेधत्वादेः सतोऽपि च स्वर्गगतवैजात्यानुपस्थितिबोधयितुम् अशक्यत्वात् तादृशविधानानाम् अप्रामाण्यापत्तेः.

कारणत्वं द्विविधं भवति. १. फलोपधायकत्वं २. स्वरूपयोग्यत्वं च इति. फलोपधायकत्वञ्च अत्र अव्यवहितपूर्ववृत्तित्वसम्बन्धेन फलविशिष्टत्वम्. स्वरूपयोग्यत्वन्तु कारणतावच्छेदकधर्मवत्त्वरूपम्. एतादृशं स्वरूपयोग्यत्वमेव

'नियतपूर्ववृत्तिजातीयता'पदेन गृहीतम्.

अत्र अवधेयम् : वृक्षनिष्ठसंयोगादिकं प्रति श्येननिष्ठक्रियायाः कारणत्वम् अस्ति परन्तु कार्याव्यवहितप्राक्क्षणावच्छेदेन प्रकृतकार्याधिकरणवृत्त्यन्ताभाव - प्रतियोगितानवच्छेदकत्वस्वरूपस्य कारणत्वस्य श्येननिष्ठक्रियायां नास्ति. तथाहि प्रकृतकार्यं=वृक्षनिष्ठः संयोगः, तदधिकरणं=वृक्षः, तन्निष्ठात्यन्ताभावः= श्येननिष्ठक्रियात्यन्ताभावः, तत्प्रतियोगितावच्छेदकत्वमेव श्येननिष्ठक्रियायां वर्तते इत्यतो अतिव्याप्तिः. तद्वारणायतु 'प्रकृतकार्याधिकरणवैशिष्ट्यं' निवेशनीयम्. वैशिष्ट्यञ्च स्वनिष्ठावच्छेदकताक-प्रतियोगिताक-भेदवत्त्वसम्बन्धेन स्वनिष्ठाव-च्छेदकता-स्वनिष्ठाभावप्रतियोगितावच्छेदकत्व-सम्बन्धावच्छिन्ना ग्राह्या तेन न अयं दोषः सम्भवति. यतोहि 'संयोगाधिकरणनिष्ठावच्छेदकता'पदेन श्येननिष्ठावच्छेदकताक-प्रतियोगिता घटत्वादेरेव, तस्याः भेदः क्रियात्वे अस्तीति लक्षणसमन्वयः. कार्यं यत्किमपि वस्तुजातं कारणं भवति. तत्र विद्यमाना कारणता किञ्चित्सम्बन्धावच्छिन्नैव भवति. अतः प्रकृतकार्याधिकरणनिष्ठात्य-न्ताभावप्रतियोगितायां 'प्रकृतकारणतावच्छेदकसम्बन्धावच्छिन्नत्वं' निवेशनीयम्. अन्यथा समवायेन घटाधिकरणे कपाले कपालस्यापि समवायेन अभावो अस्ति इति अव्याप्तिः.

कारणं सामान्यतः साधारणासाधारणभेदेन द्विविधं भवति. तत्र ईश्वर-तज्ज्ञानेच्छा-कृतयः काल-दिशौ प्रागभावो अदृष्टं चेति अष्टौ साधारणकारणानि भवन्ति. असाधारणकारणत्वन्तु कार्यत्वानवच्छिन्न-कार्यतानिरूपित-कारणताश्रयत्वम्. अत्र न्यायबोधिनीकारः : कार्यत्वातिरिक्त-धर्मावच्छिन्न-कार्यतानिरूपित-कारणताशालित्वं यथा घटत्वाच्छिन्नं प्रति दण्डस्य असाधारणकारणत्वम् अस्ति. कालादौ कार्यत्वातिरिक्तधर्मावच्छिन्न-कार्यतानिरूपित-कारणताशालित्वं नास्ति. यतः कालादयस्तु कार्यत्वाच्छिन्नं प्रति कारणं भवन्ति इति.

कार्यमात्रं प्रति कारणं कालादयः इति व्यवहारात् कालादीनां

साधारणकारणत्वम्. दण्डादिकं कार्यमात्रं प्रति कारणम् इति व्यवहारो न भवति अपितु घटादिकं प्रति कारणं दण्डादय: इत्येव व्यवहारः. अत्र कार्यत्वारिक्तो यो धर्मो घटत्वादिः, तदवच्छिन्ना या घटनिष्ठा कारणता तन्निरूपितकारणतावत्त्वाद् असाधारणत्वम् इति साधारणकारणानाम् ईश्वरेच्छा-दीनाम् अन्यथासिद्धत्वशङ्का न कथमपि भवितुम् अर्हति, कार्यत्वावच्छिन्नातिरि-क्तकारणत्वासिद्धेः.

असाधारणकारणन्तु द्विविधं भवति इति मामकीनः सिद्धान्तः. तत्र कार्यमात्रं प्रति तादात्म्येन द्रव्यं कारणम् इति कार्यकारणभावानुरोधात्. समवायसम्बन्धावच्छिन्न-कार्यत्वावच्छिन्न-कार्यतानिरूपित- तादात्म्यसम्बन्धा-वच्छिन्न -कारणतावत्त्वं समवायिकारणत्वम्. यत्र समवायसम्बन्धेन कार्यम् उत्पद्यते तत् समवायिकारणं भवति. यथा पटं प्रति तन्तवः. तन्तुषु पटः समवायेन तिष्ठति, अयुतसिद्धत्वात्.

असमवायिकारणं गुणः कर्म च भवति. तत्रापि द्रव्यं प्रति गुणः कर्म च भवति. तत्रापि द्रव्यं प्रति गुणः, गुणं प्रति गुणः कर्म च असमवायिकारणं भवति. समवायेन कार्यं प्रति समवाय-स्वसमवायिसमवेतत्वादिसम्बन्धेन यत् कारणं तत् समवायिकारणम् इति. समवायसम्बन्धावच्छिन्न-कार्यत्वावच्छिन्न-कार्यतानिरूपितः समवायः, स्वसम-वायिसमवेतत्वान्यतरसम्बन्धावच्छिन्न-कारणतावत्त्वम् इति पर्यवस्यति. तथाच पटं प्रति तन्तुसंयोगः असमवायिकारणं भवति. तन्तुसंयोगे समवायसम्बन्धाव-च्छिन्न-कार्यतानिरूपित-कारणत्वम् असमवायिकारणत्वम् अस्ति. एवं पटरूपं प्रति तन्तुरूपम् असमवायिकारणं भवति. तत्र समवायसम्बन्धावच्छिन्न-कार्यत्वावच्छिन्न-कार्यतानिरूपित- स्वसमवायिसमवेतत्व-सम्बन्धावच्छिन्न-कारणतावत्त्वरूपम् असमवायिकारणत्वम् अस्ति.

अत्र अयं सिद्धान्तः : आत्मविशेषगुणानां ज्ञानादीनां कुत्रापि असमवायिकारणत्वं नास्ति. इत्यतः तेषाम् असमवायिकारणत्वनिराकरणाय

असमवायिकारणस्य सामान्यलक्षणे आत्मविशेषगुणभिन्नत्वं निवेशनीयम्. असमवायिकारणन्तु कार्यस्थितौ नियामकं भवति. तस्य नाशात् कार्यनाशो भवति. अतो ज्ञानादिगुणाः न असमवायिकारणं भवितुम् अर्हन्ति. एवमेव असमवायिकारणस्य विशेषलक्षणे उदासीन-तत्तत्पदार्थाभिन्नत्वमपि निवेशनीयम्.

निमितकारणञ्च आभ्यां परं तृतीयं स्याद् इति वचनानुरोधात्, समवायिकारणभिन्नत्वे सति असमवायिभिन्नत्वे सति कारणत्वं निमित्तकारणत्व-म्.अत्र पुरुषोत्तमगोस्वामिपादाः वदन्ति ''कारणं द्विविधमेव समवायि-निमित्तभेदात्''. तेषाम् अयम् आशयो यद् उभयविधकार्यं प्रति कारणद्वयस्य समवायिकारणस्य निमित्तकारणस्य आवश्यकता विद्यते न असमवायिकारणस्य. अभावकार्यं प्रति यथा असमवायिकारणस्य आवश्यकता नास्ति तथा भावकार्यं प्रत्यपि तस्य आवश्यकता नास्ति. अभावकार्यं प्रति निमित्तकारणत्ववद् उपादानकारणत्वमपि आवश्यकम्. घटनाशं प्रति घटस्य या कारणता सातु निमित्तकारणतायाः दण्डाभिघातादिरूपा भिन्ना कारणता अस्ति. तत्तु न समीचीनम्. यतोहि घटं प्रति कपालद्वयसंयोगः कारणम् अस्ति इत्यत्र नास्ति कश्चन सन्देहावसरः. कपालद्वयसंयोगे या घटकारणता विद्यते सा निमित्तकारणता न भवितुम् अर्हति. निमित्तकारणानां दण्डादीनां नाशात् घटनाशस्तु न भवति. परन्तु कपालसंयोगनाशात् घटनाशो भवतीति सर्वेषाम् अनुभवः. अतो दण्डनिष्ठकारणतायाः कपालसंयोगनिष्ठा कारणता भिन्नैव स्वीकार्या. कपालसंयोगो घटस्य समवायिकारणं न भवितुम् अर्हति, यतः तत्र पूर्वोक्तसमवायिकारणस्य लक्षणं न सङ्घटते.

घटनाशं प्रति घटस्य समवायिकारणविषये न कापि युक्तिः दृश्यते. यथा कपालनाशाद् घटो नश्यति न तथा घटस्य नाशाद् घटनाशरूपस्य कार्यस्य नाशो भवति. अतो घटनाशं प्रति न घटस्य समवायिकारणत्वं नापि च असमवायिकारणत्वम् अपितु ताभ्यां भिन्नं निमित्तकारणत्वमेव. यदि असमवायिकारणनाशात् कार्यनाशो भवति तर्हि परमाणुगतस्य द्वित्वस्य

नाशात् अणुपरिणामस्यापि नाशो अस्तु इति कथनं न उचितम्. यतः सर्वत्र ''असमवायिनाशेनैव कार्यनाशः'' इति नियमो नास्ति. समवायिकारणनाशेनैव क्वचित् तन्नाशः.

एवञ्च द्व्यणुकपरिमाणस्य द्व्यणुकनाशादेव नाशो भवति. तथाच कार्यनाशे समवाय्यसमवायिनाशयोः कारणत्वे अनियतहेतुकत्वं स्याद् इतितु न शङ्कनीयं, विद्यमानाश्रयद्रव्यनाशे असमवायिकारणनाशो हेतुः, एवं समवायिकारणद्रव्यनाशो प्रतियोग्याश्रयनाशो हेतुः.

अत्र न्यायलीलावती'प्रकाश'विवृतिकारो : ''वयन्तु कार्यकर्मादिनाशस्थले समवायिनाशस्य हेतुत्वं कल्प्यमानं लाघवात् समवायिनाशताभाविसमवेतनाशत्वावच्छिन्नं प्रत्येव कल्प्यते''

एतेन इदं सिध्यति यद् द्वैविध्यकारणवादो न समीचीनो अन्यदपि पुरुषोत्तमगोस्वामिपादैः प्रागभावादिपदार्थानां खण्डनं कृतमस्ति तदपि आलोचनीयं परन्तु विस्तरभयाद् अत्रैव विरम्यते.

# चर्चा

## नैयायिकानां कारणत्वविचार:

डॉ. बलिराम शुक्ल

**रा. ताताचार्य :** नैयायिका: किमर्थं असमवायिकारणं स्वीकुर्वन्ति तत्र कारणद्वयं मया प्रदर्श्यते. एते अवयवातिरिक्तावयविवादिन:. अवयवी अवयवसंयोगाद् उत्पद्यते. एवञ्च अवयवेषु अवयवानामपि कारणत्वम् अस्ति अवयवसंयोगस्यापि कारणत्वम् अस्ति. अवयवानां समवायिकारणत्वम् अवयवसंयोगस्य असमवायिकारणत्वम् इति विभागो अवयवातिरिक्तावयविस्वीकर्तृणां भवति. इयम् एका युक्ति:. अन्या युक्ति: यदि असमवायिकारणं न स्वीक्रियते समवायिकारणं निमित्तकारणम् इति कारणद्वयमेव स्वीक्रियते तर्हि नैयायिकै: समवायिकारणनाशात् कार्यनाश: इति उच्यते इयञ्च प्रक्रिया त्र्यणुकनाशम् आरभ्य भवितुम् अर्हति. द्व्यणुकनाशेतु समवायिकारणनाशो वक्तुं न शक्यते. द्व्यणुकस्य समवायिकारणं परमाणु:. परमाणो: नित्यत्वात् तन्नाशो न भवति. अतो यदि असमवायिकारणं स्वीक्रियते तदा द्व्यणुकं प्रति परमाणू समवायिकारणे परमाणुद्वयसंयोग: असमवायिकारणम्. तत्र समवायिकारणनाशात् नाशो न भवति. कथञ्चित् द्व्यणुकनाशस्तु वक्तव्य:. सतु असमवायिकारणनाशादेव वक्तव्य:. तस्माद् परमाणुद्वयसंयोगस्य असमवायिकारणत्वं स्वीकृत्य तन्नाशाद् नाशो भवति इति युक्तिद्वयेन तत्र असमवायिकारणम् अतिरिक्तम् आवश्यकम् इति कल्पितम्. येतु अवयवातिरिक्तम् अवयविनं न अङ्गीकुर्वन्ति तेषां मते

असमवायिकारणस्य आवश्यकता नास्ति.

**प्र ादाचार :** नहि. तन्मतेऽपि तन्तवः पटस्य अवयवाः अङ्गीक्रियन्ते वेदान्तिभिरपि. परन्तु विश्लिष्टाः तन्तवो न पटस्य उपादानकारणं भवन्ति.

**रा.ताताचार्य :** तत्रतु नैयायिकैः विलक्षणमेव... तत्र उपादानकारणम् अन्यद्. एतैः उच्यमानं...

**वी. एन्. झा :** तत्रापि अवयवावयविभावो नाङ्गीक्रियते? ...अवयवी अङ्गीक्रियते वा पृथक्तया?

**गो. श्या. म. :** पृथक्तया न तादात्म्यएव...

**बी.आर्.शुक्ल :** भिन्नो अभिन्नो वा अवयविनो अवयवसंयोगो अवयविरूपएव. तत्र एकं मतम् इदं वर्तते. अवयवसंयोगएव घटः.

**रा.ताताचार्य :** सत्यम्.

**बी.आर्.शुक्ल :** अवयवसंयोगएव घटः इति केषाञ्चित् मतं वर्तते वेदान्तिनाम्. तत्र भवतामपि तदेव मतं चेत् तदा न विप्रतिपत्तिः.

**गो. श्या. म. :** वल्लभाचार्याणाम् इयम् उक्तिः "**संहतैः उपचितैः अवयवैः गुप्तो अवयवी प्रकटो भवति**". तत्रापि आविर्भावतिरोभावप्रक्रिया...

**बी.आर्.शुक्ल :** आविर्भावतिरोभावः इति तु नामान्तरं परन्तु तत्र घटस्य आविर्भावार्थम् अवयवसंयोगः कारणम् अस्ति न वा?

**वी. एन्. झा :** कार्यं नित्यं न जन्यम्. अतः 'आविर्भावः' इति उच्यते.

**बी.आर्.शुक्ल :** तर्हि कार्यकारणभावसिद्धान्तस्य आवश्यकतैव नास्ति. तर्हि समवायिकारणम् निमित्तकारणम्, एवं कारणं द्विविधम्, इति गोस्वामिपादैः कथं प्रतिपादितम्?

**गो. श्या. म. :** पातञ्जलयोगसूत्रके भाष्यमें भाष्यकार कहते हैं: "**उत्पत्तिस्थित्यभिव्यक्तिः विकारः प्रत्ययाप्तयः वियोगान्यत्वधृतयः कारणं नवधा स्मृतम्**". तो जब कारणको सोचते है तब इसी अर्थमें सोचते हैं कि कारण और कार्य. उन्होंने नवविधकारण बताये हैं. उसमें उत्पत्ति, स्थिति, अभिव्यक्ति आदि नव

प्रकार बतलाये हैं. उत्पत्तिका जैसे कारण होता है वैसे अभिव्यक्तिका भी कोई कारण हो सकता है. आप्तिका भी कोई कारण हो सकता है.

**बी.आर्.शुक्ल :** वह प्रश्न नहीं है. उत्पत्ति हो, अभिव्यक्ति हो कुछ भी हो.

**गो. श्या.म. :** शुक्लजी! मैं इस बातको किसी दूसरी दिशामें ले जाना चाहता हुं.

**एस्.आर्.भट्ट :** आप इनकी बात तो सुनिये.

**वी. एन्. झा :** कारणकी जो सङ्कल्पना है उसके अनेक भेद ये दिखला रहे हैं. आप जरा सुनिये...

**बी.आर्.शुक्ल :** यदि उत्पत्तिसे भिन्न सङ्कल्पना है तो फिर कारणकी सङ्कल्पना ही नहीं आती है. यह मेरा प्रश्न है.

**गो. श्या. म. :** स्थितिकारण भी हो सकता है, ज्ञप्तिकारण भी हो सकता है. तो ऐसा कोई नियम नहीं है कि कारण यदि है तो उत्पत्ति ही माननी चाहिये.

**बी.आर्.शुक्ल :** न न वो नहीं. कारणका जो सिद्धान्त है...

**गो. श्या. म. :** आपने कहा न कि कार्यको नित्य मानते हो तो कार्यकारणभावका विचार मत करो.

**बी.आर्.शुक्ल :** हां. नित्य माननेपर ...

**गो. श्या. म. :** पर ऐसा नहीं है. कार्यको नित्य माननेपर भी कार्यकारणभावका विचार हो सकता है. क्योंकि जैसे उत्पत्तिकारण होता है वैसे स्थितिकारण भी हो सकता है, ज्ञप्तिकारण हो सकता है, धृतिकारण हो सकता है.

**वी. एन्. झा :** अभिव्यक्ति कैसे होती है... अभिव्यक्तिका कारण क्या होता है?

**बी.आर्.शुक्ल :** अभिव्यक्तिका मतलब है उत्पत्ति. उसे 'उत्पत्ति' कहिये या 'अभिव्यक्ति' कहिये. जब आप 'कार्य' कहते हैं तब आप कारणका विचार करते हैं न! यदि अभिव्यक्ति

सर्वदा विद्यमान रहती तो फिर कारणका विचार ही नहीं होता. फिर कारणविचारकी आवश्यकता क्या है?

गो. श्या. म. : शुक्लजी! सुनिये. आपने सत्कार्यवादपर तो धूम-धमाकेसे तोप चलाई ...

बी.आर्.शुक्ल : हम तो सबपर तोप चला सकते हैं. पूरे आपके प्रस्थानरत्नाकरपर.

गो. श्या. म. : यह तो बहुत आनन्दका विषय होगा.

यज्ञेश्वर शास्त्री : उनका जो सत्कार्यवादका खण्डन है वह प्रत्यक्षविरुद्ध है. मैं आपको एक कागज दे रहा हुं आप मुझे मिट्टीका घट बनाकर दिखलाईए! असत्कार्यवादका खण्डन हो ही गया!

बी.आर्.शुक्ल : सत्कार्यवादका विषय अलग है. अभी मैं समवायसम्बन्ध...

गो. श्या. म. : उसी सन्दर्भमें बोल रहा हुं कि यदि "सतः आविर्भावस्य आवश्यकता नास्ति" ऐसी जो आपत्ति है तो सत्कार्यवादी यह पूछना चाहता है कि उत्पत्तिक्रिया उत्पद्यमान घटमें समवेत होकर आत्मलाभ करती है अथवा अनुत्पद्यमान घटमें समवेत होकर आत्मलाभ करती है? यदि असत्‌में आत्मलाभ करती है तब या तो उत्पत्ति क्रिया नहीं है असमवेतत्वात् और क्रिया है तो समवायितया वहां घट उत्पन्न हो ही गया.

बी.आर्.शुक्ल : किसका समवायी?

गो. श्या. म. : उत्पत्तिक्रियासमवायितया.

बी.आर्.शुक्ल : उत्पत्तिक्रियाका समवायी कौन?

गो. श्या. म. : कौन है यह बतलाईये. उत्पत्तिक्रियाका समवायी यदि मृत्तिका है तो मृद् उत्पन्न होगी, घट उत्पन्न नहीं होगा. और उत्पत्तिक्रियाका समवायी यदि घट है तब सत्कार्यवाद गलेपतित है.

बी.आर्.शुक्ल : उत्पत्तिरूप क्रियाका समवायी तो घट है. घटकी उत्पत्ति

होती है.

**गो. श्या. म. :** हां तो वह असमवेत क्रिया उत्पन्न हो रही है कि समवेत ?

**बी.आर्.शुक्ल :** किसमें ? क्रिया थोड़े ही उत्पन्न हो रही है, घट उत्पन्न हो रहा है.

**गो. श्या. म. :** उत्पन्न यदि क्रिया नहीं हो रही है और क्रिया यदि पूर्वसिद्ध है तो घट भी पूर्वसिद्ध है.

**बी.आर्.शुक्ल :** उत्पत्ति क्रियाकी नहीं है. उत्पत्ति घटकी है.

**गो. श्या. म. :** घटोत्पत्तिकी क्रिया किसमें समवेत है ? यह तो खुलासा करना पड़ेगा न ! कस्मिन् समवेता उत्पत्तिक्रिया उत्पद्यते. यदि उत्पत्तिक्रिया नित्या तदा घटस्यापि नित्यतापत्तिः. यदि उत्पत्तिक्रिया उत्पद्यते तदा कस्मिन् समवेता उत्पद्यते ? घटे समवेता उत्पद्यते वा अघटे वा ? अघटे वा उत्पद्यते चेत् पटः कुतो न उत्पद्यते ? यदि घटसमवेता उत्पद्यते चेत् घटः पूर्वमेव समवायितया ...

(कोलाहल)

**च. शे. शुक्ल :** मुझे कुछ कहना है. अभी (श्रीयज्ञेश्वर) शास्त्रीजीने जो कहा वह बहुत महत्त्वपूर्ण बात थी. उन्होने कहा न कि मैं आपको यह कागज दे रहा हुं आप उससे मिट्टीका घट बना कर दिखाइये. नैयायिक लोग घबड़ा गये. यह प्रश्न न्यायमें उठा है कि यदि तुम असत्कार्यको मानते हो तब क्यों घटकेलिये मृत्तिका, दण्ड, चक्र आदि ही जुटाते हो. क्यों नहीं किसी तन्तु या तृण आदिसे घट उत्पन्न हो जाता है ? तो नैयायिक घबड़ा गये. मैं भी नैयायिक हुं परन्तु आधुनिक दृष्टिसे भी विचार करता हुं. तो उन्होंने उत्तर दिया है लेकिन बहुत घबड़ाहटमें उत्तर दिया है. उपस्कारकारने कहा है : अरे वह तो एक स्वभाव है. हम वहींसे इस कारणकी सामग्री ले

लेते हैं. बस यही उत्तर दिया है.

**रा. ताताचार्य** : इदानीं असतो घटस्य उत्पत्तिः यदि अङ्गीक्रियते दण्डचक्रादिकारणकलापैः उत्पद्यमानो घटः कपालएव मृद्येव उत्पद्यते इति को अल्पो नियमः? अन्यत्रापि उत्पद्यमाने इति प्रश्नः क्रियते. इदानीं कार्यकारणभावस्तु अन्वयव्यतिरेकज्ञा-नाज्ञाननिश्चयाभ्यां निश्चीयते. एवञ्च दण्डचक्रादिकारणकलाप-सत्त्वे मृदि सति तत्र घटः उत्पद्यते. मृदि असति तत्र घटो न उत्पद्यते इति अन्यवयव्यतिरेकः ...

**च. शे. शुक्ल** : अयं प्रश्नो नास्ति. सत्कार्यवादे प्रश्नः. सत्कार्यवादेऽपि अयमेव सिद्धान्तो यद् दण्डादिसत्त्वएव घटः. वस्तुतो असत्कार्यवादे प्रश्नः एवं यद् मृदादेरेव कारणत्वं किमर्थम्?

**रा. ताताचार्य** : अत्रैव अभिव्यज्यते अन्यत्र कुतो न अभिव्यज्यते? इति शङ्कायाम् अत्रैव अस्ति अतो अत्रैव अभिव्यज्यते इति वक्तव्यम्. अत्रैव उत्पद्यते इति अत्रैव दृश्यते अन्यत्र न दृश्यते.

**च. शे. शुक्ल** : सत्कार्यवादिनाम् उत्तरं समीचीनं भवति. असत्कार्यवादिनान्तु तथा न भवति. अतएव स्वभावादेव भवति इत्येव उक्तम्. उपस्कारकाराः वदन्ति तथा.

**रा. ताताचार्य** : दण्डचक्रादीनां मृदि घटोत्पादकत्वं स्वभावः. स्वभावः कश्चन अवलम्बनीयः.

**च. श. शुक्ल** : सत्कार्यवाद तो बतलाता है कि यह कार्य है तो यह कारण है. लेकिन ये तो नहीं बतला पाते हैं न! बस, स्वभाव है ऐसा कह देते हैं.

**बी.आर्.शुक्ल** : अन्यव-व्यतिरेकके‌द्वारा स्थापित विश्वासमात्र है. एतत् सर्वं न मम. एतत् सर्वं ग्रन्थेएव वर्तते. "**कुतो वा नूतनं वस्तु वयम् उत्प्रेक्षितुं क्षमाः**".

**गो. श्या. म.** : तथापि वचोविन्यासवैचित्र्यं भवतामेव!

**रा. ताताचार्य** : अन्योन्याश्रयपरिहारविषये भवद्भिः किञ्चित् लिखितम्. तदेव

सर्वैः अभिधेयम् इति मन्ये. कार्यकारणभावः उभयनिरूप्यः इति लिखितम्. एवञ्च कार्यता-कारणता उभावपि धर्मौ उभाभ्यां निरूप्यौ. कार्यता कारणतानिरूप्या, कारणता कार्यतानिरूप्या. एवं परस्पनिरूप्यनिरूपकभावः. धर्मद्वयरूपो यः सम्बन्धा भवति तादृशस्थले परस्परं निरूप्यनिरूपकभावो नैयायिकैः अङ्गीक्रियते. यथा कार्यकारणभावः, आधाराधेयभावः, प्रतियोग्यनुयोगिभावः. अत्र प्रतियोगित्वं अनुयोगिनिरूप्यं भवति. अनुयोगित्वं प्रतियोगिनिरूप्यं भवति. आधारत्वम् आधेयनिरूप्यम्, आधेयत्वम् आधारनिरूप्यम् एवं एतादृशस्थलेषु अन्योन्याश्रयो अवश्यमेव भवति.

**बी.आर्.शुक्ल :** तत्र अन्योन्याश्रयस्तु अस्माभिः स्वीक्रियतएव.

**रा. ताताचार्य :** अत्र परिहारः उच्यते. महाभाष्यकारेण उक्तम् अस्ति "**इतरेतराश्रयाणि कार्याणि न परिकल्प्यन्ते... कार्याणि प्रकल्पन्ते**" इति ते वदन्ति. अतः तया रीत्या यत्र द्वयोः धर्मयोः परस्परं निरूप्यनिरूपकभावो वर्तते तत्र अन्योन्याश्रयः दोषो न भवति, बीजाङ्कुरवत्. इत्येवं समाधानं वक्तुं शक्यते वा.

**गो. श्या. म. :** शुक्लजी अनुमति दें तो एक प्रत्युपहास करना चाहूंगा. "**सर्वं सर्वमयम्**"के कारण अन्नादिके भक्षणमें भी मांसभक्षणका दोष होगा ऐसा शुक्लजी कहते हैं. तो नैयायिकोंने मांसत्वजातिको यदि व्यापक माना है और समवायको भी व्यापक माना है तब मांसभक्षणका दोष नैयायिकों पर भी है ही. और उनको यदि दोष नहीं लगता है तो हम भी कह सकते हैं कि व्यापक होने पर भी तिरोहित होनेके कारण दोष नहीं लगता है.

**बी.आर्.शुक्ल :** जातिभक्षण तो अप्रसिद्ध है.

**च. शे. शुक्ल :** मांसत्वसमवाय है लेकिन मांसत्व नहीं है.

**अम्बिकादत्त :** एक छोटासा प्रश्न है. असत्कार्यवादके विरुद्धमें सत्कार्यवाद जैसे अन्वयव्यतिरेकात्मक स्फुट दृष्टान्त प्रस्तुत करता है.

बालू और तेलका और तिल और तेलका. उसी तरह असत्कार्यवाद पक्षसे सत्कार्यवादके विरुद्ध कोई असत्कार्यवादी ऐसे स्फुट दृष्टान्त क्यों प्रस्तुत नहीं करते हैं जिससे कि सत्कार्यवादका स्फुट खण्डन हो जाय ?

**बी.आर्.शुक्ल :** घटादिका दृष्टान्त है ही. और तिलसे तेल होता है यह गलत है. तिल तेलका उपादानकारण नहीं है. तैलावयव तैलके उपादानकारण है जो उसमें अन्तर्निविष्ट हैं. तैलपरमाणु तिलके कारण होते हैं, यह भ्रान्ति उत्पन्न की गई है सत्कार्यवादीओंके द्वारा. इसलिये ईश्वरकृष्णने जितने भी अनुमान किये हैं उसमें बहुत दोष हैं. हमारे पिताजीने साङ्ख्यतत्वकौमुदीके ऊपर न्यायके अनुसार ठीक व्याख्या की है. नहीं तो उसमें सत्प्रतिपक्ष, स्वरूपासिद्धि, पक्षाप्रसिद्धि आदि दोष उनके अनुमानोमें हैं. "**असदकरणाद् उपादानग्रहणात् सर्वसम्भवाभावात् शक्तस्य शक्यकरणात्**" आदिमें हेत्वसिद्धिः आदि दोष हैं.

**वी. एन्. झा :** एक और आक्षेप श्रीपुरुषोत्तमजीने आपपर किया है. अन्वयव्यतिरेकसे कारणकी सिद्धि होती है. आत्मा ज्ञानका समवायी कारण है तो उसमें वहां "तत्सत्त्वे तत्सत्त्वं तदभावे तदभावः" ये जो अन्वयव्यतिरेक है वह यहां कैसे लगेगा ?

**बी.आर्.शुक्ल :** नहीं लगता है. इसलिये कारणता पदार्थान्तरं ...

**यज्ञेश्वर शास्त्री :** नैयायिकोंका जो दृष्टान्त है उसके बारेमें मेरी एक जिज्ञासा है. 'कपालद्वयसंयोगः-कपालद्वयसंयोगः' ऐसा मैं बचपनसे सुनता आया हुं. मैंने घट बनाते देखा. मृत्पिण्डसे ही घट बनता है. अतः कपालद्वयसंयोगका दृष्टान्त अभी तक मेरे दिमागमें बैठा नहीं है.

**हास्य - कोलहल**

# संगोष्ठ्युत्तरलेखनम्

**गोस्वामी श्याम मनोहर**

नव्यन्यायविद्याविदग्रगण्यानां श्रीमतां बलिरामशुक्लमहाभागानां सत्कार्यवादप्रत्याक्षेपपरायां वाङ्निर्झर्यां तदा प्रवहमाणो अहं तत्समुद्भावितप्रत्याक्षेपाणां समाधानाय झटिति पारंगतुं नाशकम्. इदानीं सावधानतया तदवगाहनेन वाल्लभमतदृष्ट्या यत् किमपि समाधानं स्फुरति तदु एतस्मिन् संगोष्ठ्युत्तरलेखने प्रस्तूयते.

प्रथमं तावत् प्रस्थानरत्नाकरकृद्भिः उद्भावितस्य ''**अनन्यथासिद्धत्वस्य अन्यथासिद्धभिन्नत्वेन अन्यथासिद्धेश्च अन्यत्र गृहीतकारणताकत्वरूपत्वेन तत्रापि अस्यैव कारणलक्षणस्य वक्तव्यत्वाद् आत्माश्रयापत्तेश्च**''इति दूषणस्य श्रीगदाधरभट्टाचार्यकृतकारणतावादोक्तं समाधानं ''**तदनियतपूर्ववृत्तितावच्छेदकत्वं न कारणताशरीरघटकं किन्तु भेदप्रतियोगिनाम् अन्यथासिद्धानां परिचायकमात्रं तादृशानियतपूर्ववृत्त्यवच्छेदकधर्माणां भेदकूटस्य प्रातिस्विकरूपेण कारणतावच्छेदकांशे विशेषणत्वम्; अतो न आत्माश्रयः**'' इति यत् शुक्लमहाभागैः पुनरावर्तितं तदेतत् सत्यं तथापि अन्यथासिद्धस्य लक्षणतयातु पूर्वमेव ''**नियतपूर्ववृत्तितावच्छेदक-यद्धर्मावच्छेदेन यादृशं कार्यं प्रति प्रामाणिकानां न कारणत्वव्यहारः तद्रूपावच्छिन्नमेव तादृशं कार्यं प्रति अन्यथासिद्धम्**'' इति अनुवदद्भिः पुनरपि अन्यथासिद्धिलक्षणं कारणताघटितमेव निर्दिष्टं कारणताच तादृगन्यथासिद्धिशून्यत्वमिति मिति श्रीपुरुषोत्तमोक्तदूषणस्य तादवस्थ्यमेव अत्र प्रतिभाति. यतोहि अनियतपूर्ववृत्तितावच्छेदकस्य कारणताशरीराघटकत्वेऽपि, अन्यथासिद्धेश्चापि यत् परिचायकं तत् तल्लक्षणतया स्वीक्रियते न वा? यतोहि यद् यस्य परिचायकं तस्य तल्लक्षणत्वाभावे परिचायकत्वमपि अनिश्चायकमेव स्यात्. अथ निश्चायकत्वेतु लक्षणत्वं कुतो न भवति इति निरूपणीयम्? सतिचैवं स्वीकृते हि अन्यथासिद्धेः लक्षणत्वे तद्भिन्नस्य च कारणत्वे अङ्गीकृते यदि न आत्माश्रयः तदा अन्योन्याश्रयदोषस्तु दुरुद्धरएव.

किञ्च "**नियतपूर्ववृत्तितावच्छेदकं कारणताशरीरघटकं न भवति तथापि. कारणं न अन्यथासिद्धान्यत्वेन विशेषणीयं तथा विशेषणे च आत्माश्रयः; किन्तु येन रूपेण अन्यथासिद्धत्वं तदन्यधर्मत्वमेव. यतोहि एकस्यैव केनचिद्रूपेण अन्यथासिद्धत्वं रूपान्तरेण च जनकत्वम्**" इति यत् प्रतिपादितं तदिह भेदवादिभिः नैयायिकैः शुद्धाद्वैतमतीयसत्कार्यवादालोचनेतु महती भेदाभेदविकल्पानुपपत्तिविभीषिका कृत्येव काचन प्रकटिता परन्तु तयैव ते स्वयं कुतो न बिभ्यति? यतोहि येन केनचिदपि रूपेण यस्य कस्यचिद् अन्यथासिद्धत्वं स्वीकृतं चेत् तस्य रूपान्तरेऽपि 'एकस्यैवे'ति अभेदाभ्युपगमाद् जनकत्वं न सम्भवेत्. यदि श्रीगदाधरोक्तं रूपान्तराभ्युपगमाद् एकस्यैव कथञ्चिद् अन्यथासिद्धत्वं कथञ्चित् च पुनः जनकत्वमपि विभाव्यते चेत् तदा सत्कार्यवादेऽपि मृत्पिण्डरूपेण कथञ्चिद् उपादानत्वं, घटत्वेनतु कथञ्चित् कार्यत्वमपि मिथः तादात्म्येऽपि भवतु नाम का हानिः? नच इह इष्टापत्तिरपि सम्भवति, यस्माद् एवम् अङ्गीकृतौतु यः "**शक्त्यात्मनापि कार्यस्य न सत्त्वं मानाभावात्. किञ्च शक्तिः घटस्वरूपाद् भिन्ना अभिन्ना वा? यदि भिन्ना तदा पररूपेण घटो अस्ति घटरूपेण नास्ति. घटाद् अभिन्ना चेत् शक्तिरूपेण यदा घटो अस्ति तदा स्वरूपेणापि आस्ते इति स्वीकर्तव्यं, तत् प्रत्यक्षविरुद्धम्**"इति आक्षेपः सतु गर्भस्रावेणैव नश्येत. ततः तैः स्वमते "**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता कारणत्वं भवेत् तस्य**" (न्या.सि.मु.१।१६) इत्यत्र स्वाभ्युपगते हि कारणतालक्षणे आत्माश्रयदोषपरिहारार्थं पुनः "**कारणं न अन्यथासिद्धान्यत्वेन विशेषणीयं तथा विशेषणे च आत्माश्रयः**" इति अङ्गीकुर्वद्भिः शुक्लमहाभागैरपि श्रीपुरुषोत्तमापादितो हि आक्षेपो अंशेन तु अभ्युपगतएव इति मन्ये. तत्परिहारार्थं पुनः योऽपि उपायो अनुष्ठितो "**येन रूपेण अन्यथासिद्धत्वं तदन्यधर्मत्वमेव**" इत्येवंरूपः, तत्रापि विचिकित्सेयं जागर्त्येव यत् कथम्भूतयोः धर्मधर्मिणोः अत्र विवक्षा? किं पृथक्सिद्धयोः वा अपृथक्सिद्धयोः वा? न तावद् आद्यं, धर्मधर्मिणोः हि पृथक्सिद्धत्वेतु 'तदन्यधर्मत्व'निवेशेऽपि न निस्तारो, धर्मात् पृथक्सिद्धस्य धर्मिणः तद्धेतुनैव अन्यथासिद्धानन्यथासिद्धयोः सांकर्यसम्भवात्. नच नैतेन कापि हानिः इति वाच्यं रासभस्यापि घटकारणतापत्तेः. तथैव अपृथक्सिद्धत्वेतु 'तदन्यधर्मत्व'निवेशेऽपि एकस्यैव एकेन धर्मेण अन्यथासिद्धत्वं यथा तथा अपरेण धर्मेण जनकत्वस्यापि सम्भवात् व्यायामवैयर्थ्यमेव.

शुक्लमहाभागाः पृच्छन्ति **''यदि अभिव्यक्तेन रूपेण घटो अस्ति चेत् कारकव्यापारवैफल्यम्. अथ मृत्पिण्डरूपेण तदानीं घटो अस्ति चेत् तर्हि तदानीं मृत्पिण्डएव आस्ते न घटः''** इति तत्र एभिरेव उपस्थापिते सत्कार्यवादीये प्रश्नएव तावत् कारणे कार्यम् अनभिव्यक्तरूपेण अवतिष्ठते कारकव्यापारेण तु आविर्भवति इति उल्लिखितं तथापि तत्परित्यागेन ''अभिव्यक्तरूपेण उत मृत्पिण्डरूपेण?'' कल्पद्वयस्यैव निरासः कृतो नतु सत्कार्यावाद्युक्तस्येति अनवधानतया विस्मृतमिति मन्ये!

अपिच — उपादानशक्त्या कार्याविर्भावो हि आविर्भूयमाणात् कार्यस्वरूपाद् अभिन्नो भिन्नो वा? सन् वा असन् वा? आविर्भावश्च कः पदार्थः? किं कार्यात्मना अवस्थानं किं संस्कारविशेषः उत प्रतीतिः? इति या प्रश्नमाला ग्रथिता सा अस्माकं भेदसहिष्ण्वभेदरूपतादात्म्यवादिनां कण्ठस्य कृते न समुचिता. यस्माद् ''आविर्भावकशक्त्याधारत्वं कारणत्वम्'' इति कारणलक्षणांगीकारेण आविर्भावस्य आविर्भूयमाणकार्यधर्मत्वमेवेति धर्मधर्मिणोः भेदसहिष्ण्वभेदरूपं तादात्म्यमेवेति अस्माकं सम्प्रतिपत्तिः. तादात्म्यन्तु अस्माभिः न भिन्नयोः अभेदारोपरूपो नापि अभिन्नयोः भेदारोपरूपो वा अङ्गीक्रियतेइति तादात्म्यस्य सत्त्वेनैव तद्धर्मिकस्य आविर्भावस्यापि सत्त्वमेव. नच सत्त्वेतु आविर्भावस्य सार्वदिकत्वम् आयाति इति वाच्यम्, उपादानद्रव्ये अनभिव्यक्तनामरूपकर्मान्तराणाम् अभिव्यक्तिरूपो हि आविर्भावो. सतु तत्तन्निमित्तीभूतसामग्रीतो नामादिधर्मिभिः साकमेव तन्निष्ठस्वपरनिर्वाह-कधर्मतया आविर्भवतीति न सार्वदिकत्वं तस्य. सच उपादानीभूतद्रव्यस्य प्रकटितनामरूपकर्मान्तरात्मना अवस्थानमेव, नवै संस्काररूपो नापि प्रतीतिरूपो वा किन्तु प्रतीतियोग्यतारूपएव. तच्च अवस्थानं पूर्वम् अनुद्भूतं निमित्तादिकारणकला-पैस्तु तस्य उद्भवइति पूर्वं नासीद् इति वक्तुं न युक्तं नापि कारकव्यापारवैफल्यम्. नैयायिकानां मतेऽपि ''उद्भूतत्वन्तु प्रत्यक्षप्रयोजको धर्मविशेषएव'' इति अङ्गीकाराद् समानो योगक्षेमः. अनभिव्यक्तस्य अनुद्भूतस्य वा अभिव्यक्तौ उद्भवे वा कारकव्यापारसाफल्यात्. तस्माद् घटादिवस्तुनो या प्रतीतिः सा खलु चक्षुःसंनिकर्षादिसामग्रीजन्या किन्तु घटादिवस्तुनः प्रतीतियोग्यतातु दण्डचक्रादिसामग्र्य-धीनचक्षुरादिसामग्रीजन्यैव. ननु कः तत्र संशयीत? तस्मादपि उत्पत्तेः प्राक् सन्नेव

घटः. अन्यथा प्रागसतः कार्यस्य उत्पत्तावपि एवंविधपर्यनुयोगस्य दुरुद्धरत्वादेव.

तथाहि उत्पत्तिरपि उत्पद्यमानकार्याद् भिन्ना अभिन्ना वा? भिन्ना चेत् न तदनुकूलव्यापारेण कार्यम् अजनिष्यत. अथ अभिन्ना चेत् तदा घटोत्पत्तिः घटरूपैवेति न उत्पत्त्याश्रयो घटइति घटस्य क्रियारूपता स्याद् उत्पत्तिक्रियायाः द्रव्यरूपता वा. तत्र घटस्य क्रियारूपत्वे यथा उत्पत्तिसातत्यं तथा उत्पत्तेः द्रव्यरूपत्वेतु द्रव्यवदेव गुणकर्मसमवायित्वापत्तिः.

यत्पुनः शुक्लमहाभागैः **''नासतो विद्यते भावः''** इति गीतावचनं कार्यस्य शशशृङ्गादितौल्यनिराकरणपरम् इति उक्तं तत्तु *''असतो, वन्ध्यापुत्रादिरूपस्य, भावो न विद्यते — कारणसामग्रीजन्यस्य घटादिकार्यस्य तु भावो विद्यते''* इति उक्तवचनगतपूर्वार्धस्यैव अर्थं प्रतिपादयितुम् अलं न पुनः **''न अभावो विद्यते सतः''**इति उत्तरार्धव्याख्याने. तस्माद् उत्तरार्धो किम् अपार्थकः आहोस्वित् *''सद्रूपघटस्य प्रागभावो न विद्यते''*इति असत्कार्यवादनिरासको वा भाव्येत ? यस्माद् भगवतोदितस्य अपार्थकत्वं न सम्भवति तस्मादपि असत्कार्यवादो अप्रामाणिकः. तस्मात् कार्याविर्भाकशक्तिनिरसिसिषतां कारणपदार्थान्तरत्ववादिनां मते कारणता मृत्स्वरूपाद् कपालद्वयस्वरूपाद् वा भिन्ना अभिन्ना वा? यदितु भिन्ना तदा मृदो वा कपालद्वयस्य वा न घटोत्पत्तिसमवायिता. अथ अभिन्ना चेत् तदा यथा कारणता कार्यनिरूपिता तथा मृदपि घटनिरूपितैव भवेद्! ततश्च घटबोधाभावे मृद्बोधोऽपि न स्यात्. तच्चापि प्रत्यक्षविरुद्धमेवेति समानो योगक्षेमः. तादात्म्यवादेतु भेदाभेदावेव नातीव भिन्दाते इति न कापि बाधा एतादृशी.

शुक्लमहाभागाः अभिप्रयन्ति **''न यद्यद् असत् तत्तद् उत्पद्यते परन्तु यद्यद् उत्पद्यते तत्तद् असद्''** इति तत्र भवति इयं विप्रतिपत्तिः : नहि नैयायिकाः अभावतो यदृच्छया स्वभावादेव वा कार्यम् उत्पद्यते इति यदृच्छावादं स्वभाववादं वा स्वीकुर्वन्ति. किंपुनः यद्यत् कृतिजन्यं तत्तत् प्रागभावप्रतियोगि इति प्रतिपादयन्ति. तत्र कार्योत्पत्त्यनुकूलकृतेस्तु निष्कर्मकत्वे स्वरूपासिद्ध्या यच्च किमपि कर्मतया उपादीयेत तत् मृत्तिका चेत् तस्याएव उत्पत्तिः भवित्री. अथ घटः चेद् उत्पादनक्रियायाः

कर्मतया तस्य पूर्वसिद्ध्या न घटप्रागभावः आत्मलाभम् आप्नुयाद्. प्रागसतश्च उत्पत्तौ नियामकत्वे प्रागसत्-सदातनासतोः भेदोऽपि निर्वक्तव्यः. सच सप्रतियोगिको हि अभावः प्रागभावो निष्प्रतियोगिकस्तु पुनः सदातनाभावः तुच्छत्वापरपर्यायरूपः चेत्, प्रागभावस्य प्रतियोगिज्ञानाधीनज्ञेयतया प्रथमं तत् प्रतियोगिज्ञानं यथार्थं वा स्याद् अयथार्थं वा इति विवेचनीयम्. तत्र याथार्थ्याभ्युपगमेतु असद्घटविशेष्यकं असत्त्वप्रकारकं ज्ञानं चेद् असत्ख्यानापत्तेः सिद्धान्तहानिः. नच सद्घटविशेष्यकम् असत्त्वप्रकारकं तद् भवितुम् अर्हति नापि असद्घटविशेष्यकं सत्त्वप्रकारकं वा, उभयथापि भ्रान्तिरूपत्वानपायाद् न इष्टसिद्धिः. नच "घटं कुरु — शाटकं वय" इति भाविनीं घटसत्ताम् उपचर्य जायमानस्य घटप्रागभावज्ञानस्य आहार्यरूपता अभिमन्तव्या, तादृज्ज्ञानस्य यथार्थत्वाभावेन प्रागभावसिद्धेः दूरापास्तत्वात्. तस्मात् **"कार्याविर्भावशक्तौतु ह्युपादानविचिन्तना कार्यासत्त्वे त्वसम्बद्धोपादानेनापि किं भवेत्!"**

अथ सत्कार्यवादाभ्युपगमे यत् कारणरूपान्नभक्षणेन कार्यरूपमांसभक्षणदोषापादानं, तदपि असमीक्षिताभिधानमेव, यस्माद् नैयायिकानां मतेऽपि अन्ने मांसादिप्रागभावसत्त्वेन समानो दोषः. अथ अन्ने मांसत्वाद्यभावादेव न दोषः इति चेत्, तदा बिभक्षयिषितयोः अजाछागयोरपि मांसादिप्रागभावस्य सत्त्वादेव न तद्भक्षणेऽपि मांसादिभक्षणदोषो भवेत्. अथ अजाछागबिभक्षयिषितुः तत्र कार्यरूपमांसादिप्रागभावेऽपि कारणरूपमांसादिसत्त्वेन तदपराधभियैव च ततः पराङ्मुखस्य अन्नभक्षणे न कोऽपि दोषः, तदन्नस्य भक्षणानन्तरं मांसादितया परिणामेऽपि पूर्वन्तु मांसत्वादिप्रागभावाद्. सत्कार्यवादिनां मतेतु तावद् अन्नएव मांसादिरूपकार्यस्य सत्त्वेन अन्नभक्षणेनापि मांसादिभक्षणदोषो वज्रलेपायितएव इति चेद्, अस्माकं मतेऽपि यत्र बुभुक्षुणीयस्य मांसादिरूपेण अभिव्यक्तस्य भक्षणेनैव मांसादिभक्षणदोषो यत्रतु तथा न अभिव्यक्तिः न तत्र दोषलेशोऽपि. अन्यथातु भक्षकमुखोदरयोरपि स्वकीयमांसादेः विद्यमानत्वादेव तत्रापि तद्दोषतादवस्थ्यम्. यत्पुनः सदेवापि क्रियते चेद् ब्रह्मापि कर्तुं शक्यं स्याद् इति आपादानं, तत्र घटात्मकन्तु ब्रह्मापि कर्तुं शक्यमेव, घटोऽपि ब्रह्मतया कर्तुम् अशक्यएव इति अस्माकं सम्प्रतिपत्तिः. तत् कथम् इति चेद्, अहो विस्मरणशीलता भवतां! स्मरन्तु

तत्र भवन्तः श्रीगदाधरोक्तम् "**एकस्यैव केनचिद्रूपेण अन्यथासिद्धत्वं रूपान्तरेण च जनकत्वम्**" इति. किञ्च कारणे कार्यासत्त्वे सुवर्णाभरणनिर्मात्रे आभरणनिर्माणाय दत्तस्य सुवर्णस्य आभरणनिर्माणान्तरं पुनर्ग्रहणं नैयायिकानां कृते अदत्तादानतया सुवर्णस्तेयरूपं पातकमेव भवेद् इत्यपि असत्कार्यवादो असन्नेव.

यदिह १.फलोपधायकं २.स्वरूपयोग्यं च इति यत् कारणद्वैविध्यं निरूपितं, तत्र यत् फलोपधायकं तदेव स्वरूपयोग्यमपि उत अन्यदेव इति विचारणीयम्. तद्यदि तदेव इति चेत् तदा न कारणस्य द्वैविध्यम्. प्रातिस्विकं किञ्चिद् अन्यदन्यत् कारणं स्वीकार्यमिति न फलोपधायकत्वेन धर्मेण कारणे कश्चिद् विशेषः. अथ नैकं तदा फलोपधायकमेव कारणं भवतु स्वरूपयोग्यन्तु फलोपधायकतया कारणत्वेन ज्ञाते कारणतया अवगम्यमानम् अन्यथासिद्धमेव भवेत्.

असमवायिकारणनिरासे श्रीपुरुषोत्तमैः "**तन्तुद्वयसंयोगादिकञ्च सामग्र्यामेव प्रविशतीति न असमवायित्वेन अतिरिक्ता कारणता तस्य कल्पनीया, प्रयोजनाभावाद्**" इति यद् उक्तं तत्र शुक्लमहाभागैः "**यतोहि घटं प्रति कपालद्वयसंयोगः कारणम् अस्ति इत्यत्र नास्ति कश्चन सन्देहावसरः. कपालद्वयसंयोगे या घटकारणता विद्यते सा निमित्तकारणता न भवितुम् अर्हति. निमित्तकारणानां दण्डादीनां नाशात् घटनाशस्तु न भवति. परन्तु कपालसंयोगनाशात् घटनाशो भवतीति सर्वेषाम् अनुभवः.... कपालसंयोगो घटस्य समवायिकारणं न भवितुम् अर्हति, यतः तत्र पूर्वोक्तसमवायिकारणस्य लक्षणं न सङ्घटते**" इति उच्यते तदेतद् न्यायशास्त्रीयं सत्यं किन्तु श्रीपुरुषोत्तमैरपि न समवायिकारणे कपालद्वयस्य संयोगो अन्तर्भाव्यते किमुत कारणसामग्र्यामेवेति निरनुयोज्यानुयोगो अत्र. अथ इहापि भवेद् विचिकित्सेयं कारणसामग्र्यामेव असमवायिकारणस्यापि अङ्गीकारः आवश्यकएवेति. तत्र प्रतिवक्तव्यं साधारणकारणानां अष्टानां कार्यमात्रं प्रति कारणत्वादेव यथा न विशेषकार्यकारणतया अङ्गीकारः आवश्यको यथाच "**यत् कार्यं प्रति कारणस्य पूर्ववृत्तिता येन रूपेण गृह्यते तत् कार्यं प्रति तद्रूपम् अन्यथासिद्धम्**" (न्या.सि.मु.१।१९) इति कारणरूपस्य यथा अन्यथासिद्धत्वं तथा अवयविपदार्थोत्पत्तौ अवयवसंयोगस्यापि अन्यथासिद्धत्वमेव. असंयुक्तावयवानां सर्वत्र अवयविरूपकार्योत्पा-

दकत्वासम्भवेन अवयवानान्तु पुनः संयोगद्वारेणैव समवायितासम्भवेन विशेषेण तदुल्लेखानपेक्षणात्. अन्यथा कारणरूपाणामपि अन्यथासिद्धत्वं न सिद्ध्येत.

अथ कारणसामग्रीतो असमवायिकारणं भिन्नं वा अभिन्नं वा इति विकल्पस्तु तादात्म्यवादिनाम् अस्माकं कृते न बहुभीषणकम्. ननु एवं सति निमित्तोपादानयोरपि भेदो नांगीकर्तव्यः इति चेद्, 'ओम्!' इति ब्रूमः. छान्दोग्योपनिषत्प्रतिपादिते **''एकविज्ञानेन सर्वम् इदं विज्ञातं भवति''** इति सिद्धान्ते तस्यैकस्य साक्षात्कारात् पूर्वमेव निमित्तोपादानयोः नामरूपकर्मवैविध्यस्य ऐच्छिकभेदरूपस्य अंगीकारो न ततः ऊर्ध्वम्. अतएव ब्रह्मणस्तु अभिन्ननिमित्तोपादानत्वमेव. तल्लीलायान्तु यत्र-यत्र येषां-येषां नाम-रूप-कर्मणां पार्थक्यं परमेश्वरेण प्रकटीकृतं तत्र-तत्र भेदाभ्युपगमोऽपि अस्माकं तदिच्छानुरोध्येव न पुनः तत्स्वरूपानुरोधी. असमवायिकारणत्वेन न्यायशास्त्राभिमतानां तन्तुद्वयादिसंयोगानान्तु तन्त्वादिभिः पृथक्सिद्ध्यभावादेव न पृथङ्नाम-रूप-कर्मतेति तयोः भेदनिरासमपि कुर्मः.

सर्वथापि तु श्रीपुरुषोत्तमचरणानां प्रस्थानरत्नाकरोक्तकारणताविचारे पूर्वोत्तरपक्ष-कोटिक्रमम् इमं स्वाप्रतिमवैदुष्येण शास्त्रचर्चायोजनसौहृदेनैव च अग्रे नयनेन वयं सर्वेऽपि भृशम् उपकृताः एभिः श्रीबलिरामशुक्लैः इति विज्ञापयति अधमर्णो गो.श्या.म.

# कारणतासिद्धान्ते न्यायवाल्लभमतयोः समीक्षणम्

डॉ. सच्चिदानन्द मिश्र.

प्रस्थानरत्नाकरे करणलक्षणं तावत् प्रस्तूयते ‘‘**व्यापारवद् असाधारणं कारणं करणम्**’’इति. कारणत्वञ्च आविर्भावकशक्त्याधारत्वम्, आविर्भावश्च व्यवहारयोग्यत्वम्. कारणं द्विविधम् : १.उपादानकारणं २.निमित्तकारणं च. उपादानकारणं समवायिकारणापरपर्यायम्. तादात्म्यसम्बन्धेन कार्यं यम् आश्रित्य उत्पद्यते तद् उपादानकारणम्. समवायः तादात्म्यस्य सञ्ज्ञान्तरम्. स भेदसहिष्णुरभेदः. उपादानकारणस्य द्वैविध्यं : क.परिणाम्युपादानं ख.विवर्तोपादानं च. परिणामश्च उपादानसमसत्ताको अन्यथाभावः, विवर्तस्तु उपादानविषमसत्ताको अन्यथाभावः. यथा दुग्धं दधिरूपेण परिणमते, सुवर्णं कटक-कुण्डलादिरूपेण विपरिणमते. दुग्धस्य यादृशी व्यावहारिकी सत्ता तथैव दध्नोऽपि, उपादानदुग्धसमसत्ताको अन्यथाभावभूतो दधिपरिणामः, परिणाम्युपादानं भवति दुग्धम्. सुवर्णं सदेव कटक-कुण्डलादिरूपेण परिणमते, परिणामभूतं कटक-कुण्डलादि, परिणाम्युपादानञ्च सुवर्णम्. रजतादिरूपेण शुक्तौ बुद्धिः भवति तत्र रजतसत्ता प्रातिभासिकी शुक्तेः च व्यावहारिकी सोऽयं रजतात्मको अन्यथाभावो उपादानभूतायाः शुक्तेः विषमसत्ताकः. अतएव शुक्तेः विवर्तोपादानता. समवायिकारणभिन्नं कारणं निमित्तकारणम् उच्यते. कारणताग्राहकौच अन्वयव्यतिरेकौ. करणलक्षणघटकव्यापारलक्षणन्तु ‘‘**कारणेन कार्यजनने यदन्तरा अवश्यम् उपयुज्यते स व्यापारः**’’ . कारणविशेषणीभूतम् असाधारणत्वञ्च कार्योत्पादनकाले तदनुकूलव्यापारातिरिक्तव्यापाररहितत्वम् अवगन्तव्यम्. इदं तावद् वाल्लभानां मतम्[१].

नैयायिकास्तु व्यापारवद् असाधारणं कारणं करणम्. कारणत्वञ्च अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वम्, अनन्यथासिद्धनियतपूर्ववर्तित्वम्, अन्या-

समवधानावच्छिन्नकार्यानुत्पत्तिव्याप्तत्वं, स्वस्वव्याप्येतरसकलसम्पत्तौ कार्याभा-वव्यापकाभावप्रतियोगित्वं वा[२]. कारणस्यच समवायिकारणासमवायिकारणनिमि-त्तकारणभेदेन त्रैविध्यम्. यस्मिन् समवायसम्बन्धेन विद्यमानं सत् कार्यम् उत्पद्यते तत् समवायिकारणम्. कार्येण कारणेन वा सह एकस्मिन् अर्थे समवायसम्बन्धेन विद्यमानं सद् यत् कारणं तद् असमवायिकारणम्. तदुभयभिन्नं कारणं निमित्तकारणम्[३]. व्यापारत्वञ्च तज्जन्यत्वे सति तज्जन्यजनकत्वम्. कस्यचिदपि कार्यस्य उत्पादे त्रिविधम् इदं कारणम् उपयुज्यते. यथा घटं प्रति कपालस्य समवायिकारणता कपाले समवायसम्बन्धेन विद्यमानस्य घटस्य उत्पादात्. कपालद्वयसंयोगस्य असमवायिकारणता कार्यभूतेन घटेन सह कपाले समवायेन विद्यमानः सन्नेव कपालद्वयसंयोगो घटकारणं भवति. दण्डस्य उभयभिन्नतया कारणतया च निमित्तकारणता. कारणगतम् असाधारण्यञ्च कार्यत्वानवच्छिन्नकार्यतानिरूपितकारणताश्रयत्वमेव.[४]

**समुपस्थापितयोः न्यायवाल्लभमतयोः एवं वैभिन्यम् :**

१.एकत्र आविर्भावकशक्त्याधारत्वात्मकम्, अपरत्रच अनन्यथासिद्धनियतपूर्व-जातीयत्वात्मकम्.

२.न्यायनये कारणत्रैविध्यं, वाल्लभनये च कारणद्वैविध्यम्.

३.व्यापारलक्षणे च भेदः.

४.कारणगतासाधारण्यं भिन्नम् उभयत्र. एकत्र कार्योत्पादनकाले तदनुकूलव्या-पारातिरिक्तव्यापाररहितत्वम् असाधारण्यम्, अपरत्रच कार्यात्वानवच्छिन्न-कार्यतानिरूपितकारणताश्रयत्वम्.

करणकारणविषयके विचारेच उक्तरीत्या न्यायवाल्लभनययोः भेदे सैद्धान्तिकभेदएव कारणीभूतः. नैयायिकानां पक्षः आरम्भवादः, असदेव कार्यं कारणेन आरभ्यते परमाण्वादिना. वाल्लभानाञ्च पक्षः सत्कार्यवादः. अत्रच मते कार्यं सदेव कारणेन व्यवहारयोग्यं क्रियते. सोऽयं पक्षः कार्यकारणोभयसद्वादः. कार्यमपि सदेव कारणमपि सदेव. न्यायनयेच असन्नेव घटादिः उत्पद्यते. परमाणुद्वयेन द्व्यणुकं, द्व्यणुकत्रयेण च त्र्यणुकम्. एवं

रीत्या भवति भूतानां समुत्पत्तिः.

**अत्र वाल्लभानां नैयायिकेषु इमे आक्षेपा :**

१. यदि नाम कारणत्वम् अन्यथासिद्धनियतपूर्ववर्तित्वात्मकं तर्हि पूर्वर्तित्वस्य कार्यसापेक्षत्वात् कार्यस्य च नियमतः कारणात् पश्चाद्भावित्वाद् अन्योन्याश्रयो दोषः.[५]. अत्र अयम् आशयः प्रतिभाति : कारणत्वम् अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववर्तित्वं, कार्यत्वं नाम कारणतो नियतपश्चाद्भावित्वम्. अतः कारणपदार्थज्ञानाधीनं कार्यपदार्थज्ञानं, कार्यपदार्थज्ञानाधीनञ्च कारणपदार्थज्ञानम्. स्पष्टम् एवम् अन्योन्याश्रयः.

२. कारणलक्षणे अनन्यथासिद्धत्वमपि प्रविष्टम् अस्ति. प्रष्टव्यं तावत् किं नाम इदम् अन्यथासिद्धत्वम् ? किञ्च अनन्यथासिद्धत्वम् ? अन्यथासिद्धभिन्नत्वमेव अनन्यथासिद्धत्वम् , अन्यथासिद्धत्वञ्च अन्यत्र गृहीतकारणताकत्वरूपेणैव ग्राह्यं सति च एवम् अत्र 'कारण'पदं प्रविष्टम्. कारणलक्षणे कारणप्रवेशेन आत्माश्रयापत्तिः.[६]

३. 'कारणं-कारणम्' इति अनुगताकारप्रतीत्या सिद्धः जातिविशेषः कारणत्वं, नैवमपि वक्तुं शक्यते, जातेः द्रव्यगुणकर्मस्वेव सत्त्वात् सामान्य-विशेष-समवायाभावानां कारणत्वं न स्यात्. स्वीक्रियते च न्यायनये अभावस्यापि कारणत्वम् अखण्डोपाधित्वन्तु अगतिकगतिः.[७]

४. यदि नाम कार्यानुकृतान्वयव्यतिरेकित्वात्मकं करणत्वम् इति मतं तर्हि परमेश्वरे कालदिगादौ भवति कारणलक्षणाव्याप्तिः. न्यायमते विभुतया एतेषां व्यतिरेकित्वं कालतो देशतो वा अप्रसिद्धम्[८].

अतो नैव अन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वं किन्तु आविर्भावकशक्त्याधारत्वमेव कारणत्वम् इति स्वीकरणीयम्. शक्तिसत्त्वे किं प्रमाणम् ? प्रश्ने अस्मिन् वाल्लभाः समुपस्थापयन्ति यत् तुरीतन्तुवेमादिभ्यः पटोत्पत्तिदर्शनात् मृद्दण्डचक्रादिभ्यश्च घटोत्पत्तिदर्शनात् तत्र तज्जननशक्तेः निश्चयो भवति. यदि शक्तिः न स्यात् तर्हि शीर्णेभ्योऽपि तन्तुभ्यः पटोत्पत्तिः प्रसज्येत, भर्जितेभ्यश्च बीजेभ्यो अङ्कुरम् उत्पद्येत, मणिसमवधानेऽपि वह्निना दाहो

प्रसज्येत. अत: कालेन भर्जनेन नाश्या मणिसमवधानेन प्रतिबध्या काचित् शक्ति: अवश्यं स्वीकार्या[९]

**अत्र तावत् नैयायिका: समादधति :**

१.नहि कार्यलक्षणं कारणघटितम् अस्ति येन अन्योन्याश्रयो दोषो भवेत् किन्तु कार्यत्वं प्रागभावप्रतियोगित्वरूपम्[१०]. कारणत्वञ्च अनन्यथासिद्धत्वे सति कार्यनियतपूर्ववर्तित्वम्. अतो न अन्योन्याश्रयो दोष:. वस्तुतस्तु नहि कार्यत्वं प्रागभावप्रतियोगित्वरूपं किन्तु स्वरूपसम्बन्धविशेष: पदार्थान्तरं वा. यतोहि कार्यतासम्बन्धेन अवच्छिन्ना भवति प्रागभावप्रतियोगितातु सम्बन्धेन अनवच्छिन्ना. एवमपि न अन्योन्याश्रयो दोष:.

२.अन्यथासिद्धत्वं नहि अन्यत्र गृहीतकारणताकत्वरूपम् अस्ति येन कारणलक्षणे आत्माश्रयो भूयात् किन्तु येन सह यद्रूपावच्छिन्नस्य यादृशकार्यं प्रति पूर्ववर्तित्वम् अवगम्यते तद्रूपावच्छिन्नं तादृशकार्यं प्रति अन्यथासिद्धं भवति अन्यं प्रति पूर्वभावे विज्ञाते यत् पूर्वभावविज्ञानं तद् अन्यथासिद्धं भवति इत्यादिपञ्चविधरूपेण अन्यथासिद्धत्वं ग्राह्यं भवति. न अत्र क्वचिदपि कारणत्वं प्रविष्टम् अस्ति कुत: आत्माश्रयो भवेत् ?

तृतीय-चतुर्थपक्षयोस्तु नहि नैयायिकानाम् आग्रहो अस्ति. अतो अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वरूपं कारणत्वं स्वीकर्तुं शक्यतएव. न अत्र दोषलेश:.

**नैयायिका: आक्षिपन्ति वाल्लभान् :**

शक्ते: अतिरिक्तकल्पनायां मानाभावात् नहि तावद् आविर्भावकशक्त्या-धारत्वं कारणत्वम् इति कारणलक्षणं सम्भवति, शक्तिस्वीकरणं विनापि कार्योपपादनसम्भवात्[११]. प्रतिबन्धकेन शक्ते: कीदृशो अयं प्रतिबन्ध: ? विनाशएव इति वक्तव्यम् अन्यथा प्रतिबन्धकसद्भावेऽपि शक्तित्वे कथङ्कारं कार्यप्रतिबन्धो भवेत् ? तथाच अनन्तशक्ति-तद्ध्वंस-तत्प्रागभावकल्पनापेक्षया स्वातन्त्र्येण मण्याद्यभावस्य मण्याद्यभावविशिष्टवह्न्यादेरेव वा दाहादिकं प्रति

कारणत्वं लाघवात् स्वीकार्यम्. एतच्च उत्तेजकाभावविशिष्टमण्याद्यभावविशिष्टव-ह्न्यादेः दाहकारणतायामेव पर्यवस्यति, उत्तेजकाभावविशिष्टमण्यादेरेव प्रतिबन्धकत्वात्. अतएव गङ्गेशोपाध्यायाः शक्तिवादे स्पष्टम् उद्घोषयन्ति ''हन्तैवं शक्तिं विनापि तदर्थसिद्ध्या किं शक्तौ ?''[१२]

**शक्तेः अतिरिक्ततायाम् एषा समस्या अपरापि जागर्ति :**

भावकार्यमात्रस्य समवायिकारणजन्यत्वेन शक्तेरपि भावकार्यत्वेन शक्त्यनुकूला अपरा शक्तिः समवायिकारणे स्वीकार्या. सापि च समवायिकारणजन्यैव मन्तव्येति शक्तेः अनवस्था प्रसज्यते[१३]. अतः कारणत्वमेव शक्तिः[१४] नतु पदार्थान्तरमिति नैव आविर्भावकशक्त्याधारत्वात्मकं कारणत्वं निर्वक्तुं शक्यम्.

वस्तुतस्तु अनन्यथानियतपूर्ववर्तिजातीयत्वादिरूपं कारणत्वम् एतादृशका-रणत्वघटकान्यथासिद्धिनिरूपकधर्मभेदकूटस्य प्रातिस्विकरूपेण ज्ञातुम् अशक्य-त्वात् निर्वक्तुम् अशक्यम्. अतएव निर्वचनचतुरेणापि गदाधरेण कारणतावादे स्वीकृतम् ''**अत्रच कारणत्वस्य निरुक्तरूपत्वे तद्घटकान्यथासिद्धिनिरूपकधर्म-भेदकूटस्य प्रातिस्विकरूपेण युगसहस्रेणापि ज्ञातुम् अशक्यतया कारणत्वस्य दुर्ज्ञेयत्वापत्तिः**'' [१५]. अतएव च पदार्थतत्त्वनिरूपणे दीधितिकृतः कारणत्वस्य पदार्थान्तरत्वं स्वीकुर्वन्ति. तस्यच कार्यभेदाद् अवच्छेदकभेदात् च भेदः. तस्य कारणत्वस्य ग्राहकं क्वचिद् अन्वयव्यतिरेकसहितं प्रत्यक्षं भवति क्वचित् च अनुमानं क्वचित् च आगमः[१६]. घटं प्रति कपालकारणतायाः ग्राहकं प्रत्यक्षम्, परमेश्वरस्य क्षित्यादिकारणतायाः ग्राहकम् अनुमानम्, ज्योतिष्टोमादौ स्वर्गादिकारणतायाः ग्राहकः आगमः. दीधितिकृत्सम्मतं कारणत्वस्य पदार्थान्तरत्वं गदाधरेणापि समर्थ्यते कारणतावादे[१७]. जगदीशेनापि ''**युज्यतेच अतिरिक्तं कारणत्वम्**'' इति सिद्धान्तितम्[१८].

एवञ्च इदम् आयाति पुरस्तात् : शक्तिः नाम कारणत्वं, कारणत्वञ्च पदार्थान्तरं, सुस्पष्टमेव शक्तेः पदार्थान्तरत्वम्. किन्तु उभयत्र भेदः एषएव : नहि

पदार्थान्तरभूतस्य कारणत्वस्य उत्पाद-विनाशालित्वम्. शक्तेस्तु स्वीक्रियते उत्पाद-विनाशशालित्वम्. अस्य अतिरिक्तस्यैव कारणत्वस्य अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वं ग्राहकं परिचायकं वा. सुस्पष्टमेव यद् अनया रीत्या ''आविर्भावकशक्त्याधारत्वं कारणत्वम्'' इति कारणलक्षणं न्यायमतेऽपि सुवचम्. भर्जन्यादिना शक्तेः अस्याः नाशो भवति इति वाल्लभाः. नैयायिकास्तु न एषा कारणत्वात्मिका शक्तिः नश्यति इति स्वीकुर्वन्ति.

न्याय-वैशिषिकसम्प्रदायाभिमतारम्भवादे परमाणुभिः द्व्यणुकत्रसरेण्वादिक्रमेण महाभूतोत्पत्तिः भवति. न एतद् असमवायिकारणम् अनभ्युपगम्य सम्भवति. वाल्लभे नयेतु न असौ आरम्भवादो अङ्गीकृतो अतो न असमवायिकारणाभ्युपगमः. आरम्भवादे वाल्लभाः समुपस्थापयन्ति दोषान् इमान् :

१.नहि असतः कार्यस्य उत्पत्तिः सम्भवति, उत्पत्तेः पूर्वं घटादेः शशशृङ्गादितुल्यतया शशशृङ्गादिवत् नैव घटादेरपि सम्भवति समुत्पत्तिः, उभयोः असत्त्वेन साम्यात्[१९].

२.यदि घट-शशशृङ्गयोः असत्त्वेन साम्येऽपि घटप्रागभावस्य सत्त्वेन शशशृङ्गप्रागभावस्य च अप्रसिद्ध्या घटस्य उत्पत्तिः सम्भवति नतु शशशृङ्गादेः इति व्यवस्थाप्यते. तर्हि प्रष्टव्यं खलु प्रागभावसत्त्वे प्रमाणं किम् ? ''कपाले घटो नास्ति'' इति प्रतीतेस्तु घटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावविषयकतयैव निर्वाहसम्भवात् घटप्रागभावे न अस्याः प्रतीतेः प्रमाणता. ''न अत्र कपाले घटप्रागभावः'' इति प्रतीतिः तत्र प्रमाणम्, एतादृश्याः प्रतीतेरेव असत्त्वात्[२०]. पुनश्च प्रागभावः किं घटत्वावच्छिन्नप्रतियोगिकः तत्तद्धटप्रतियोगिको वा ? घटत्वावच्छिन्नप्रतियोगिकत्वे सर्वेभ्योऽपि कपालेभ्यः सर्वेषां घटानां समुत्पत्तिः स्यात्. कयोश्चित् कपालयोः कस्यचिद् घटस्य उत्पत्तौ सत्यां नियमो भज्येत. यदि तत्तद्धटप्रतियोगिकः प्रागभावः इति मतं, तर्हि अभावज्ञानस्य प्रतियोगिज्ञानाधीनतया तदानीम् असतः प्रतियोगिनो ज्ञानासम्भवेन प्रागभावप्रतीतिः अशक्यैव[२१]. उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गेनापि न प्रागभावः स्वीकर्तुं शक्यः. क्षणिकानां

कालोपाधिनामपि निमित्तसामग्रीप्रविष्टतया तादृशकालोपाधीनां कार्योत्पत्तिस-मनन्तरम् असत्त्वेन निमित्तसामग्रीविघटनादेव उत्पन्नस्य न पुनरुत्पत्तिप्रसङ्गः[२२]. निमित्तान्तरसमवधाने नष्टस्य पुनरुत्पत्तिरपि नैव विरुद्धा अतः कारणावस्थातिरिक्तः प्रागभावो ध्वंसश्च न विद्येते, कार्योत्पत्यनुकूलया कारणावस्थयैव नियमसम्भवात्.

३.आरम्भवादे का नाम उत्पत्तिः? प्रश्नो अयम् असमाधेयः. प्रागभावो यदि उत्पत्तिः तर्हि न एतत् सम्भवति. प्रागभावस्य अजन्यतया कार्यपूर्वकालेऽपि वर्तमानतया ''इदानीं घटो भविष्यति'' इति प्रतीतेः बाधः प्रसज्येत. यदि नाम उत्पत्तिः धर्मान्तरं तर्हि प्रष्टव्यम् एतद् यत् तदेकनिष्ठं द्विनिष्ठं वा? द्विनिष्ठत्वे ''संयुक्ते इमे'' इति प्रतीतिवद् ''उत्पद्येते इमे'' इति प्रतीतिः स्यात्. एकनिष्ठत्वे कार्यस्य कार्यानुत्पाददशायाम् असत्त्वात् कारणादिनिष्ठत्वमेव वाच्यम्. तथाच एवं विषयिणि उत्पद्यते इति प्रतीतिः स्यात्[२३]. नापि आद्यक्षणसम्बन्धस्य वक्तुम् अशक्यत्वात्[२४]. उत्पत्तेरपि जन्यतया तस्यापि उत्पत्तिः स्वीकार्या क्रमेण च अनेन अनवस्था खलु आपतति.

४.परमाणूनां कारणत्वं नैव सम्भवति. द्व्यणुकवद् मध्यमपरिमाणवद्द्रव्यारम्भ-कत्वेन तेषामपि आरब्धत्वम् अनिवार्यमेवेति परमाणूनां नित्यत्वं साधयितुम् अशक्यम्. अत्रच अनुमानप्रयोगः एवं : परमाणवो अवयवारब्धाः मध्यमपरिमाणवद्द्रव्यारम्भकत्वात्. अनवस्थाभयेन परमाणौ विश्रान्ति स्वीकारेतु तदपेक्षया अनवस्थाभयाद् आरम्भवादत्यागएव श्रेयान्[२५].

५.परमाणूनां कारणत्वे स्वीकृतेऽपि स्पर्शवत्त्वेनैव तेषां करणत्वं स्वीकार्यम्. एतदेव न्याय-वैशेषिकसम्प्रदाये स्वीक्रियते. किन्तु मनसोऽपि परमाणुरूपतया स्पर्शवत्त्वेन च मनसोरपि संयोगेन कार्योत्पत्तिः स्यात्. मनसि संयोगो विद्यते. सच स्पर्शानतिरिक्तः[२६]. अतो विभागेन स्थूलादेव कारणाद् उत्पत्तिः इति वाल्लभमतमेव श्रेयः.

**अत्र समाधानम् :**

असत्कार्यवादे शशशृङ्गवत् कार्यस्य कार्योत्पादप्राक्क्षणे असत्त्वेऽपि

न तदनुत्पादः आशङ्क्यः. यज्जातीयं प्रति यज्जातीयस्य कारणता तज्जातीयस्य उत्पत्तिः तज्जातीयेन कारणेनैव भवति. घटजातीयं प्रति दण्डादिजातीयानां कारणता विद्यते अतः दण्डादिजातीयैः घटजातीयस्य उत्पत्तिः भवति. शशशृङ्गजातीयं प्रति कस्यचिदपि कारणत्वाप्रसिद्ध्या न तस्य उत्पत्तिः सम्भवति. कार्यस्य उत्पत्तौ कार्यस्य सत्त्वं नहि कुत्रचिदपि उपयुज्यते. प्रागभावादपि शशशृङ्गाद् भेदः समर्थयितुं शक्यः. प्रागभावसत्त्वेऽपि प्रमाणं सम्भवत्येव. ''इह इदानीं घटो भविष्यति'' ''इह इदानीं घटप्रागभावः'' इत्यादिरूपेण घटप्रागभावः प्रत्यक्षेणैव सिद्ध्यति. सामान्यलक्षणाप्रत्यसत्त्या सर्वेषां घटानां प्रत्यक्षतया प्रागभावप्रतियोगिभूतस्यापि घटस्य प्रत्यक्षविषयत्वेन प्रतियोगिज्ञानमपि निराबाधमेव[२७]. प्रागभावस्य प्रतियोगिवृत्तिघटत्वप्रकारकज्ञान-साध्यतया प्रतियोगिज्ञानस्य न अपेक्षा[२८].

वस्तुतस्तु प्रागभावसत्त्वे प्रमाणाभावः. नहि तत्र प्रत्यक्षं प्रमाणम् ''इह इदानीं घटो भविष्यति'' इत्यादिभिः प्रतीतिभिस्तु घटादौ वर्तमानकालोत्तरकालौत्पत्तिकत्वादिकमेव प्रत्याय्यते. नतु तादृश्या प्रतीत्या प्रागभावो विषयीक्रियते[२९]. ''इह इदानीं घटप्रागभावः'' इति प्रत्ययश्च न भवति लोकानाम्[३०]. अतएव रघुनाथेन प्रागभावस्य अतिरिक्तत्वं खण्डितम्. किन्तु, ''घटो ध्वस्तः'' इत्यादि प्रतीतिबलाद् ध्वंसस्तु अतिरिच्यतएव[३१]. उत्पन्नस्य पुनरुत्पत्तिप्रसङ्गः कार्यप्रतिबन्धकत्वस्वीकारेणापि वारयितुं शक्यः[३२].

न्यायनये देश-कालौ तुल्ययोगक्षेमौ[३३]. एकस्मिन्नपि काले देशाद्यवच्छेदकभेदेन घटादेः भावाभाववत् एकस्मिन्नपि देशे कालाद्यवच्छेदकभे-देन भावाभावौ सम्भवतः. यथा इदानीं भूतलाद्यवच्छेदेन घटाभावसत्त्वेऽपि महानसाद्यवच्छेदेन घटसत्त्वे नास्ति किञ्चिद् बाधकम् तथैव कपाले स्वकीयोत्पत्तिप्राक्क्षणे घटस्य असत्त्वेऽपि तदुत्तरक्षणावच्छेदेन घटसत्त्वे बाधकाभावः. शशशृङ्गादीनान्तु अलीकतया नहि घटस्य अनुत्पन्नस्यापि शशशृङ्गेण साम्यम्. अतो शशशृङ्गवद् घटादीनाम् उत्पत्तिः न स्याद् इति कथनं निर्युक्तिकम्.

उत्पत्तिरपि प्रथमक्षणसम्बन्धात्मिका निर्वक्तुं शक्यते. पूर्वं सम्बन्धप्रतियोगिसत्तायाः अभावेऽपि घटाद्युत्पत्तिक्षणे सम्बन्धप्रतियोगिनो घटादेः सत्त्वात् क्षणसम्बन्धः सुवचः. ''परमाणवो अवयवारब्धाः मध्यमपरिमाणवद्द्रव्यारम्भकत्वात्'' इति अनुमानस्य अप्रयोजकत्वं व्यभिचारशङ्कानिवर्तकतर्कशून्यत्वात्. यदि अत्र व्यभिचारशङ्का भवेत् ''अस्तु मध्यमपरिमाणवद्द्रव्यारम्भकत्वं मास्तु च अवयवारब्धत्वम्'' तर्हि न एतस्याः शङ्कायाः निवर्तकः कश्चित् तर्कः सम्भवति.

वस्तुतस्तु परमाणुसत्तायामेव प्रमाणं नास्ति. त्रसरेणुसावयवत्वसाधकानुमानानाम् अप्रयोजकत्वात्. अतएव दीधितिकाराणां त्रुटावेव विश्रामः इति मतम् ततएव क्रमशो द्रव्यारम्भः सम्भवति[३४]. परमाणूनां कारणत्वसम्भवे मनसि संयोगसत्त्वेऽपि न हि मनसा द्रव्यारम्भः, संयोगस्य स्पर्शातिरिक्तत्वात्. न्यायनये स्पर्शो विशेषगुणः संयोगश्च सामान्यगुणः. अतएव उक्तं प्रशस्तपादभाष्ये **''अस्पर्शत्वाद् द्रव्यानारम्भकत्वम्''**[३५] इति. स्पर्शस्तु त्वगिन्द्रियमात्रवेद्यः. संयोगस्तु चक्षुषापि गृह्यते.

न्यायसम्मतं व्यापारलक्षणं खण्डयन्तः प्रस्थानरत्नाकरकृतः समवाये लक्षणागमनं दोषतया प्रदर्शयन्ति. नहि न्यायनये समवायस्य व्यापारत्वं स्वीक्रियते, इन्द्रियार्थसन्निकर्षप्रविष्टः समवायस्तु रीत्यन्तरेण व्यापारः इति उच्यते. कारणगतासाधारणविचारे नैव न्यायानुसारिलक्षणं खण्ड्यते, केवलं तत्र आग्रहाभावएव प्रदर्श्यते. नैयायिकैरपि सावयवत्वाद् जगतः कार्यद्रव्यत्वेन न भगवद्रूपत्वं सम्भवति. कार्योत्पत्तिविनाशौ अनुपगच्छतां कार्याविर्भावतिरोभावौ दुर्निरूपौ इत्यदि आक्षिप्यते. तच्च वाल्लभैः समाधीयते. लेखविस्तरभिया न अत्र तासाम् अत्र प्रदर्शनं क्रियते युक्तीनाम्.

**अत्र इयं समाधिः :**

कारणलक्षणे न्याय-वाल्लभमतयोः समानः पन्थाः. कारणलक्षणेऽपि द्वयोः केवलं दृष्टिभेदः. वस्तुतः कारणत्वम् आविर्भावशक्त्याधारत्वम् उत्पादकशक्त्या-

धारत्वं वा. तस्यैव ग्राहकं भवति अनन्यथासिद्धनियतपूर्ववर्तिजातीयत्वादिकम्. उपादानकारणन्तु समवायिनएव नामान्तरम्. असमवायिकारणस्यतु सत्कार्यवादाभ्युपगमेन अस्वीकारः, आरम्भवादाभ्युपगमेन च स्वीकारः. अनयैव दृष्ट्या व्यापारलक्षणमपि भिद्यते. असाधारणलक्षणभेदेऽपि एतदेव कारणम्.

**सन्दर्भाः :**

१. प्रस्थानरत्नाकरप्रामाणपरिच्छेदः करणकारणसामान्यस्वरूपनिरूपकः आद्यः तरङ्गः.

२. अनुमानचिन्तामणौ शक्तिवादः पृ. २०४३, २०४७. कारिकावली १६ कारिका.

३. कारिकावल्याम् १६-२२ कारिकाः, न्यायसिद्धान्तमुक्तावली च.

४. "असाधारणत्वञ्च कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणताशलित्वम्-". तर्कसङ्ग्रहे न्यायबोधिनी, करणलक्षणव्याख्या.

५. प्रस्थानरत्नाकरः पृ. ३८.

६. तदेव

७. तदेव पृ. ३८-३९.

८. तदेव पृ. ३९.

९. पुष्टिमार्गसिद्धान्तवाङ्मालायाम् आविर्भावतिरोभाववादे पृ. १८५-१८७.

१०. "कार्यं प्रागभावप्रतियोगि". तर्कसङ्ग्रहे कार्यलक्षणम्.

११. "शक्तिरपि न पदार्थान्तरम्, प्रमाणाभावत्. अर्थापत्तिः तत्र मानम् इति चेत्, न, अन्यथैव उपपत्तेः". न्यायलीलावत्याम् पृ. २०२३.

१२. तदेव.

१४. "कः तर्हि 'शक्ति'पदस्य अर्थः? कारणत्वम्". तदेव पृ. २०४३.

१५. वादवारिधौ गदाधरकृते काणतावादे पृ. २०७.

१६. "कारणत्वञ्च पदार्थान्तरम्. तच्च कार्यभेदाद् अवच्छेदकभेदाच्च भिद्यते. कारणत्वत्वेन अखण्डोपाधिना अनुगतञ्च तत्तत्कारणपदशक्यतावच्छेदकम्. ग्राहकञ्च तस्य क्वचिद् अन्वय-व्यतिरेकसहकृतं प्रत्यक्षं क्वचिद् अनुमानं क्वचिद् आगमिकम्". पदार्थतत्त्वनिरूपणे पृ. ७१-७४.

१७. "तस्मात् कारणत्वं पदार्थान्तरमेव. . . . इति दीधितिकृद् उक्तं युक्तम् आलोचयामः". वादवारिधौ कारणतावादे पृ. २०८.

१८. तदेव पृ. २१८.

१९. पुष्टिमार्गसिद्धान्तवाङ्मालायाम् सृष्टिभेदवादे पृ. ८८.

२०. तदेव पृ. ८८.

२१. तदेव पृ. ८९.

२२. तदेव पृ. ९१.

२३. पुष्टिमार्गसिद्धान्तवाङ्मालायाम् आविर्भावतिरोभाववादे पृ. १८८.

२४. तदेव पृ. १८९.

२५. पुष्टिमार्गसिद्धान्तवाङ्मालायाम् सृष्टिभेदवादे पृ. ८५.

२६. तदेव पृ. ८६.

२७. ''सामान्यलक्षणेन अतीतानागतानां समेषां वस्तूनां प्रत्यक्षः सम्भवति'' सति न्यायनयः.

२८. ''प्रागभावप्रत्ययोऽपि च प्रतियोगिवृत्तिघटत्वप्रकारकज्ञानसाध्यो न प्रतियोगिज्ञानम् पेक्षते''. कशिकाननन्दीसहित जागदीशीसामान्यलक्षणाप्रकरणे पृ. १८७.

२९. तदेव पृ. २०३-२०४.

३०. ''इह इदानीं घटप्रागभावः इति च प्रत्ययो न लोकानाम्''. तदेव पृ.२१९.

३१. ''अथैवं जातो घट इत्यादिवद् उत्पन्नो घटध्वंसः इत्यादिविलक्षणप्रतीतिबलेन नाशो अतिरिच्यतां नतु प्रागभावः. तदेव पृ. २१९-२२०.

३२. उत्पन्नस्य पुनरुत्पादप्रसङ्गश्च लाघवात् कार्यादेः प्रतिबन्धकत्वनापि निरसनीयः''. तदेव पृ. २२८-२३४.

३३. ''देशे वृत्तौ कालस्येव, काले वृत्तौ देशस्यापि अवच्छेदकत्वानुभवात्'' इति जगदीशः. दीपिकायुते जागदीशीव्यधिकरणे पृ. ७७.

३४. ''परमाणुद्व्यणुकयोश्च मानाभावः, त्रुटावेव विश्रामात्''. पदार्थतत्त्वनिरूपणे, पृ.४०.

३५. प्रशस्तपादभाष्ये मनोनिरूपणम्.

# वैशेषिकाभिमतः कारणवादः

प्रो. चन्द्रशेखर शुक्ल

कारणवादो भारतीयदर्शनेषु पाश्चात्यदर्शनेषु च विशिष्टेषु वादेषु प्रसिद्धतमो विद्यते. यदि भारतीयदर्शनेषु दार्शनिकविचारस्य सिद्धान्तस्य वा आधारभूतस्तम्भो अयम् इति उच्यते तदा नास्ति अतिशयोक्तिः. प्रमाणविचारे, तल्लक्षणनिरूपणे 'प्रमाण'शब्दनिर्वचनावसरे वा 'करण'शब्दविचारः तदङ्गभूतत्त्वेन कारणविचारः प्रामुख्यं प्राप्नोति. 'करण'शब्दविचारः 'कारण'शब्दविचारं विना नैव सम्भवति. 'कारण'शब्दविचारएव कारणवादं समुत्पादयति.

भारतीयदर्शनेष्वपि कारणविषयक-सिद्धान्तप्रतिपादने यथा वैशेषिकदर्शनं महत्त्वं बिभर्ति न तथा किमपि दर्शनान्तरम्. किम्बहुना वैशेषिकदर्शनादेव सूत्रं गृहीत्वा अन्येषु दर्शनेषु कारणवादः समृद्धिं प्राप्तवान्. वैशेषिकदर्शनस्य कारणवादो न्यायदर्शने यथावत् स्थानं लब्ध्वा न्यायदर्शनस्य परिष्कारशैल्या सुदृढो जातः इत्यत्र नास्ति सन्देहः.

अस्मिन् पत्रे वैशेषिकदर्शने

कारणस्य किं लक्षणम् ?

कश्च विभागः ?

कुत्र अन्यैः दार्शनिकैः सह विरोधः ?

कानि च दूषणानि अस्मिन् सिद्धान्ते ?

के च परिहाराः ?

—एतत् सर्वं क्रमशो विचारयामः.

**कारणलक्षणम् :**

वैशिषकसूत्रकारेण महर्षिणा कणादेन कारणस्य लक्षणं ''**कारणाभावात् कार्याभावः**'' (वै.सू.१।२।१) तथा ''**नतु कार्याभावात् कारणाभावः**'' (तत्रैव.१।२।२) इति सूत्रद्वयेन सूचितम्. एतेन अवगम्यते यद् यदभावप्रयुक्तः कार्याभावः तद्वत्त्वं कारणत्वम्. तथाच यद्वैकल्यप्रयुक्ता कार्यानुत्पत्तिः तत् कारणम् इति अर्थो लभ्यते. यथा दण्डादिवैकल्ये घटानुत्पत्तिः इति दण्डादीनां घटकारणत्वं निर्णीयते. अत्रैव द्वितीयसूत्रेण कारणस्य कार्यपूर्ववर्तित्वं सूचितं भवति. यदि एवं न स्यात् तदा कार्याभावप्रयुक्तः कारणाभावः स्यात्. तथा न विद्यते, कार्याभावे (कार्यनाशे) सत्त्वेऽपि कारणस्य दण्डादेः सत्त्वात्. अतो ''**यद्व्यतिरेकप्रयुक्तं कार्याभाववत्त्वं तत् कारणम्**'' इति सूत्रलक्षणम्. तथाच सूत्रे व्यतिरेकघटितं लक्षणमेव प्रतिपादितम्. ''यत्सत्त्वे यत्सत्त्वम्'' इति अन्वयस्तु न कारणलक्षणघटको, निष्प्रयोजनत्वात्. व्यतिरेकप्रतिपादने अन्वयस्य स्वतएव बोधात्. नच अन्वयस्यैव कारणलक्षणघटकत्वम्, अन्यथासिद्धस्यापि कारणत्वापत्तेः. अतः कारणस्य सूत्रोक्तं लक्षणन्तु ''**कार्यव्यतिरेकप्रयोजक-व्यतिरेकप्रतियोगित्वम्**'' इति निष्पन्नं भवति. अस्मिन् लक्षणे दोषोद्भावनद्वारा न्यूनताम् आकलय्य ''**कार्यनियतपूर्ववृत्तिकारणम्**'' (तर्कसं.) ''**अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्तित्वं कारणत्वम्**'' (न्या.सि.मु., तर्कसं.दीपि.) ''**अनन्यथासिद्ध-नियतपूर्ववृत्तिजातीयत्वं कारणत्वम्**'' (वैशे.उपस्का.) इत्यादीनि कारणलक्षणानि वैशिषिकाचार्यैः नैयायिकैः च प्रतिपादितानि सन्ति. तथापि सूक्ष्मविचारे सति इदं सिद्धं भवति यत् सूत्रलक्षणमपि निर्दुष्टमेव अस्ति. अतएव उपस्कारकाराः ''**सहकारिवैकल्यप्रयुक्त-कार्याभाववत्त्वं कारणलक्षणं, लोकवेदसाधारणत्वात् प्रशस्ततरम्**'' इति आहुः.

**अनन्यथासिद्धत्वघटितलक्षणविचारः :**

''**अनन्यथासिद्धत्वे सति नियतपूर्ववर्तित्वं कारणत्वम्**'' इति कारणलक्षणं प्राचीनन्यायग्रन्थेषु समुपलभ्यते. यथा तर्कभाषायां ''**यस्य कार्यात् पूर्वभावो नियतो अनन्यथासिद्धः च तत् कारणम्**'' . विश्वनाथपञ्चाननेनापि इदमेव

लक्षणं भाषापरिच्छेदे गृहीतम् "**अन्यथासिद्धिशून्यस्य नियता पूर्ववर्तिता कारणत्वं भवेद्**" इति. अन्नम्भट्टेन तर्कसङ्ग्रहे "**कार्यनियतपूर्ववृत्तिकारणम्**" इत्येव उक्तम्. किन्तु 'अन्यथासिद्धे' दोषं दृष्ट्वा दीपिकायाम् "**अनन्यथासिद्धत्वे सति**" इति विशेषणाद् इति उक्तम्. तर्कसङ्ग्रहलक्षणव्याख्यानावसरे पदकृत्यकृता 'पूर्ववृत्तिः' इत्यस्य "**पूर्वक्षणवृत्तिः यस्य तत् तथा**" इति अर्थः कृतः. दिनकरीकारेण पूर्ववृत्तित्वस्य विवेचनं नैव कृतम्. रामरुद्रीकृतापि तद्विवेचनस्य आवश्यक्ता नैव चिन्तिता. पदकृत्यकारस्तु 'पूर्ववृत्तिः' इत्यस्य पूर्वक्षणवृत्तिः इति आशयं प्रकटीकरोति. तत् सार्थकमेव विद्यते. अन्यथा 'नियतत्व'स्य व्यापकत्वार्थकतया नियतपूर्ववृत्तित्वस्य कार्याधिकरणवृत्त्यभावाप्रतियोगित्वम् इत्यर्थकतया दण्डादौ घटकारणत्वानुपपत्तिः स्याद्, घटाधिकरणे चक्रादौ घटोत्पत्त्युत्तरकालावच्छेदेन दण्डाभावसत्त्वात्. अतः 'पूर्ववृत्तित्वम्' इत्यस्य पूर्वक्षणवृत्तित्वम् इति अर्थो ग्राह्यः. तथाच "**कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तिः यो अभावः तदप्रतियोगित्वं नियतपूर्वक्षणवृत्तित्वं**" विवक्षितं भवति. एवञ्च घटाधिकरणे घटाव्यवहितप्राक्क्षणावच्छेदेन दण्डाभावस्य असत्त्वात् न दण्डे घटकारणत्वानुपपत्तिः कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वरूपस्य नियतत्वस्य विवक्षणे 'पूर्ववृत्ति-त्व'निवेशो व्यर्थः इति न आशङ्कनीयं, कार्याधिकरणनिष्ठाभावे कार्याव्यवहितप्रा-क्क्षणावच्छिन्न-वृत्तिकत्वनिवेशलाभार्थमेव तत् पदम्.

कारणलक्षणे अन्यथासिद्धानां दण्डत्वादीनां वारणार्थम् "**अनन्यथासिद्धत्वे सति**" इति विशेषणस्य आवश्यकत्वाद् 'नियत'पदं व्यर्थमेव इति पदकृत्यकाराः.

दिनकरीकारास्तु "**अन्यत्र क्लृप्तनियतपूर्ववर्तिनः कार्यसम्भवे तत्सहभूतम् अन्यथासिद्धम्**" इति लक्षणादरेण घटत्वावच्छिन्ने तद् रासभस्य अनन्यथासिद्धत्वात् तद्वारणाय 'नियत'पदसार्थक्यं स्वीचक्रुः. किन्तु "**अन्यत्र क्लृप्त...**" इत्यादिलक्षणं यदि अन्यथासिद्धस्य स्वीक्रियते तदा दण्डत्वादेरपि अन्यथासिद्धत्वं न स्यात् अतो अन्यथासिद्धस्य दीपिकाकारोक्तं लक्षणं न सङ्गच्छते. अतएव मुक्तावलीकृता "**अवश्यक्लृप्तनियतपूर्ववर्तिनः**

**कार्यसम्भवे तद्भिन्नम् अन्यथासिद्धम्**'' इति लक्षणं प्रतिपादितम्. एवं स्थिते रासभस्य अन्यथासिद्धत्वात्, 'अनन्यथासिद्धत्व'विशेषणेनैव रासभादिवारणसम्भ-वाद् 'नियत'पदम् व्यर्थमेव इति पदकृत्यकाराणां मतमेव साधु.

रामरुद्रीकारास्तु '' 'अवश्यक्लृप्तनियतपूर्ववर्तिभिः' इत्यस्य लघुनियतपू-र्ववर्तितावच्छेदकावच्छिन्नैः इति अर्थविवक्षणात्, लाघवस्य शरीरोपस्थितिसम्ब-न्धभेदात् नानारूपतया अन्यथासिद्धत्वम् एकम् अनुगतं वक्तुम् अशक्यत्वात्, तत्कार्यनियतपूर्ववृत्तित्वे सति तत्कार्यकारणत्वेन अव्यवह्रियमाणाः ये तद्भिन्नत्वमेव अनन्यथासिद्धत्वं वाच्यम्'' इति आहुः.

रामरुद्रीकाराणां लक्षणं पूर्वलक्षणापेक्षया समीचीनं प्रतिभाति. यतोहि अवश्यक्लृप्तदण्डादिभिः घटरूपकार्यसम्भवे दण्डरूपम् अन्यथासिद्धं तथैव कपालादिभिः घटसम्भवे कपालसंयोगस्य अन्यथासिद्धत्वापत्तेः. अतो रामरुद्रीकाराणाम् अन्यथासिद्धत्वमेव लक्षणं सुष्ठु प्रतिभाति. तल्लक्षणे तु न कपालसंयोगे अतिव्याप्तिः स्यात्. यत्र प्रामाणिकानां कारणत्वव्यवहारः तद्भिन्नत्वस्य कपालसंयोगे असत्त्वात्.

**प्रस्थानरत्नाकरकाराणाम् आक्षेपः :**

प्रस्थानरत्नाकरकारैः कारणनिरूपणावसरे ''**अनन्यथासिद्ध...**'' इत्यादि-लक्षणे दोषद्वयम् उपात्तम्. आद्यो यथा नियतर्पूववर्तित्वस्य कार्यसापेक्षत्वात् कार्यञ्च अनन्यथासिद्धनियतपश्चाद्भावित्वरूपत्वात् तत्र कारणसापेक्षत्वं स्याद् इति अन्योन्याश्रयो दोषः. द्वितीयो यथा कारणत्वस्य अन्यथासिद्धत्वलक्षणघटक-त्वात् कारणत्वलक्षणे कारणत्वज्ञानापेक्षया आत्माश्रयदोषः. अतः कारणत्वस्य एतद् लक्षणं परित्यज्य स्वकीयकारणत्वलक्षणम् ''**आविर्भावकशक्त्याधारत्वम्**'' इति उक्तम्. आविर्भावस्य व्यवहारयोग्यत्वम् इति तत्रैव ग्रन्थे प्रतिपादितम्. तथाच ''**यत्र यदाविर्भाविका शक्तिः तत् तस्य कारणम्, यस्यच यतो व्यवहारयोग्यत्वं तत् तस्य कार्यम्**'' इति उक्तम्. (प्र.र.पृ.३८). विचार्यमाणे सति एतल्लक्षणेऽपि अन्योन्याश्रयदोषः सम्भवत्येव. तथाहि व्यवहारयोग्यत्वरूपा-

विर्भावसापेक्षत्वम् आविर्भावकशक्त्याधारत्वरूपस्य कारणत्वस्य, तादृशशक्त्या-धारनिष्ठ-शक्तिनिरूपितत्वसापेक्षत्वं व्यवहारयोग्यत्वरूपस्य कार्यत्वस्य इति अन्योयन्याश्रयो दोषः.

वस्तुतस्तु उक्तदोषद्वयं नैयायिकैः स्वीकृते "**अनन्यथासिद्ध ...**" इत्यादिकारणलक्षणे भवितुम् अर्हति. किन्तु विचार्यमाणे उक्तदोषप्रसक्तिः नास्ति. कार्यत्वं न अनन्यथासिद्धनियतपश्चाद्भावित्वं किन्तु प्रागभावप्रतियोगि-त्वम्. प्रागभावस्तु न घटकारणत्वेन प्रतीतिविषयो अपितु "इह घटो भविष्यति" इति प्रतीतिविषयभूतः. अतः कार्यज्ञानं न कारणसापेक्षमिति न अन्योन्याश्रयः. आत्माश्रयस्तु अनन्यथासिद्धनियतपूर्ववर्तित्वरूपकारणलक्षणादेः भवति. अतः तत्परित्यज्य कार्यानुकृदन्वयव्यतिरेकित्वं कारणत्वं वाच्यम्. तच्च कार्यव्यतिरेक-प्रयोजकव्यतिरेक-प्रतियोगित्वम्. कार्यत्वन्तु पदार्थान्तरमेव इति न अन्योन्याश्रयः नापि आत्माश्रयः इति.

एतल्लक्षणं दण्डादिकारणेष्वेव सङ्गच्छते नतु दण्डत्वादावपि. यतोहि स्वाश्रयाश्रयत्वसम्बन्धत्वेन दण्डत्वं घटायोग्यदण्डाधिकरणे देशे वर्तते. तत्र घटो न भवति. अस्मिन् लक्षणे उदयनाचार्याणां "**पूर्वभावो हि हेतुत्वं मीयते येन केनचिद्, व्यापकस्यापि नित्यस्य धर्मिधीरन्यथा नहि**" इत्युक्तिं समादृत्य तर्कभाषाकारैः प्रस्थानरत्नाकरकारैश्च अरुचिः प्रदर्शिता. तेषां मते नित्यविभूनाम् आकाशादीनां कालतो देशतः च व्यतिरेकासम्भवाद् आकाशादौ कार्यव्यतिरेक-प्रयोजकव्यतिरेक-प्रतियोगित्वाभावाद् अव्याप्त्यापत्तेः. परन्तु सूक्ष्मेक्षिकया पर्यालोचने न इयम् अव्याप्तिः सम्भवति. तथाहि कार्यकारणभावस्य कार्यतावच्छेदक-कारणतावच्छेदक-सम्बन्धसापेक्षत्वाद् विभुपदार्थस्यापि व्यतिरे-कः कारणतावच्छेदकसम्बन्धेनैव विवक्षणीयो नतु देशतः कालतो वा. तथाच समवायसम्बन्धेन शब्दं प्रति तादात्म्यसम्बन्धेन आकाशः कारणम् इति कार्यकारणभावस्य सत्त्वात्. यत्र तादात्म्यसम्बन्धेन आकाशः तत्र समवायेन शब्दः एवं यत्र न तादात्म्यसम्बन्धेन आकाशः तत्र न समवायेन शब्दः इति अन्वयव्यतिरेकसम्भवात् कार्यानुकृतान्वयव्यतिरेकित्वं कारणलक्षणं

समीचीनमेव प्रतिभाति.

**कारणत्रैविध्यम् :**

वैशेषिकदर्शने कारणस्य त्रैविध्यं सूत्रे यथा ''**कारणमिति द्रव्ये कार्यसमवायात्**'' (वै.सू.अ.१०।२।१). असमवायिकारणन्तु ''**कारणे समवायात् कर्माणि**'' (तत्रैव १०।२।३) इति सूत्रेण सूचितम्. निमित्तकारणप्रतिपादकं सूत्रं ''**संयुक्तसमवायाद् अग्नेः वैशेषिकम्**'' (तत्रैव.१०।२।७) इति अस्ति. एतेषां सूत्राणां त्रिविधकारणप्रतिपादकत्वं सूत्राणां व्याख्यया अवगम्यते. तत्र तादृशाणि सूत्राण्यपि सन्ति यत्र पदेनैव समवायिकारणादीनि प्रतिपादितानि सन्ति. यथा ''**क्रियागुणवत् समवायिकारणम् इति द्रव्यलक्षणम्**'' (तत्रैव. १।१।१५) इति सूत्रे 'समवायिकारण' पदम्. एवं ''**कारणत्वम् असमवायिनो गुणाः**'' (तत्रैव.५।२।२४) इति सूत्रं स्पष्टमेव 'असमवायिकारण'पदं दर्शयति. यद्यपि 'निमित्त'पदेन निमित्तकारणत्वं न उक्तं तथापि ''**नित्येषु अभावाद् अनित्येषु भावात् कारणे कालाख्य...**'' इति सूत्रे कालस्य कार्यमात्रं प्रति कारणत्वप्रतिपादनात् सिद्धं भवति यद् अस्ति समवायिकारणभिन्नम् असमवायिकारणभिन्नं च कारणम्. तदेव निमित्तकारणम्.

**वैशेषिकोक्तकारणविभागस्य औचित्यम् :**

इदं सर्वेषाम् अवगतं यद् वैशेषिकैः तदनुयायिभिः नैयायिकैः तथा मीमांसकैः च अभ्युपगतः त्रिविधप्रकारकः कारणविभागः. अन्येच दार्शनिकाः कारणस्य विभागद्वयमेव अङ्गीकुर्वन्ति, उपादानकारणं निमित्तकारणं च. उपादानकारणं ये स्वीकुर्वन्ति ते वैशेषिकाभिमतं समवायं न अङ्गीकुर्वन्ति. तत्स्थाने तादात्म्यमेव अङ्गीकुर्वन्ति. यथा प्रस्थानरत्नाकरे ''**समवायश्च तादात्म्यस्यैव नामान्तरम्**'' इति उक्तत्वात्. वैशेषिकास्तु समवायः तादात्म्यातिरिक्तः सम्बन्धः इति संसाधयन्ति. यदि समवायएव तादात्म्यं स्यात् तदा ''इह घटे रूपम्'' ''इह गवि गोत्वम्'' इतिवत् ''इह रूपे घटः'' ''इह गोत्वे गौः'' इत्यादि प्रत्ययः स्यात्. प्रतियोग्यनुयोगिनोः ऐक्यात्. तयोः भेदे न तत्र तादात्म्यं सम्भवति. अतो गुणगुणिनोः न

तादात्म्यं किन्तु समवायएव अङ्गीकार्यः.

यदि उच्यते तादात्म्यं नाम भेदसहिष्णुः अभेदः. अतो गुणिगुणिनोः तादात्म्यसम्बन्धस्वीकारेऽपि प्रतियोग्यनुयोगिनोः भेदात् ''इह घटे रूपम्'' इति प्रतीतिः नतु ''इह रूपे घटः'' इति. तदपि न, भेदाभेदयोः विरोधात् तयोः सामानाधिकरण्यानुपपत्तेः. यदि उच्यते मृत्तिकाघटयोः अभेदादेव मृण्मयो घटः इति प्रतीतिः तदा ''मृण्मयो शराव''इति प्रतीतेरपि सत्त्वात् ''घटः शरावः'' इत्यपि प्रतीतिः स्यात्. अतो न कार्यकारणयोः तादात्म्यम्. नच भेदसहिष्णुः अभेदो वा किन्तु गुणगुणिनोः अयुतसिद्धिसत्वात् तयोः समवायएव सम्बन्धः स्वीकार्यः. नच समवायस्वीकारे अनवस्थादोषः. समवायस्य स्वरूपसम्बन्धेन सत्त्वस्वीकारात्. स्वरूपसम्बन्धस्य पुनः सम्बन्धो न अस्तीति न अनवस्था. तथाच समवायस्वीकारात् समवायिकारणं स्वीकृतं वैशेषिकैः.

अत्र इयं जिज्ञासा जायते : किम् असमवायिकारणम् आवश्यकम्? तत्र उच्यते यदि असमवायिकारणं न स्वीक्रियते तदा समवायिकारणं निमित्तकारणम् इति कारणद्वयमेव स्यात्. निमित्तकारणनाशे द्रव्यनाशो न भवति. अतो द्रव्यनाशं प्रति समवायिकारणनाशः कारणम् इत्येव कार्यकारणभावः स्वीकर्तव्यः तदा द्व्यणुकनाशे व्यभिचारः स्यात् परमाणोः नित्यत्वात्. अतो असमवायिकारणं स्वीकृत्य द्रव्यनाशं प्रति असमवायिकारणनाशः कारणम् इति कार्यकारणभावस्वीकारे न व्यभिचारदोषः सम्भवेत्. तस्माद् द्रव्यनाशजनक-नाशप्रतियोगित्वेन असमवायिकारणसिद्धिः भवति. यदि असमवायिकारणं निमित्तकारणम् इति कारणद्वयमेव अङ्गीक्रियते समवायिकारणं मास्तु इति उच्यते तदा घटरूपं प्रति कपालरूपम् असमवायिकारणं स्वीक्रियते. एवञ्च सति स्वसमवायिसमवेतत्वसम्बन्धेन कपालरूपं यथा घटे विद्यते तथैव कपालगन्धेऽपि अस्त्येवेति तत्र घटोत्पत्त्यापत्तेः. अतो घटरूपसमवायिकारणम् अवश्यं स्वीकर्तव्यम्. समवायिकारणं घटरूपएव अस्तीति तत्रैव कपालरूपस्यापि स्वसमवायिसमवेतत्वसत्त्वाद् घटरूपम् उत्पद्यते.

समवायिकारणम् असमवायिकारणम् इति कारणद्वयमेव अस्तु, किमर्थं

निमित्तकारणं स्वीक्रियते ? इति चेत्, उच्यते : यदि निमित्तकारणं न अङ्गीक्रियते तदा उत्पन्नस्य घटस्य पुनः उत्पत्त्यापत्तेः, उभयोः कारणयोः सत्त्वात्. अतः प्रागभावोऽपि एकं कारणं स्वीकर्तव्यः. तस्य समवायसम्बन्धाभावात् न समवायिकारणम् असमवायिकारणं वा स सम्भवति, अतः तदतिरिक्तमेव कारणं वाच्यम्. तच्च निमित्तम् इति उच्यते. तथाच सिद्धं कारणस्य त्रैविध्यम् इति.

**करणत्वविचारः :**

कारणविषयकविचारः करणत्वविचारं विना पूर्णो न भवति, कारणविशेषस्यैव करणत्वात्. न्यायवैशेषिकनये कारणं प्रथमतो द्विविधं भवति : साधारणम् असाधारणं च. न्यायमते साधारणकारणं नवविधं भवति १. ईश्वरः २. ईश्वरज्ञानम् ३. ईश्वरेच्छा ४. अदृष्टम् ५. प्रागभावः ६. दिक् ७. कालः ८. ईश्वरकृतिः ९. प्रतिबन्धकाभावः च. वैशेषिकमते ईश्वरानङ्गीकारात् पञ्चएव साधारणकारणानि. असाधारणकारणन्तु कार्यविशेषएव कारणं भवति. तत्र करणस्य लक्षणं ''**साधकतमं करणम्**'' इति पाणिनीयोक्तं न्यायवैशेषिकानामपि अभिप्रेतम्. परन्तु 'साधकतम'विषये विवादो दृश्यते. साधकतमम् अतिशयितं प्रकृष्टं कारणम् इति उच्यते. तथापि कश्च अतिशयः ? इत्यत्र अस्ति विवादः. प्राचीनास्तु फलायोगव्यवच्छिन्नं कारणं करणम् इति प्रतिपादयन्ति, तत्रैव नवीनाः ''**व्यापारवद् असाधारणं कारणं करणम्**'' इति आहुः. जयन्तभट्टास्तु 'न्यायमञ्जरी'ग्रन्थे कारणसामग्रीएव करणम् इति प्रतिपादयन्ति.

''**व्यापारवदसाधारणं कारणं करणम्**'' इति पक्षे घटरूपकार्ये तेऽपि 'करण'पदवाच्याः भवन्ति ये न साक्षाद् घटरूपकार्ये करणानि, किन्तु व्यापारद्वारा कारणानि यथा दण्डो भ्रमणरूपव्यापारद्वारा यथावा कपालः कपालसंयोगरूपव्यापारद्वारा. तस्माद् अस्मिन् पक्षे बहूनि कारणानि 'करण'पदवाच्यानि भवितुम् अर्हन्ति. तत् न सूत्राभिप्रायकम्. एवमेव ''**कारणसामग्री करणम्**'' इति पक्षेऽपि कारणसमुदायस्य करणत्वं भवति.

एकस्य कारणस्य तु केवलं कारणत्वम्. अत्रापि सूत्राभिप्रायविरोधो अस्त्येव, एकस्यैव कारणस्य करणत्वप्रतिपादनात् तत्र. तस्मात् ''**फलायोगव्यवच्छिन्नं कारणं करणम्**'' इति पक्षएव समीचीनः इति वक्तुं शक्यते.

**असत्कार्यवादः :**

वैशेषिकाभिमतो असत्कार्यवादो नैयायिकानामपि अभिप्रेतः. अयमेव असत्कार्यवादः 'आरम्भवादः' इति उच्यते. असत्कार्यवादपक्षे कार्यम् उत्पत्तेः पूर्वं कारणे न विद्यते. घटः उत्पत्तेः पूर्वं न मृत्तिकायां, न वा पटः तन्तौ.

१.असत्कार्यवादः वैशेषिकसूत्रएव सूचितः. यथा ''**क्रियागुण-व्यपदेशाभावात् प्रागसत्**'' (वै.स.अ.१।१।१). अयम् आशयो : यदि उत्पत्तेः पूर्वं घटादिकार्यं मृत्तिकायां विद्यमानं तदा क्रियावत्त्वेन गुणवत्त्वेन व्यपदेशः स्यात्. यथा उत्पत्त्यनन्तरं ''घटः तिष्ठति'', ''घटो नीलरूपवान्'' इत्यादिप्रयोगाः भवन्ति. तथैव उत्पत्तेः पूर्वं तथैव व्यवहारः स्यात्, न भवति, अतो घटः उत्पत्तेः पूर्वं नास्त्येव.

२.एवं यदि कार्यम् उत्पत्तेः पूर्वं सत् स्यात् तदा ''मृत्तिका घटः''इति व्यवहारविषयः स्यात्. ''तन्तुरेव पटः'' इति नाम्ना गृहीतः स्यात्. न तथा भवति, अतः कार्यम् असत्.

३.एवम् अर्थक्रियाकारित्वभेदादपि कार्यम् उत्पत्तेः पूर्वम् असद्, अन्यथा जलाहरणं मृत्तिकयापि भवेत्.

४.उत्पत्तेः पूर्वम् ''इदानीं घटः'' इति न व्यवह्रियेत, ''इदानीं कपालः'' इति तु व्यवह्रियते अतः उत्पत्तेः पूर्वं कार्यम् असत्.

५.यदि उत्पत्तेः पूर्वं कार्यं कारणे विद्यमानं सत् स्यात् तदा यादृशसङ्ख्याकं कारणं तादृशसङ्ख्याकमेव कार्यं स्यात्. तथाच कपालद्वये सति घटद्वयं स्याद्, अनेके तन्तवो भवन्ति,

अतो अनेके पटाः स्युः. तस्मात् कार्यं कारणाद् भिन्नम्, उत्पत्तेः पूर्वम् असद् इति वैशेषिकमतम्.

६.एवम् आविर्भावो अवस्थान्तरं वा कार्यम्? इति पक्षे असत्कार्यवादएव स्वीकृतो भवति. यतः आविर्भावस्य नित्यत्वे कारणावस्थायामपि तत् प्रत्यक्षं स्यात्. यदि आविर्भावो अनित्यः तदा असत्कार्यवादः इति.

# चर्चा

## वैशेषिकाणां कार्यकारणविचार:

**डॉ. चन्द्रशेखर शुक्ल**

**पा. ना. द्विवेदी :** सत्कार्यवादस्य खण्डनावसरे उक्तं यत् कार्यात् उत्पत्ते: प्राक् कार्यम् असत्. असतएव सत: कार्यस्य उत्पत्ति: क्रियते. उत्पत्ते: पूर्वं यदि कार्यं तिरोभूतं स्यात् तर्हि का अनुपपत्ति: नैयायिकानाम् ?

**च. शे. शुक्ल :** तिरोभूतं कथम् उच्यते ? अस्ति चेत् तदा कथं तिरोभूतम् ?

**पा. ना. द्विवेदी :** तिरोभूतं भविष्यति. सतोऽपि वस्तुन: तिरोभावो दृश्यते.

**च. शे. शुक्ल :** नहि. उत्पत्ते: पूर्वम् इति न वक्तुं शक्यते.

**पा. ना. द्विवेदी :** श्रूयताम्. विद्यमानस्यापि कार्यस्य तिरोभावं वक्तुं शक्यते.

**च. शे. शुक्ल :** विद्यमानस्य तिरोभाव: न भवति, नाशो भवति.

**पा. ना. द्विवेदी :** नाशो न स्यात्. तिरोभावएव स्यात् तर्हि का क्षति: ?

**च. शे. शुक्ल :** कार्यम् अस्ति चेत् न तिरोभवति.

**बी.आर्.शुक्ल :** तिरोभाव: पदार्थ: क: ?

**वि. प्र. मिश्र :** तिरोभावो अग्रहणम्.

**पा. ना. द्विवेदी :** व्यवहारायोग्यत्वं तिरोभाव:. तर्हि का आपत्ति: ?

**च. शे. शुक्ल :** तस्माद् असत्.

**पा. ना. द्विवेदी :** तस्मात् तिरोभूतम्. सिद्धान्ते कश्चिद् दोष: आयाति न वा इति मम प्रश्न:.

**च. शे. शुक्ल :** भवद्भि: उच्यते यत् व्यवहारयोग्यत्वाभावात् तिरोभाव:. व्यवहारयोग्यत्वं घटे वर्तते तदैव स्यात्. तस्माद् घटस्य व्यवहारयोग्यत्वाभावो नाम घटस्य नाश:.

# संगोष्ठ्युत्तरलेखनम्

## गोस्वामी श्याम मनोहरः

वैशेषिकैः साकं प्रस्थानरत्नाकरकारैः कृताद् गम्भीराद् विचारविनिमयाद् विना अन्यः कोऽपि विचारविनिमयः एतयोः दर्शनयोः इतः पूर्वं नासीदिति श्रीमच्चन्द्रशेखरमहोदयाः अस्यां कार्यकारणभावविचारगोष्ठ्यां समाहूताः. समागताश्च एते नूनं स्वकीयम् आलेखपत्रं सर्वथैव खलु अभिनन्दनीयरीत्या प्रास्ताविषुरिति पठनैकवेद्यमिदं नान्यदीयस्तुतिसापेक्षम्. तास्यामेतस्यां विचारविनिमयशृंखलायां मदीयाअपि काश्चन कटिकाः योजयितुं अयमुद्यमो मदीयः.

तत्र तावद् "**कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तिः यो अत्यन्ताभावः तदप्रतियोगित्वं नियतपूर्वक्षणवृत्तित्वं**" यत् कारणलक्षणघटकतया विवक्षितं तत्र कार्याधिकरणतदभावाधिकरणयोः सम्बन्धयोः अनुल्लेखो विवक्षितबुद्धिपूर्वको न चेद् तदा समवायेन घटरूपकार्याव्यवहितप्राक्क्षणावच्छेदेन तादात्म्येन कार्याधिकरणरूपकपालद्वयएव वृत्तिमान् यः संयोगेन कपालद्वयसंयोगात्यन्ताभावः तत्प्रतियोगित्वं घटरूपकार्यासमवायिनि कपालद्वयसंयोगरूपे कारणे आपद्यते. तथैव घटरूपकार्याव्यवहितप्राक्क्षणावच्छेदेन संयोगेन कार्याधिकरणरूपभूमौ समवायेन वृत्तिमान् यः कपालद्वयात्यन्ताभावः तत्प्रतियोगित्वं घटरूपकार्यसमवायिनि कपालद्वयेऽपि वर्तते. तथैव घटरूपकार्याव्यवहितप्राक्क्षणावच्छेदेन समवायेन घटरूपकार्याधिकरणरूपकपालद्वये समवायतादात्म्यसंयोगसम्बन्धैः वृत्तिमान् यो घटप्रागभावात्यन्ताभावः तत्प्रतियोगित्वं घटप्रागभावरूपनिमित्तकारणेऽपि वर्तते. अथ कार्यकारणसम्बन्धोल्लेखेतु संयोगस्य अव्याप्यवृत्तिमत्त्वेनापि कार्याधिकरणवृत्त्यभावाप्रतियोगित्वं कारणेषु न सम्भवेत्. घटप्रागभावीयाच प्रतियोगिता हि घटत्वाच्छेदकावच्छिन्ना तत्तद्घटनिष्ठा वा? सकलघटानाम् एकस्मात् कपालद्वयसंयोगाद् उत्पत्त्यसम्भवात् नाद्या; नापि द्वितीया, उत्पत्स्यमानस्य घटस्य असत्त्वेनैव निरूपकाभावप्रयुक्तनिरूप्याभावेनैव तन्निरूपितप्रतियोगितायाअपि निरूपणासम्भवात् च.

अन्योन्याश्रयदोषः तत्र प्रकारान्तरेण उद्भावितो वर्तते तस्य परिहारो भवद्भिः न कृतः इत्येव. यो अन्योन्याश्रयदोषपरिहारः भवद्भिः सूचितः तत्र प्रसक्तिः नास्ति तादृग्दोषस्य, यच्च उच्यते तद् अङ्गीक्रियते च परन्तु यो दोषः तत्र समुद्भावितो वर्तते सो अन्यएव वर्तते. कारणलक्षणज्ञानं प्रति कार्यलक्षणज्ञानम् आवश्यकं भवति, कार्यलक्षणज्ञानन्तु कारणलक्षणज्ञानानन्तरं भवति एवम् अन्योन्याश्रयः.

**एस्.आर्.भट्ट :** लक्षणके अन्तर्गत जो दोष बतलाया गया है वह यह है कि ज्ञान और वास्तविकता इन दोनोंपर निर्भरताको हम पृथक् नहीं कर रहे हैं इसलिये. यदि हम ज्ञानगत निर्भरता किसपर है? कारण निर्भर करता है कार्यपर अतः कारणकी पूर्ववर्तिता बतलानी पड़ेगी तब ही आप कारण-कार्य सम्बन्धको समझ सकेंगे. यदि पूर्ववर्तिता नहीं बतलायेंगे तो कारण-कार्यसम्बन्धकी स्थापना कैसे करेंगे?

**च. शे. शुक्ल :** प्रोफसर् भट्टजी! पाश्चात्यदार्शनिकोंके विचारकी शैली अत्यन्त भिन्न है. आप पाश्चात्यदृष्टिको जो यहां ला रहे हैं वह यहां एकदम अप्रासङ्गिक हो रही है. यहांपर तो केवल लक्षणोंका विचार हो रहा है.

**एस्.आर्. भट्ट :** यह पाश्चात्यदृष्टि नहीं है. वही मैं कह रहा हुं कि लक्षणके विचारमें ही आपको भेद करना है. वस्तुकी दृष्टिसे, ज्ञानकी दृष्टिसे और तीसरा भाषाकी दृष्टिसे.

**बी.आर्.शुक्ल :** यहां लक्षणके गुणदोषका विचार है. कारण कार्यपर निर्भर है या कार्य कारणपर निर्भर है और अन्योन्याश्रय है यह समस्या ही यहां नहीं है.

**च. श. शुक्ल :** भट्टजी! आप यह समझते हैं कि लक्षणमें अव्याप्ति अतिव्याप्ति और असम्भव यह तीन ही दोष होते हैं. पर ऐसा नहीं है. आत्माश्रय, अन्योन्याश्रय और चक्रक यह भी लक्षणके ही दोष हैं, वस्तुके नहीं.

# शुद्धाद्वैतसम्मतं हि शब्दाद्वैतकारणम्

डॉ. रामकिशोर त्रिपाठी

आविर्भूय तिरोहितं जगदिदं यत्र त्रिसर्गोज्झितं।
यद्रूपं हि विकारशून्यमखिलं शुद्धं परं व्यापकम्॥
शब्दाद्वैतनये तदर्थसहिता वाक् स्पन्दशून्या परा।
शुद्धाद्वैतमतावराधनपरैः कृष्णेति संराध्यते॥

सुखावाप्तिः हि प्राणिमात्रस्य लक्ष्यं यदर्थं मानवानां विहिताविहितकर्मसु प्रवृत्तिः. 'धर्मार्थकाममोक्षा'ख्यचतुर्विधपुरुषार्थेषु मोक्षएव आत्यन्तिकसुखरूपत्वात् परमपुरुषार्थः. तदन्ये परमपुरुषार्थस्य साधनमात्रम्. तत्प्रतिपादकानि हि दर्शनाशास्त्राणि तथ्यातथ्यविवेकपुरःसरं स्वस्वसिद्धान्तदिशा मोक्षस्वरूपं निरूपयन्ति.

मोक्षस्य परमात्मरूपतया तदतिरिक्तजीवजगतो व्यावृत्तिः अपेक्ष्यते. अतो जगदुत्पत्तिः लयः च सर्वैरपि दार्शनिकैः स्वशास्त्रदिशा आख्यायेते. तत्र न्यायवैशेषिकयोः नये उत्पत्तिः आरम्भः. कारणैः कार्यम् आरभ्यते. कार्यञ्च आरभ्यमाणं समवायेन कारणाश्रितम्. समवायेन कार्यं प्रति तादात्म्येन द्रव्यं कारणं भवति. अतो द्रव्यमेव कारणम्. मीमांसकाः उत्पत्ति-प्रलयौ न स्वीकुर्वन्ति. तन्नये पदार्थानां परिणामो अदृष्टवशादेव भवति. सच परिणामएव उत्पत्तिः. अदृष्टः तत्र कारणम्. साङ्ख्यानां मते उत्पत्तिः अभिव्यक्तिः तिरोभावः च लयः. एतेषां सत्कार्यवादिनां नये उत्पत्तेः प्राक् कारणात्मना कार्यस्य सद्भावाद् न प्रागभावो नवा प्रध्वंसः. कार्यात्मना अवस्थान्तरापत्तिः परिणामः, सएव उत्पत्तिः. येन क्रमेण उत्पद्यते तथैव व्युत्क्रमेण लीयते.

प्रधानमेव जगदुपादानं तदेव कर्तृ न ईश्वरो न पुरुषो न कालादयः. योगशास्त्रमपि सृष्टिविषये साङ्ख्यप्रक्रियामेव अनुसरति. नास्तिकेषु महावैनाशिकास्तु उत्पत्तेः प्राक् पश्चात् च कार्यम् असत्. किंवा कार्यमेव नास्तीति मन्यन्ते. कार्यं हि शून्ये अधिष्ठाने संवृत्तिबलाद् अवभासते. प्रतीत्यसमुत्पादः उत्पत्तिः. प्रत्ययः कारणसमुदायः. प्रतीत्य कारणं प्राप्य समुत्पद्यते यः स प्रतीत्यसमुत्पादः. स्वाभावादएव क्षणोत्पादविनाशशालिनां भावानां कारणं प्रतीत्योत्पत्तिः द्वितीयक्षणे च विनाशो जायते. विज्ञानवादिनां मते विज्ञानएव अनादिवासनाप्रवाहरूपेण विषयाः अवतिष्ठन्ते न बहिः. बाह्याः भावाः भ्रान्तिविषयाः. सौत्रान्त्रिकाः बाह्यम् अनुमेयम् अनुमन्यन्ते. वैभाषिकाश्च बाह्यार्थस्य यथायथं प्रत्यक्षत्वानुमेयत्ववादिनः सन्ति. समेषां मते प्रतीत्यसमुत्पादएव. समेऽपि असत्कार्यवादिनः. चार्वाकाणां मते चतुर्विधभूतानां विलक्षणपरिणामएव उत्पत्तिः.

एवं विविधदर्शनेषु सृष्टिः उत्पत्तिः प्रतिपादिता. 'उत्पत्तेः' पर्यायत्वेन 'परिणामः' 'आविर्भावः' 'असतः सद्रूपतापत्तिः' 'प्रतीत्यसमुत्पादः' 'अतत्त्वतो अन्यथाप्रथारूपो विवर्तः' च आख्यायते. इत्थं प्रत्यक्षतः सृष्टिस्वरूपं प्रतिपाद्य अनुमानेनापि जगतः कार्यत्वं साधयन् आह ''ब्रह्मातिरिक्तं सर्वं जगत् कार्यम् अनित्यं, सावयवत्वात् विकारित्वाद् ध्वंसप्रतियोगित्वात् च घटादिवत्''.

**वेदान्तसिद्धान्तदिशा कारणत्वविचारः :**

वेदान्तिनो ''**यतो वा इमानि भूतानि जायन्ते. येन जातानि जीवन्ति. यत्प्रयन्त्यभिसंविशन्ति**'' (तैत्ति.उप.३।१) ''**तस्माद्वा एतस्मादाकाशः सम्भूतः. आकाशाद्वायुः. वायोरग्निः. अग्नेरापः. अद्भ्यः पृथिवी. पृथिव्या औषधयः**'' (तैत्ति.उप.२।१) इत्यादिश्रुतिमानेन जगतो जन्मस्थितिलयस्थानं ब्रह्म इति स्वीकुर्वन्ति.

**शुद्धाद्वैतमताभिमतकारणत्वविचारः**

शुद्धाद्वैतिनो ''**आविर्भावकशक्त्याधारकत्वं कारणत्वं**'' स्वीकुर्वन्ति.

आविर्भावतिरोभावात्मिके द्वे शक्ती परमेष्ठिनः. परमात्मनि तिरोहितम् इदं जगद् आविर्भावात्मिकया शक्त्या व्यवहारयोग्यत्वम् आपद्यते. एवञ्च व्यवहारे यत्र यदाविर्भाविका शक्तिः तत् तस्य कारणम्. यस्यच यतो व्यवहारयोग्यत्वं तत् तस्य कार्यम्. आविर्भूतञ्च जगद् ब्रह्मरूपमेव न अन्यत् किमपि. भवदिच्छया कारणरूपायां मृदि विद्यमानो भगवद्रूपएव घटः आविर्भवति न अन्यः कश्चित्. तथाहि—

> ''**यस्मिन् भगवद्रूपे रूपान्तरस्य आविर्भावः तत् कारणं, यथा मृद्, यस्य रूपस्य प्राकट्यं तत् कार्यं, यथा घटः**'' (प्रमे.रत्ना.).
>
> ''**मृदादि भगवद्रूपं घटाद्याकारसंयुतम्**'' (त.दी.नि.२।१४२)
>
> ''**सर्वं खलु इदं ब्रह्म**'' (छान्दो.उप.३।१४।१).
>
> श्रीमद्भागवते च
>
> ''**मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपीन्द्रियैः, अहमेव न मत्तोऽन्याद् इति बुद्ध्यध्वमञ्जसा**'' (भाग.पुरा.११।१३।२४).

अतएव कार्यरूपात्मना कारणरूपात्मना वा सर्वत्र ब्रह्मणः स्वरूपस्वीकारात् तस्य शुद्धत्वम्.

''**सर्वाकारं सर्वशक्तिः सर्वधर्माश्रयो हि तत्,**
**सच्चिदानन्दरूपञ्च तस्माद् आविरभूद् जगत्**''.

**व्याकरणशास्त्रे सृष्टेः कारणत्वविचारः :**

व्याकरणं हि शब्दसाधुत्वप्रतिपादकं शास्त्रम्. सन्ति च नैका भाषाः, तासां शब्दार्थप्रतिपादकानि सन्ति नैकानि व्याकरणानि. परञ्च दर्शनरूपत्वं पाणिनिव्याकरणस्यैव अभिमतम्. तच्च शब्दस्य ब्रह्मस्वरूपप्रतिपादनात्. अत्र नये शब्दतत्त्वम् अर्थरूपव्यवहारस्य कारणम्. शब्दब्रह्मणएव अर्थरूपेण जगतः प्रक्रिया व्यवहारो विवर्तते = अतत्वतोऽन्यथापृथा भासते. उक्तञ्च वाक्यपदीये ''**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्, विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः**'' (वाक्प.का.१।१). तत्र शब्दतत्त्वस्य 'स्फोटा'ख्यब्रह्मणः साक्षात्कारो व्याकरणेन, विशुद्धचैतन्यस्यतु ''**तत्त्वमस्या**'' दिमहावाक्येन आगमेन साक्षात्कारः

इति. ''**तन्त्वौपनिषदं पुरुषं पृच्छामि**'' (बृह.३।९।२६) इति श्रुतेः. अतएव उक्तम् अत्रापि ''**तद् व्याकरणमागम्य परं ब्रह्माधिगच्छति**'' . यद्यपि सर्वबीजानां मूलप्रकृतिः इयं वाक् तथापि अर्थरूपेण विवर्तते नतु परिणमते. अतएव शब्दतत्त्वं ब्रह्म. तद्यथा परब्रह्मणः सर्वम् इदं जगत् प्रयोजनभूतम् अतात्त्विकं सत् प्रतीयते तथैव जगतो व्यवहारः शब्दतत्त्वाख्यब्रह्मणो अभिधेयघटादिरूपेण अन्यथारूपाश्रितः परिभासते.

ब्रह्मणो हि शास्त्रे दशाद्वयी प्रसिद्धा. एका विद्यया अप्रविभागदशा अपरा च अविद्यया प्रविभागदशा. विद्याशक्तिमद्रूपं सर्वविकल्पातीतमपि ब्रह्म अविद्यात्मिकया शक्त्या प्रविभक्तं कार्यरूपसमाश्रितं विविधविकल्पनागोच-रत्वम् आपद्यते. प्रविभागदशायाम् एकस्यैव ब्रह्मणो धर्मधर्म्यादिरूपेण विकल्पः. ''घटो अभूद्, भवति, भविष्यति'' इत्यादिकालभेदेन भावविकल्पः. तच्च प्रविभागाभावदशायां सर्वविकल्पातीतमेव. घटपटादिप्रत्ययो हि शब्दस्य कार्यम्. यदर्थबोधक-तत्तद्वाचक-पदरूपेण वाक्यरूपेण वा शब्दतत्त्वस्य विवृत्तिः सच विवर्तो मूर्ति-क्रियारूपाभ्यां द्विविधः. ''गेहे घटः'' ''क्षेत्रे गौः'' इत्यादिना देशभेदावग्रहरूपेण यद् गो-घटादिरूपाणाम् अर्थानाम् अवस्थानं स मूर्तिरूपो विवर्तः. यत्तु तेषामेव ''जायते नश्यति वा घटः'' इत्यादिना उत्पाद-विनाशक्रियोपहितरूपेण अवस्थानं स क्रियारूपो विवर्तः. स द्विविधोऽपि विवर्तो अविद्याशक्तिरूपतया प्रवृत्तिरूपतया च अवस्थाभेदेन भिन्नः इति चातुर्विध्यं विवर्तस्य. तथाहि यदा मूर्तिक्रियारूपयोः विवर्तयोः दर्शनं नास्ति तदा अविद्याशक्तिरूपो विवर्तः. यदातु तयोः दर्शनम् तदा प्रवृत्तिरूपो विवर्तः. एतौ द्वावपि विवर्तौ विद्यारूपे आत्मनि आविद्यकत्वाद् भेदाभेदाभ्याम् अनिर्वाच्यौ. एतद्धि अविद्यायाः अविद्यात्वम्.

ब्रह्माद्वैतवादे हि सद्रूपे चिदात्मनि अध्यस्ता अविद्या वियदादिरूपेण परिणमतेइति मायापरिणतिः इदं जगत्. विवर्तश्च मायोपहितस्यैव ब्रह्मणः, नच निष्कल-निष्क्रिय-निरवयवस्य शुद्धस्य. शब्दाद्वैतवादवक्तुः अर्थबोधने-च्छारूपा वासना बोद्धा ''ममोच्चारितशब्दस्य मदिष्टार्थबोधने कुर्यात्''इति

शब्दार्थयोः भेदात्मिका अविद्यैव व्यवहारात्मकजगतः उत्पत्तौ कारणम्. साच 'स्फोटा'ख्यशब्दब्रह्मणि अध्यस्ता अर्थाकारेण परिणमते. शब्दतत्त्वन्तु स्वस्वरूपाद् अप्रच्युतं तद्रूपमेव अवतिष्ठते. न तत्र काचिद् विकृतिः आयाति. साच वासना तार्किकाणां नये ईश्वरेच्छा, वैयाकरणानां मते वाच्यवाचकभावात्मिका शक्तिः इति व्यवह्रियते. अर्थाभिन्नरूपं वर्ण-पद-वाक्यादिक्रमशून्यमपि शब्दतत्त्वं वासनाभिभूतं सत् वर्ण-पद-वाक्यक्रमरूपापन्नं भिन्नमिव भासते. सच क्रमो ध्वन्यात्मना लौकिको अनित्यः च. वर्ण-पद-वाक्यादिध्वनिभिः अभिव्यक्तः तत्तद्रूपरूषितः स्फोटरूपोनित्यः. अतः पूर्वम् अक्रमरूपोऽपि विवक्षाधीनतया वर्ण-पद-वाक्यादिक्रमम् आभजते. तथाच उक्तम्

**''आत्मा बुद्ध्या समेत्यार्थान् मनो युङ्क्ते विवक्षया,**
**मनः कायाग्निमाहन्ति स प्रेरयति मारुतं,**
**मारुतस्तूरसि चरन् मन्दं जनयति स्वरम्''**

(पाणि.शि.६).

विवक्षाभिभूतं तत्तद्वर्ण-पद-वाक्यादिध्वनिभिः अभिरुषितं 'स्फोटा'ख्य-शब्दतत्त्वं तत्तदर्थप्रत्यायकं नतु परावाग्रूपं शब्दब्रह्म, तत्र शब्दार्थयोः विभागादर्शनात्. तामेव अर्थेन अप्रविभक्ततत्त्वां परावाचम् अर्थवासनावासित-हृदया नानारूपापन्नां परिपश्यन्ति. **''सूक्ष्मामर्थेन अप्रविभक्ततत्त्वाम् एकां वाचम् अभिष्यन्तमानाम् उतान्ये विदुः अन्यामिव च एनां नानारूपाम् आत्मनि सन्निविष्टाम्''** (सोपज्ञवृत्तिः). अर्थबुभुत्सया वर्ण-पद-वाक्याभिधानेन भिन्नमपि शब्दतत्वं वर्ण-पद-वाक्योपसंहतरूपं तत्तदर्थोपसंहृत-रूपत्वेन परावाग्रूपम् अभिन्नमेव अस्ति. अर्थो द्विधो बुद्धिस्थो बाह्यश्च. तत्र बुद्धिस्थो नित्यः, बाह्यस्तु कार्यरूपो अनित्यः. बौद्धपदार्थेन सह 'स्फोटा'ख्यशब्दस्य नित्यसम्बन्धः. अतः शब्दो नित्यः तदर्थो नित्यः तयोः सम्बन्धोऽपि नित्यः. उक्तञ्च महाभाष्ये **''सिद्धे शब्दार्थसम्बन्धे''** (वार्ति.) इति सूत्रम्. तत्र 'सिद्ध'शब्दो नित्यार्थाभिधायकः. अविद्याकल्पितभिदा वर्ण-पद-वाक्यादिभेदेन बाह्यार्थप्रतिपादकत्वेन च भिन्नमपि शब्दतत्त्वं न वास्तविकभेदम् आश्रयते. परावाग्रूपतया तस्य

अभेदप्रतिपादनात्.

अयं विवर्तवादिनां शब्दाद्वैतवादः. अथ इदानीं शुद्धाद्वैतसिद्धान्तसम्मत्या शब्दाद्वैतवादस्य कारणत्वं विचार्यते.

**शब्दार्थयोः विशुद्धाद्वैतस्वरूपम् :**

शब्दब्रह्मविशुद्धरूपमखिलं लीलाप्रपञ्चान्वितं।
बिभ्रद् विश्वमनन्वितं जगदिदं ब्रह्मात्मनाऽऽयासितम्॥
आविर्भूय बुभुत्सया परिणतं शक्त्यात्मना ख्यायते।
तस्याप्यर्थतिरोहितं विधिवशाद् नान्यद् विरूपायते॥

शब्दस्य अयम् अर्थात्मको व्यवहारो न विवर्तः, आविर्भावरूपो असौ. विशुद्धब्रह्मणइव शक्तिद्वयं शब्दस्य, एका आविर्भाविका अपरा व्यवहारयोग्यता. शब्दम् अर्थात्मना या व्यवहारयोग्यं सम्पादयति सा शक्तिः आविर्भाविका. व्यवहारार्थबोधकः शब्दः यया शक्त्या अर्थबोधने क्षमते सा शक्तिः व्यवहारयोग्यता. कारणञ्च आविर्भावकशक्त्याधारत्वम्. शब्दएव शक्तिद्वयान्वितः कारणात्मना कार्यात्मना वा परिचीयते. उक्तञ्च प्रस्थानरत्नाकरे **''व्यवहारे यत्र यदाविर्भाविका शक्तिः तत् तस्य कारणं, यस्यच यतो व्यवहारयोग्यत्वं तत् तस्य कार्यम्''** निष्कल-निष्क्रियस्पन्दशून्या सर्वविकल्पातीता बिन्दुरूपिणी परावाग् वर्ण-पद-वाक्यादिक्रमहीना अर्थबुभुत्सया नाभिदेशस्थवायुना प्रेरिता ऊर्ध्वम् आक्रान्ता शिरसि आहत्य पराक्रान्ता कण्ठताल्वाद्यभिघातेन ध्वनिरूपापन्ना वर्ण-पद-वाक्यादिरूपम् आपद्यते. वर्ण-पद-वाक्यादिध्वनिरूषिता सति अर्थबोधकस्फोटात्मना च लोकव्यवहारं व्यनक्ति. साच पूर्वम् अक्रमरूपापि पश्चाद् लोकव्यवहारहितेषणाभिभूता, वर्णात्मना पदात्मना वाक्यात्मना च आविर्भवति. तथाच आह **''अविभक्तो विभक्तेभ्यो जायतेऽर्थस्य वाचकः शब्दः तत्रार्थरूपात्मा सम्भेदम् उपगच्छति''** (स्वोपज्ञवृत्तौ वाक्य.प.). शुद्धाद्वैतब्रह्मवादे घटादिव्यक्तीनाम् आनन्त्येऽपि तेषां भगवदभिन्नतया नित्यत्वम्. आर्विर्भावात्मिकया शक्त्या अभिव्यक्तिमात्रं

द्रव्याणाम्. एकमेव ब्रह्म स्वकेलिप्रतिपन्नम् "**एकोऽहं बहुस्याम्**" इति भावनाभिभूतम् अनेकरूपासक्तं सत् लीलान्ते तिरोहितभेदात्मतनु एकमेव अवशिष्यते.

"**एकस्यैव अनेकधा भवनेन आविर्भवनेन तिरोभवने न च एकस्यैव सर्वत्र सत्त्वात् आनन्त्येऽपि अदोषात्**" (प्र.र.)
श्रीमद्भागवते
"**जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः**" (भाग.पुरा.६।१-५।१८),
"**लयेऽपि सकलाः सूक्ष्माः सूक्ष्मा जायन्तएव हि, ते मृद्येव प्रलीयन्त इत्यन्तेऽप्यस्य मृत्तिका, तथा ब्रह्मैवात्र पूर्वमन्ते ब्रह्मैव शिष्यते, मध्ये क्रीडार्थभेदार्थं नाना तेनेच्छयाकृतम्**" (वेदा.चिन्ता. ३।८,९).
सच विभागः काल्पनिको नतु वास्तविकः.

**शब्दशास्त्रीया अभिव्यक्तिस्वरूपम् :**

शुद्धाद्वैतब्रह्मवादवत् शब्दब्रह्मवादे प्रणवरूपेण अव्यक्तोऽपि शब्दो लोकव्यवहारोपयुक्तः तत्तदर्थबुभुत्सया तत्तद्रूपापन्नो ध्वनिरूषितो अर्थबोधकस्फोटात्मकत्वेन नानात्वं भजते. "**ॐकारो योऽव्यक्तः प्रभवः स्वराट् यत्तल्लिङ्गं भगवतो ब्रह्मणः परमेष्ठिनः**" (भाग.पुरा.१२।६।३९). परञ्च तत्तदर्थवाचकत्वेन नानाविधोऽपि स्वरूपतो अभिन्नएव, न वास्तविकं नानात्वं शब्दस्य. "**सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन् यदास्ते**" (तैत्ति.आर.३।१२।७). ब्रह्मवादे यथा कार्यरूपो अयं प्रपञ्चो न भगवतो भिन्नः. "**प्रपञ्चो भगवत्कार्यः तद्रूपः**" (त.दी.नि.१।२३) तद्वत् शब्दब्रह्मवादे अर्थः शब्दरूपएव. योऽर्थः स शब्दः यः शब्दः सोऽर्थः इति शब्दार्थयोः अभेदात्मकव्यवहारात्. शब्दस्य व्यवहारबोधकत्वेऽपि न बोध्यबोधकयोः कश्चिद् भेदो अवगम्यते. शब्दार्थयोः बोधकबोध्यभावत्वेऽपि अभेदेनैव प्रत्ययः. अतएव "**ओमित्येकाक्षरं ब्रह्म**" "**रामेति द्व्यक्षरं नाम मानभङ्गः पिनाकिनाः**" इत्यत्र शब्दार्थयोः अभेदेन प्रत्ययः. व्यक्तिपक्षे 'घट'इति शब्दः 'घट'इति अर्थः इत्यत्र

शब्दार्थयोः अभेदेन लौकिको व्यवहारः. जातिपक्षेतु कम्बुग्रीवादिमत्त्वजातयो घटत्वादिशब्दजातिज्ञाप्याः सन्ति. ''**यथार्थजातयः शब्दाकृतिनिबन्धनाः**'' ( वाक्प.कारि.१।१५ ). शुद्धाद्वैतनये ब्रह्म पूर्वं निराकारमेव सच्चिदानन्दात्मकं सर्वसर्गसमर्थः निमित्तान्तरम् अनपेक्ष्य अंशतो धर्मरूपेण तदनु क्रियारूपेण ततश्च प्रपञ्चरूपेण आत्मानं सृजति. तत्र कालः क्रियारूपः ''**योऽयं कालस्तस्य तेऽव्यवक्तबन्धो चेष्टाम् आहुः चेष्टते येन विश्वम्**'' ( भाग.पुरा.१०।३।२६ ) इच्छाविषये ''**तदैक्षत बहु स्याम्**'' ( छान्दो.उप.६।२-।३ ) क्रियाशक्तिश्च ''**तत् तेजोऽसृजत्**'' ( तत्रैव ६।२।३ ) इत्यादिना समर्थिता. मायाशक्तिश्च अत्र सदंशस्य क्रियारूपा चिदंशस्य च व्यामोहिका. उक्तञ्च भागवते ''**विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया विमोहिता विकत्थन्ते ममाहमिति दुर्धियम्**'' ( भाग.पुरा.२।५।१३ ) तत्तच्छक्तिपरिच्छिन्नं कार्योत्पत्तौ निमित्तमात्रं न ताभिः कञ्चिदपि भेदम् आश्रयते.

एवं शब्दब्रह्मणि कालादिशक्तीनां भेदाः आरोप्यन्ते. आरोपिताश्च ते भेदाः क्रियाभेदाय कारणानि भवन्ति. यद्यपि स्वस्वकारणाधीनोत्पत्तिः कार्याणां तथापि सर्वेषामपि उत्पत्तौ कालशक्तिः सहकारिकारणम्. नित्याच एका बोधात्मिका शक्तिः जायते, अस्ति वर्द्धते, विपरिणमते, अपक्षीयते, विनश्यति इत्यादि क्रमप्राप्तविकाराश्रितक्रियाभिः काल्पनिकभेदम् आश्रयते. तत्रापि शब्दतत्त्वं ध्रुवं निश्चलं कूटस्थमेव परितिष्ठति. ''**अध्याहितकलां यस्य कालशक्तिमुपाश्रिताः, जन्मादयो विकाराः षड् भावभेदस्य योनयः**'' ( वाक्प.कारि.१।३ ).

**प्रपञ्चाभिन्नं ब्रह्म :**

शुद्धब्रह्मवादे न प्रपञ्चो ब्रह्मभिन्नः, ''**सर्वस्य सर्वरूपत्वात्**'' ( प्रस्था.रत्ना. ) सर्वस्य सर्वत्र विद्यमानत्वात् च. ब्रह्मणः आविर्भूतानि वस्तूनि सर्वाण्यपि ब्रह्ममयानि.

''**स आत्मानं स्वयम् अकुरुत**'' ( तैत्ति.उप.२।७ )

''**स हैतावानास**'' ( बृह.उप.१।४।३ ).

‘‘**स वै सर्वमिदं जगत्**’’ ( महाना.उप.२३।१ )
‘‘**इदं सर्वं यदयमात्मा**’’ ( बृह.उप.४।५।७ )
‘‘**आत्मैवेदं सर्वम्**’’ ( छान्दो.उप.७।२५।२ )
‘‘**पुरुषएवेदं सर्वम्**’’ ( ऋक्संहि.१०।९०।२ )

—— इत्यादिश्रुतयः प्रपञ्चस्य ब्रह्मणो अभिन्नत्वे प्रमाणानि.

उपादानञ्च द्विविधं परिणाम्युपादानं विवर्तोपादानञ्च. तत्र आद्यं स्वसमानसत्ताक-कार्याकारेण आविर्भवति, परिमाणस्य उपादानसमसत्ताकत्वेन अन्यथात्वभावस्वीकारात्. सोऽपि द्विविधः अविकृतपरिणामरूपो विकृतपरिणाम-रूपः च. अविकृतपरिणामः सुवर्णस्य कटककुण्डलादिः, अविकृतपरिणामः च मृदो घटः अन्तःकरणस्य च मनोबुद्धी. ब्रह्मणो अविकृतपरिणामो अयं प्रपञ्चः. न उत्पन्ने प्रपञ्चे ब्रह्मणि काचिद् विकृतिः अवगम्यते, नच प्रपञ्चे किञ्चिद् वैकृत्यम् अनुभूयते. उक्तञ्च ‘‘**आत्मकृतेः परिणामात्**’’ ( बृ.सू.१।४।२६ ) इति सूत्रे. अतः प्रपञ्चो न मायिको नवा भगवद्भिन्नः किन्तु सत्यरूपत्वाद् आविर्भाव-तिरोभावशाली, ‘‘**नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः**’’ ( भग.गीता.२।१६ ) इति गीतावचनात्. ‘‘**पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते, पूर्णस्य पूर्णमादाय पूर्ण मेवावशिष्यते**’’ ( बृह.उप.१।१।१ ) इति श्रुतिरपि मानम्.

शब्दब्रह्मवादे शब्दो हि प्रत्यासन्ने लोकव्यवहारे व्यवहारबोधोपयोगिस्व-रूपम् आधत्ते. अर्थात्मको व्यवहारस्तु शब्दानुवेद्यतया तदभिन्नएव न अर्थः शब्दाद् व्यतिरिच्यते. शब्दस्यैव व्यावहारिको भोक्तृरूपेण भोगरूपेण भोक्तव्यरूपेण च अवस्थितिविशेषो अवगम्यते. तच्च व्यवहारोत्पत्तिकारणीभूतं शब्दतत्त्वं व्यवहारस्थितिकालेऽपि कार्याभिन्नमेव व्यवहारस्य शब्दरूपत्वात्. ‘‘**एकस्य सर्वबीजस्य यस्य चेयमनेकधा, भोक्तृभोक्तव्यरूपेण भोगरूपेण च स्थितिः**’’ ( वाक्प.१।४ ). अनादि हि शब्दतत्त्वं ध्वन्यात्मना बहिः स्फोटात्मना च अन्तःपरितिष्ठति. ‘‘**दिव्यो ह्यमूर्तः पुरूषः स बाह्याभ्यन्तरो**

ह्यजः'' (स्वोपज्ञवृत्तिः ब्रह्मकाण्डे). तथाच शब्दस्य द्विधा परिणतिः शब्दकार्यात्मना व्यवहारकार्यात्मना च. कण्ठताल्वाद्यभिघातजन्या ध्वनिरूपा शब्दात्मिका कार्यपरिणतिः. स च ध्वनिः आकाशगुणो विखरणाच्च 'वैखरी वाग्' इति कथ्यते. व्यवहारोपयोगिनी बोध्यात्मिका कार्यपरिणतिः. सर्वत्रापि शब्दतत्त्वं स्वकार्याभिन्नमेव अस्ति.

तत्र शब्दतत्त्वस्य ध्वनिरूपेण परिणामः शब्दरूपएव नहि ध्वन्यात्मकत्वेन शब्दः शब्दाद् व्यतिरिच्यते. एकस्याएव परावाचः पश्यन्ति-मध्यमा-वैखरीरूपेण काल्पनिको भेदः. वैखरी-मध्यमयोः प्राकृत-वैकृतभेदेन षोढा. वैखरीनादो न अर्थप्रत्यायकः. कण्ठताल्वाद्यभिघातजन्यत्वेन कार्यत्वाद् उच्चरितप्रातिध्वंसित्वात् च. वैखरीनादेन उत्साहितो मध्यमानादएव अर्थबोधकः. तत्रापि प्राकृतनादएव स्फोटाभिव्यञ्जक-मध्यमानादोत्साहे क्षमः. वैकृतनादस्तु द्रुत-मध्यम-विलम्बितवृत्तीनां नियमने उपयुज्यते. **''शब्दस्य ग्रहणे हेतुः प्राकृतो ध्वनिरिष्यते, स्थितिभेदे निमित्तत्वं वैकृतः प्रतिपाद्यते''** (वाक्प.कारि.१।७७). वर्ण-पद-वाक्यादिध्वनिरुषितोऽपि स्फोटात्मा न तद्भेदम् आश्रयते. तत्तद्ध्वनिरुषितत्वेन वर्णस्फोटः पदस्फोटो वाक्यस्फोटः इति औपाधिको भेदः. तत्रैव उक्तं **''ध्वनयः समुपोहन्ते स्फोटात्मा तैर्न भिद्यते''** व्यवहारात्मकार्यस्थितावपि अर्थात्मकव्यवहारस्य शब्दाभिन्नत्वेन प्रत्ययात् शब्दरूपत्वमेव. यथा एकस्य ब्रह्मणो मायोपहितत्वेन मायाकल्पितसत्वादिगुणानां न्यूनाधिक्यात् सृष्टि-पालन-संहारकर्तृत्वसमर्थतया ब्रह्म-विष्णु-शङ्करादिव्यवहारः. तथा च औपाधिकस्वरूपभेदात् सच्चिदानन्दात्मकः काल्पनिको भेदः तथैव शब्दतत्त्वस्य इति. उक्तञ्च प्रस्थानरत्नाकरे **''ब्रह्मणः सच्चिदानन्द इव शब्दब्रह्मणो वर्णपदवाक्यानि नामानि''** . यो हि शब्दार्थयोः काल्पनिको भेदः स वैखरीवाचि तदभिव्यङ्ग्य-स्फोटाभिधायिकायां मध्यमायां वाचि सर्वैरपि अवगम्यते. स्थूलपश्यन्त्यान्तु सविकल्पके निर्विकल्पके वा समाधौ योगिभिः अनुभूयते. सूक्ष्मपश्यन्त्यान्तु शब्दार्थयोः अक्रमेण तादात्म्यात् क्रमशून्यतया लयाद् भेदः. सूक्ष्मपश्यन्त्याः परावाग्रूपतया तत्र शब्दार्थयोः भेदशून्यत्वमेव. साच परावाग् **''अक्षराणाम् अकारोऽस्मि''** (भग.गीता. १०।-

३३) इति गीतावचनात् "**अकारो वै सर्वावाग्**" (माहाना.उप.) इति श्रुतिवचनाच्च 'अ'काररूपा "**ओमित्येकाक्षरं ब्रह्म**" (भग.गीता. ८।१३) इति स्मृतिवचनात् प्रणवरूपा वा कारणगतोपाध्याश्रयाद् वर्ण-पद-वाक्यरूपतां कार्यरूपोपाधिवशाच्च व्यवहाररूपताम् आपद्यते. उक्तञ्च नन्दिकेश्वरकृतकाशिकायाम् "**अकारो ब्रह्मरूपः स्यान् निर्गुणः सर्ववस्तुषु, चित्कलाभिः समाश्रित्य जगद्रूप उदीरितः**"

**शुद्धाद्वैतमतजीवस्वरूपाभिधानम् :**

चिदंशः कर्मभूग्जीवः अग्नेः स्फुल्लिङ्गवत् स्मृतः।
मायानिमित्तमाश्रित्य क्रीडार्थं स्वांशवेष्टितः॥
जीवभावत्वमापन्नं न ब्रह्म विकृतं क्वचित्॥
देवरक्षो नृणां योनिः लीलाभेदाय संश्रिता।

कर्मभोगासक्ताः चिदंशाः अग्नेः स्फुलिङ्गाइव जीवाः शुद्धब्रह्मणः आविर्भूताः तद्रूपाएव न भिन्नाः. यतो हि द्विविधं कार्यम् आविर्भवति जडात्मकं चिदात्मकञ्च. क्रियाशून्यम् आनन्दांशहीनं मृदश्मादि सर्वं जडात्मकं वस्तु. तच्च लीलाशक्त्याश्रितं चिद्रूपमेव कार्यं न कारणाद् व्यतिरिच्यत इति न्यायात्. प्रतिशरीरं भिन्नो हृदयस्थो विषयानन्दपरो जीवो अन्तःस्थितत्वात् साक्षी. शरीरभेदाद् देव-दानव-मनुष्यादियोनिम् आपद्यते. सच भेदः परमात्मनो लीलाकृतः काल्पनिको नतु वास्तविकः. "**जीवो ब्रह्मैव नापरः**" (बृह.उप.३।४।१७) "**तत्त्वमसि श्वेतकेतो**" (छान्दो.उप.६।८।७) इति श्रुतेः "**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव**" (भग.गीता.७।७) "**ममैवांशो जीवलोके जीवभूतः सनातनः**" (भग.गीता.१५।७) इति स्मृतेश्च. अव्यक्तो नित्यः कूटस्थश्च परमात्मा स्वलीलानिरतः तत्तत्कर्मप्रतिबद्धइव देवतिर्यग्योनिम् आधत्ते.

शब्दब्रह्मवादे तु अव्यक्तरूपायाः परावाचः पश्यन्ती-मध्यमादिरूपेण अभिव्यक्तिः जीवभावः. अर्थात्मकव्यवारश्च कार्यात्मकं जगत्. तच्च द्विविधम्

अन्तस्थं बौद्धं नित्यम्. बाह्यं प्रतीत्यर्हम् अनित्यम् इति. अक्षरस्य ब्रह्मरूपत्वे **"एतद्ध्येवाक्षरं ब्रह्म"** (कठोप.१।२।१६) इति श्रुतिः **"यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः"** (भग.गीता.८।१५) इति स्मृतिश्च मानम्. तस्मादेव अव्यक्ताद् 'ओमि'त्यक्षराद् आविर्भवति जगत्. तस्यैव वासुदेवरूपत्वं कृष्णरूपत्वं वा न अन्यत् कश्चिद् अक्षरात् परम्. शब्दस्यैव लीलाप्रसारितम् अर्थात्मकं जगत् प्रवर्तते. अक्षरादेव विस्फुलिङ्गभावेन जीवानाम् आविर्भावः. **"तदेतत् सत्यं तथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः. तथा क्षराद् विविधाः सोम्यभावाः प्रजायन्ते तत्र चैवापियन्ति"** (मुण्ड.उप.२।१।१). बृहदारण्यके गार्ग्या पृष्टो भगवान् याज्ञवल्क्यो अवोचत् **"आकाशे हि पृथिव्यादिभूतानि ओतप्रोतानि. आकाशं नु कस्मिन्नोतं प्रोतम्?"** इति प्रश्नम् उत्तरयन् आह **"एतद् वै तदक्षरं गार्गि"** (बृह.उप.३।८।८) तथा आशङ्क्यते 'अक्षर'पदेन कस्य बोधः? वर्णस्य परमात्मनो वा. **"अक्षराम्बरान्तधृतेः"** (ब्र.सू.१।३।९) इति सूत्रे अक्षरस्य वर्णरूपेणापि परमात्मत्वं संसाधितम्. तथा भाष्यम् **"अक्षरसमाम्नाय इत्यादौ 'अक्षर'शब्दस्य वर्णे प्रसिद्धत्वात् प्रसिद्ध्यतिक्रमस्य च अयुक्तत्वात्"**. अथच **"ॐ ङ्कारएवेदं सर्वम्"** (छान्दो.उप.२।२३।३) इत्यादिश्रुतिषु वर्णस्यापि उपास्यत्वेन सर्वात्मकत्वावधीरणात् वर्णएव अक्षरशब्दः. समाधिभाषायामपि **"स एष जीवो विवरप्रसूतिः प्राणेन घोषेण गुहां प्रविष्टो, मनोमयं सूक्ष्ममुपेत्य रूपं मात्रा स्वरो वर्ण इति"** (भाग.पुरा.११।१२।१७) **"शब्दब्रह्म सुदुर्बोधम्"** (तत्रैव.११।१२।३६). तच्च 'अक्षर'पदं श्रीकृष्णस्यैव बोधकम्. उक्तञ्च प्रमेयरत्नार्णवे **"निखिलप्रपञ्चकारणभूतस्वरूपम् अक्षरब्रह्मापि श्रीकृष्णस्यैव रूपान्तरम्"**. तस्यैव **"बहुस्यां प्रजायेय"** (तैत्ति.उप.२।६) इति श्रुत्युक्तेच्छया सकलकारणं कार्यात्मना रूपान्तरं सद् आविर्भवति. तस्मिन्नेव रूपे भगवद्धर्मात्मकसत्त्वेन आनन्दांशः तिरोहितः. अक्षरब्रह्मणो अधिकारिभेदेन द्विधा स्फुरणम्. तत्र भगवद्भक्तिभास्यम् अक्षरब्रह्मणः प्रथमं स्वरूपम्. **"अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं यं प्राप्य न निवर्तन्ते तद्धाम परमं मम"** (भग.गीता.८।११) **"दर्शयामास लोकं स्वं गोपानां तमसः परम्, सत्यं ज्ञानमनन्तं यद् ब्रह्मज्योतिः सनातनम्"** (भाग.पुरा.१०।२५।१४-

१५). ब्रह्मज्ञानभास्यम् अक्षरब्रह्मणो अपरं स्वरूपम्. ज्ञानिनां कृते तद् अक्षरब्रह्म सच्चिदानन्दत्व-देशकालपरिच्छिन्नत्व-स्वयंप्रकाशत्व-गुणातीतत्वादिरूपेण भासते. न क्षीयते क्षरति वा अक्षरम् इति स्वस्वभावेन प्रकाश्यमाने अक्षरब्रह्मणि समेषां धर्माणां तिरोभावः. तद् अक्षरब्रह्म आविर्भाविकया शक्त्या कार्यात्मना अनेकरूपापलमपि(?) तिरोधानात्मिकया शक्त्या तिरोहिते निखिले प्रपञ्चे निर्विकल्पमेव परितिष्ठति. वेदोक्तकर्तृत्वादिधर्माणां तिरोभावएव भवति नतु अभावः. तथाच उक्तम् आचार्यपादेन "**अभावास्तु अस्मन्मते तिरोभावातिरिक्ताः न भवन्ति**" (भाग.सुबो.२।९।३२) शब्दब्रह्मणो अभिव्यक्तस्वरूपम् आविर्भावात्मिकया शक्त्या उद्भूतं कार्यात्मकं जगत्. अव्यक्तस्वरूपं हि तिरोहितसर्वशक्तिकं सर्वव्यवहारातीतम् इति. तच्च स्वरूपतः सर्वविकल्पातीतमपि कार्यात्मना अभिव्यक्तं सद् वियदादिरूपेण प्रतीयते. तिरोहिते हि कार्ये स्वस्वरूपेण अवतिष्ठते. "**ये त्वक्षरमनिर्देश्यम् अव्यक्तं पर्युपासते, सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम्**" (भग.गीता.१२-।३) 'ओम्'इति अक्षरब्रह्मणएव उद्भूतम् इदं जगत्. तच्च अक्षरं कालातीतं निष्क्रियं निर्गुणं स्वतःप्रकाशस्वरूपम् अन्यप्रकाशावेद्यं चिन्मात्रम् कारणात्मना अव्यक्तं कार्यात्मना अभिव्यज्यते. "**अव्यक्ताद् अक्षरात् सर्वा जायते भूतसंसृतिः तस्मिन् विलोपतां याति कर्मभोगोपनिर्वृतौ**". तस्यैव अक्षरब्रह्मणो वैखरी-मध्यमा-पश्यन्ती-परादिरूपेण जाग्रत्-स्वप्न-सुषुप्ति-तुरीयावस्था विशेषस्य परिणामः. तत्र वैखरी वाग् जाग्रद्रूपा तस्यां हि बाह्यं जगद् अर्थात्मना भेदेन अवभासते. स्वप्नावस्थारूपा मध्यमा वाक् तत्र बोद्धार्थो अभेदेन अवतिष्ठते. सविकल्पकसमाधौ योगिभिः अभिगम्या पश्यन्ती वाक् सुषुप्तिरूपा. नहि तत्र शब्दार्थयोः भेदः कथञ्चिदपि प्रतीयते. निर्विकल्पकसमाधौ स्वप्रकाशेन अभिव्यक्तस्वरूपा निर्विषया च परावाक् चिद्रूपा मूलभूता ब्रह्मस्वरूपा. तथाच श्रुतिः "**संसुप्तवच्छून्यवद् अप्रतर्क्य तन्मूलभूतं पदम् आमनन्ति**" (भाग.पुरा.१२।४।२१). 'ॐ'कारशब्दे स्थिताः तिस्रो मात्रा अवस्थाविशेषस्य हेतवो भवन्ति. उक्तञ्च माण्डूक्योपनिषदि "**जागरितस्थातो वैश्वानरोऽकारः प्रथमा मात्रा, स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रा, सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा**" (माण्डू.उप.९।१०।११). स्वयञ्च

व्यक्तस्वरूपो अयम् 'ॐ'कारशब्दो निर्विकल्पकसमाधिविषयीभूतः तुरीयः. **''तज्ज्ञात्वा परमं साम्यमुपैति''** ( नारा.ताप.उप.३।४ ) इति श्रुतेः **''अव्यक्तोक्षर इत्युक्तः तम् आहुः परमां गतिम्''** ( भग.गीता.८।२१ ) इति स्मृतेश्च. भागवते **''सर्ववेदमयेनेदम् आत्मना आत्मयोनिना प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते''** ( भाग.पुरा.३।९।४३ ). तदक्षरं विभक्तं सत् सर्गमापन्नं जगद् इति व्यवह्रियते. अविभक्तं विश्वात्मा इति कथ्यते. **''व्यतीतो भेदसंसर्गौ भावाभावौ क्रमाक्रमौ, सत्यानृते च विश्वात्मा प्रविवेकात् प्रकाशते''** ( वाक्प.स्वोपज्ञवृत्तिः ).

# चर्चा

## शुद्धाद्वैतसम्मतं हि शब्दाद्वैतकारणम्

**डॉ. रामकिशोर त्रिपाठी**

**प्रबलकुमार सेन :** अत्र प्रश्नद्वयं वर्तते. १. कार्ये आविर्भूते सति उपादानकरणे तत् कार्याविर्भावकशक्तिः वर्तते न वा? वर्तते चेत् तत्कार्यस्य पुनराविर्भवनं कथं न स्यात्? न एतस्मिन् मते प्रागभावः स्वीक्रियते यस्य असत्त्ववशेन कार्योत्पत्तिः कार्याविर्भावो वा न सम्भवेत्. तत्कार्यस्य आविर्भावएव तत्कार्यस्य आविर्भावान्तरस्य प्रतिबन्धकः इत्यपि कल्पयितुं न पार्यते, अभावघटितशरीरत्वात् प्रतिबन्धकस्य, अभावस्य च एतस्मिन् मते प्रत्याख्यानात्. न वर्तते सा शक्तिरिति चेत् कथं न वर्तते? नष्टा सा शक्तिः इति न, नाशानभ्युपगमात्. तिरोहिता सा शक्तिः इति चेत्, कदा सा तिरोहिता? प्रागेव आविर्भावस्य, कार्याविर्भावकाले पश्चाद् वा आविर्भावस्य? २. कार्यकारणयोः उभयोरपि नित्यत्वे कार्यकारणभावव्यवस्था कथं स्वीक्रियेत? श्रुतिबलात् ब्रह्मणः भगवत्कारणत्वं भवतु नाम, लौकिकस्थले कुण्डलमेव सुवर्णस्य कारणम् इति व्यत्यासएव कथं न स्यात्?

**पा. ना. द्विवेदी :** आविर्भाव-आविर्भावकयोर्मध्ये कार्यकारणभावः उपचर्यते. अत्र प्रागभावो नास्ति. कुतः? कार्यरूपेणैव कारणे ब्रह्मणि सिद्धमेव पूर्वमेव कार्यम्. अतः अपूर्वा उत्पत्तिः काचित् नास्ति. यथा पूर्वसिद्धस्यैव कूर्माङ्गानि प्रादुर्भावयति पश्चाच्च तिरोभावयति "**कूर्मोङ्गानीव सर्वशः**" इति गीतावचनात्.

तथैव पूर्वसिद्धस्य कार्यस्य भगवति तिरोहितस्य शक्ते: आविर्भावो जायते. अत: कार्यकारणभाव: यथा अन्यै: स्वीक्रियते तथा नास्ति. तथापि लोकव्यवहारानुरोधात् कार्यकारणभावो अस्ति इति उपचर्यते. आविर्भाविका शक्ति: नित्या. सदैव सा तिष्ठति. ईश्वरेच्छा नियामिका. यदि ईश्वर: इच्छेत् कार्यानन्तरमपि प्रादुर्भूतेऽपि घटान्तरं प्रादुर्भवतु इति स्वतन्त्रस्य प्रभो: इच्छाया: नियन्तुम् अशक्यत्वात् तथा भविष्यत्येव. इतिहासपुराणादौ प्रसिद्ध:. नैयायिकाअपि कार्यमात्रं प्रति ईश्वरेच्छा अस्ति.

**बी.आर्.शुक्ल :** नैयायिकोंकी ईश्वरेच्छा तो बहुत गड़बड़ है. वह तो सर्वदा विद्यमान् है और उसमें सब कुछ है.

**गो. श्या. म. :** यदि वाल्लभवेदान्तकी दृष्टिसे इस विषयको समझना है तो मैं यह कहना चाहूंगा कि सबसे पहले हमको यह बात ध्यानमें रखनी चाहिये कि चाहे आरम्भवाद हो चाहे परिणामवाद चाहे विवर्तवाद चाहे अविकृतपरिणामवाद चाहे अजातिवाद हो कोई भी वाद हम स्वीकारें, लोकमें कुछ उदाहरण आरम्भवादी हैं कुछ परिणामवादी हैं, कुछ अविकृतपरिणामवादी हैं, कुछ विकृतपरिमवादी हैं और कुछ उदाहरण अजातिवादी भी मिलते ही हैं. अर्थात् सभी तरहके उदाहरण लोकमें मिलते हैं. और प्राय: सभी दर्शन स्वाभिप्रेत उदाहरणोंको लेकर प्रवृत्त हुवे हैं. यह भी हमें स्वीकारना चाहिये. अब कार्यकारणभावविचारके सत्रमें विचारणीय मुख्य विषय यह होना चाहिये था कि जिस प्रकारकी कार्यकारणकी धारणाको विभिन्न दर्शन मानकर चले हैं वह धारणा लोकमें उपलब्ध सभी कार्यकारणभावके दृष्टान्तोंकी व्याख्या सही-सही कर सकी है या नहीं. मुझे लगता है इसका विचार हम इस सत्रमें नहीं कर पाये हैं. दूसरी बात यह कि ब्रह्ममें आविर्भाव-तिरोभव नामकी शक्ति हैं. इसको वाल्लभदर्शन

जितनी सीमित दृष्टिसे यहां चर्चा हुई है उतनी सीमित दृष्टिसे नहीं स्वीकारता है. उसका एक कारण यह है कि सर्वप्रथम हम धर्म और धर्मी को लेकर चले हैं. तो कहीं धर्मीका आविर्भाव होता है कहीं धर्मका आविर्भाव होता है. कहीं धर्मका तिरोभाव होता है कहीं धर्मीका. तो चार प्रभेद तो ये हुवे. १. धर्मी आविर्भूत है पर धर्म तिरोहित २. धर्म आविर्भूत है पर धर्मी तिरोभूत है. जैसे सूर्योदयसे पूर्व उषाका आना धर्मका आविर्भाव है. धर्मी बादमें आता है. तो अवयवायविनोः क्रियाक्रियावन्तो जातिव्यक्त्योः गुणगुणिनोः इत्यादि जितने उदाहरण हैं उन सबमें इस आविर्भाव-तिरोभावको सङ्गत होना पड़ेगा. तब तो यह बात टिकेगी. केवल कार्य-कारणभावके सन्दर्भमें हमारा आविर्भाव-तिरोभाव नहीं है. इस तथ्यको कृपया आप सब लक्ष्यमें रखें. रही बात नित्यता-अनित्यता की. इसके कारण यहां बहुत विवाद हुवा. पर आप ध्यानसे समझें कि ऐसी बात नहीं है कि वाल्लभदर्शनमें नित्यता ही केवल स्वीकृत है और अनित्यता नहीं है. क्योंकि स्वयं वल्लभाचार्य कहते हैं **''अनित्ये जननं नित्ये परिच्छिन्ने समागमः, नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा''**. किसी प्रकारकी नित्यता है, किसी प्रकारकी अनित्यता भी है. और किसी प्रकारका केवल प्राकट्य ही है. अर्थात् जो कालिक नित्यानित्यताके सन्दर्भसे परे कोई एक प्रकार है जिसे आधिदैविक प्रकार हम कहेंगे. तो सबसे पहली बात यह कि जब हम कार्यको नित्य कहते हैं तब इस अर्थमें नहीं कि नाम-रूप या कर्म का कार्यमें नित्य आविर्भाव है. इस अर्थमें हम कहते हैं कि नाम-रूप और कर्म जिस सत्में प्रकट हुवे हैं वह सत् नित्य है **''नाऽसतो विद्यते भावो नाऽभावो**

**विद्यतेऽसतः**''न्यायसे. उस सत्में कोई नाम-रूप-कर्म कभी आविर्भूत होते हैं तो कोई नहीं होते हैं. इस अर्थमें हम उसे अनित्य भी मानते हैं. ''अनित्ये जननम्''. मगर उस 'जनन'की व्याख्या प्रागभाव-प्रध्वंसाभावादिसे नहीं करके हम उसकी व्याख्या आविर्भाव-तिरोभावके द्वारा करते हैं. जहां जनन प्रतीत हो रहा है वहां सत् तो रहा किन्तु उस सत्में नाम-रूप-कर्म आविर्भूत नहीं थे. कारणमें कार्यकी नित्यता सदंशेन स्वीकारते हैं हम, नाम-रूप-कर्म तो उसमें आविर्भूत-तिरोभूत होते रहते हैं. जहां नाश होता है वहां हमारे शब्दोमें तिरोभाव होता है. वहां भी यही बात है. नाम-रूप-कर्मका सत्में तिरोधान हो रहा है. एक बात और ध्यानमें रखें. न्याय, शाङ्कर या किसी अन्य दर्शनको यह मान्य हो या न हो इत्यन्यदेतद्, वाल्लभमतानुसार जैसे ''**एकं सद् विप्राः बहुधा वदन्ति**'' कहा जाता है वैसे सत्में अनेकानेक सारे नाम-रूप-कर्मात्मक धर्म प्रकट होते हैं. जिसे 'सृष्ट्याविर्भाव' हम कहते हैं. वह सत् नित्य है. उस सत्का कभी अभाव नहीं होता है. न्याय जहां अभाव सिद्ध करेगा वहां वाल्लभ दर्शन यह कहेगा कि वहां भी सत् तो है ही किन्तु सत्में प्रकट हुवे नाम-रूप-कर्म तिरोहित हुवे हैं. यह स्थिति है. अब ये नाम-रूप-कर्म पहले थे या नहीं? तो उसको हम यह कहेंगे कि सत्में वे नाम-रूप-कर्म तिरोहित हैं. ईश्वरेच्छासे वे नाम-रूप-कर्म प्रादुर्भूत हो जाते हैं. और आविर्भाव-तिरोभावके विषयमें व्यवहारयोग्यता या अयोग्यता की जो बात कही गई उसमें यह बात ध्यानमें रखनी चाहिये कि जहां सत्में नाम-रूप-कर्मका आविर्भाव होता है तो वह सत्की कार्यावस्था है और तिरोहित रहते हैं तो वह कारणावस्था है. सत्

दोनोंमें समान् है. सत् धर्मी है, धर्म नहीं है, नाम-रूप-कर्म उसके धर्म हैं. चित्‌में अंशत्व आविर्भूत होता है अंशत्व तिरोभूत होता है. चिदंशमें अंशत्वका आविर्भाव जीवसृष्टि है अंशत्वका तिरोभाव मुक्ति है. किन्तु अंशत्वके आविर्भाव होने से जीवमें, मैं घोष महोदयके प्रश्नके सन्दर्भमें यह कह रहा हुं कि **''नित्यप्राप्तस्य कण्ठस्थितकनकनयाद् निर्विशेषस्य लब्धिः''** वाला जो सिद्धान्त है वह हम उस तरहसे नहीं स्वीकारते हैं. हम उसे इस तरहसे स्वीकारते हैं कि मुक्तिके भी अनेक भेद होते हैं **''सालोक्यसार्ष्टिसामिप्यसारूप्यैकत्वमप्युत''**. मुक्तिमें भगवा-न्‌को प्राप्त भी किया जा सकता है, भगवान्‌में लीन भी हुवा जा सकता है, भगवान्‌का सालोक्य भी हो सकता है, सार्ष्टिता भी हो सकती है और सामीप्य-सारूप्य भी हो सकता है. ऐसे अनेक मुक्तिके प्रकार होते हैं. क्योंकि शास्त्रमें मुक्तिके जितने भी प्रकार वर्णित हैं हम उनको यथावत् मानते हैं. हम किसी प्रकारका अपलाप नहीं करते हैं. भगवत्पाद शङ्कराचार्य जैसे कहते हैं **''यथाशब्दम् इह भवितव्यम्''** हम ऐसे ही सिद्धान्तको पकड़कर चलते हैं. अब कोई कहता है कि लाघव-गौरवके विचारसे एक मुक्ति मानना श्रेष्ठ होता है तो वह माने. हम तो जैसे शास्त्र कहता है वैसा मानते हैं. **''मुक्तोपसृप्यव्यपदेशात्''** में **''नित्यप्राप्तस्य कण्ठस्थितकन-कनयाद् निर्विशेषस्य लब्धिः''** वाला सिद्धान्त नहीं है. क्योंकि **''यत्प्रयन्त्यभिसंविशन्ति''** में 'प्रयन्ति' भी है. नित्यप्राप्तमें प्रयन्ति कैसे होगा? और 'अभिसंविशन्ति' भी है. यह प्रलयका प्रकार है. प्रलय भी दो तरहसे हो सकते हैं. १. सृष्टिके रहते हुवे जीवका प्रलय और २. सृष्टिकी निवृत्तिसे जीवका प्रलय.

**रा.कि.त्रिपाठी :** जीवन्मुक्ति आप स्वीकारते हैं ?

**गो. श्या. म. :** आनन्दसे. आप शास्त्रका वचन लाईये हम उसीको स्वीकार लेंगे. आप उत्प्रेक्षा करेंगे तो ब्रह्म भी हमको अस्वीकार्य होगा. महाप्रभु तो वहां तक आज्ञा करते हैं कि हम कृष्णको परब्रह्म मानते हैं. परन्तु जिस वचनमें कृष्णेतर देवताओंकी परब्रह्मता निरूपित है उनका भी परब्रह्मत्व हम स्वीकार सकते हैं. हम यह कहेंगे कि शिव आपकेलिये परब्रह्म है अथवा ब्रह्म आपकेलिये शिव हो सकता है. बुद्ध कहते हैं **''अत्ता हि अत्तनो नाथ अत्ता हि अत्तनो गतिः''**. हम कहेंगे कि बुद्धके इस वचनका समर्थक एक वचन शास्त्रमें मिलता है **''उद्धरेद् आत्मना आत्मानं न आत्मानम् अवसादयेत्''** अतः हमको उस वचनमें कहा गया सिद्धान्त मान्य होगा. महाप्रभु कहते है कि ईश्वरकी आराधनाके बिना भी सांख्य-योगसे मुक्ति सम्भव है, क्योंकि शास्त्र कहता है. *कोन्स्टिट्यूशन्* शास्त्रने बनाया है. हमको वह मान्य होना चाहिये.

**वि. प्र. मिश्र :** बलाबल कैसे निर्धारित होगा ?

**गो. श्या. म. :** अधिकारीभेदसे. हम तस्मात् प्रातिभासिकत्वं नहीं मानेंगे हम लीला मानेंगे.

# ॥ परिणामवादः(१) ॥

सत्कार्यवाद ऑफ सांख्यास् एंड् वाल्लभ थिअरी ऑफ् आविर्भाव-तिरोभाव

**श्रीमतीउज्वला पानसे झा**

*

मध्वसिद्धान्तरीत्या कार्यकारणभावविचारः

**श्रीप्रह्लादाचार**

*

परमाणुकारणवादपरिशीलनं ब्रह्मणो अभिन्ननिमित्तोपादानत्वं च

**श्री एन्. एस्. रामानुज ताताचार्यः**

*

कार्यकारणभावविषये विशिष्टाद्वैतिनां सिद्धान्तः

**श्री के. ई. देवनाथन्**

*

# Satkāryavāda of Sāṅkhyas
# and
# Vāllabha Theory of Āvirbhāva-tirobhāva.

**Dr. Ujjwala Panse - Jha,**

**Introduction :**

Philosophers are both interested in and fascinated by the Problem of cause - and - effect. What are these two concepts? What is the relation between the two? What use or purpose is served by these two in our ordinary life first and then in any philosophy or any philosophical system to be precise?

In our ordinary life we have a general notion of cause-and-effect relationship and on the basis of that much of our day-to-day behaviours takes place. We not only infer things but do act accordingly and one must admit that our judgement leads to frustrated behaviours in a very less number of cases. We do pull on quite comfortably with our judgement inspite of the exceptional situations. But when we enter the field of philosophical analysis, of course taking hints from our ordinary empirical experiences and start theorizing we do enter into a very interesting province called 'Problem of Causality'.

To our satisfaction we almost have as many theories as the systems of Indian Philosophy so far as this issue in concerned.

In this paper, we propose to discuss the Satkāryavāda of the Sāṅkhya system and compare it with the Āvirbhāva-tirobhāva-vāda of the Śuddhādvaita philosophy of Srī Vallabha. Thus, the paper is divided into three parts :

(i) Satkāryavāda of the Sāṅkhyas;

(ii) Āvirbhāva-tirobhāva-vāda; and

(iii) Analysis and observations.

**(i)Satkāryavāda of the Sāṅkhyas :**

While explaining the cause and effect relationship between two things, Sāṅkhyas contend that if 'X' is an effect of 'Y' then 'X' necessarily exists in 'Y', nay, 'X' is identical with 'Y'. This stand of the Sāṅkhyas is called Satkāryavda. They argue, if Kārya does not exist in the Kāraṇa or in other words, if both of them are not identical, where from would the effect occur in the cause?

To begin at the very beginning, the main doubt regarding the cause and effect is fourfold. When an effect say, 'jar' is produced by a cause, say, 'a ball of clay', then the main questions need to be answered are :

(i) Whether that effect, absolutely absent in the cause was produced afterwards or

(ii)It was already there in the cause or

(iii)It was absent and also present in the cause or

(iv)None of the both?

Let us consider all these possibilities one by one. Let us first think i.e. let us accept for argument's sake that an effect was absolutely absent in the cause and then it is produced in it later. If this had been so then the following difficulties would have arisen :

(i)If an 'effect' is absolutely absent in the 'cause' then one could have claimed 'something' to be the 'cause of 'a horn of an ass', as it also is absolutely absent in that particular cause. In other words, when one says, a pot is absolutely absent in a particular cause, before it is produced, one can also say that a horn of an ass is absolutely absent in a certain cause and hence it is likely to be produced, just because 'being absolutely absent' is all the same in case of 'pot' as well as in the case of 'a horn of an ass' Moreover, even in case of an effect such as pot, there is no difference in the state of absence whether it is pre - absence (Prāgabhāva) or destruction (Pradhvṁsa). And this will lead to the contingency namely : as the two Kapālas or potsherds become the cause of pot in the pre-absence state, similarly, the pieces of pot after its destruction should become the cause of the pot.

(ii)Another difficulty would be : If the effect is totally

absent in the cause then one cannot explain why one goes to collect a certain cause to produce a certain effect as in each and every cause the desired effect is totally absent without any difference. e.g. a person in need of oil goes to collect either sesamun or mustard but never goes to collect sand instead. Further, if there is no oil in Tila or Sarṣapa then how are they different from sand ( Sikatā ) ?

(iii)Moreover, if there is no effect in the cause then the verbal behaviour about it also will be baseless. No one says, 'mṛdam karoti' but everyone says, 'Ghatam karoti'. If Ghata is totally absent then how can one refer to it ?

(iv)Further difficulty is : If effect is totally absent in cause and hence is totally different from it then when a pot is produced why does one not find the ball of clay ( mṛtpiṇda ) as it is ?

If one argues that a cause produces an effect by getting destroyed itself then this will mean that an effect is produced out of absence. If so, then the further question would be why and how shall one explain the regularity of cause producing the effect immediately after its own destruction and never after some or long time ? Moreover, if a mṛtpiṇda is destroyed in one place a pot will come into being in another place as absence is everywhere. Thus, the first possibility cannot be accepted.

If we accept the second option, namely, a cause being identical with the effect produced it then as the cause is present, the effect also is very much present as it is not different from the cause and hence there is no difficulty as in the first option. This is why the first option has to be abandoned.

If we consider the third option, namely, the effect is present as well as absent in the cause, then we find that this is an impossibility only because Sat (Present) and Asat (absent) being exactly opposite to each other, cannot exist together. Thus, if the effect is present it cannot be absent and vice-versa.

The last option, namely, 'neither of the two' is again an impossibility.

Thus, the Satkāryavādin concludes, Kārya exists—is present—in the cause. Then why does one not see it then? The Sāṅkhya answers or rather question : Is it necessary always to see something with eyes? We can infer it and inference is as valid a means of knowing as perception in our system. We cannot perceive Kārya in Kāraṇa because it is in dormant stage. A Kārya is merely manifested by the efforts of the agent.

To sum up the stand of Satkāryavāda one may say that the following are the main aspects of the theory:

(i)The effect is pre-existent in its cause i.e. it is not produced a new. Na Asataḥ sat jāyate.
(ii)The effect is identical with its cause
(iii)The effect is eternally existent.
(iv)The cause is the substance of the effect i.e. it itself becomes the effect.
(v)The world is the Pariṇāma of Prakṛti i.e. transformation of the eternal or uncaused cause.

Naiyāyikas who are known as a-sat-kāryavādinshave various objections against the sat-kāryavāda of the Sāṅkhyas. But if we look into the Vallabha system of Vedanta we find that their Āvirbhāva-tirobhāvavāda comes close to the Satkāryavāda.

Let us look into Āvirbhāva-tirobhāvavāda in brief, which will enable us to understand its position in comparison with other systems as well. For this paper, I have confined myself with the Āvirbhāva-tirobhāvavāda of Puruṣottamacaraṇa ( Puru. ).

**(ii)Āvirbhāva-tirobhāvavāda :**

Āvirbhāva and Tirobhāva are the two śaktis of God. The term 'Āvirbhāva' means : ''आविः प्रकटं भावयति, उपादानान्तःस्थं कार्यं बहिः प्रकटं करोति या निमित्तगता उपादानगता शक्तिः सा 'आविर्भाव'पदवाच्या''. The term 'Tirobhāva' means : ''एवं तिरो अप्रकटं भावयति, बहिष्ठं कार्यं उपादानान्तः स्थापयति या शक्तिः नाशकगता सा 'तिरोभावं'शब्दवाच्या''.

So, that capacity in the instrument and material which manifests the effect outside, which was in the material is known as 'Āvirbhāva' and the capacity which places the external effect (again) inside the material, which resides in the destroyer is known as 'Tirobhāva'.

Puru. has explained : "एवञ्च यन्निष्ठाविर्भावशक्तिरूपाद् धर्माद् यस्य आविर्भवनरूपधर्मसिद्धिः तस्य तत्कारणम् इति उच्यते. एतेनैव कार्यं नाश्यं च व्याख्यातम्. तथैव उक्तरीतिकान्तर्भाव-बहिर्भावाख्य- नाशोत्पत्तिशालित्वमेव अनित्यत्वम् इत्यपि. अनेनैव न्यायेन आविर्भाव-तिरोभावयोः नित्यत्वं सदातनत्वं भगवद्रूपत्वं च अवसेयम्".

Thus, the term's Kārya-Kāraṇa, Nāṣya-Nāśaka and also Anitya-Nitya are explained.

One can understand why Kārya has to be accepted as Nitya and Sat in the system by knowing that everything in this system is identical with God—unless Kārya is eternal it cannot be identified with God. Hence, everything is Nitya because everything is Īśvara. Thus, the terms, which are diagonally opposite of each other in the utter realism of Nyāya namely, Kārya and Nitya are quite in harmony with each other in the Śuddhādvaita system, we have seen why.

Puru. says, the sentences such as : "परास्य शक्तिः विविधैव श्रूयते" or "मयूराः चित्रिता येन शुकाश्च हरितीकृताः हंसाश्च श्वेतगरुतः स मे विष्णुः प्रसीदतु". Point towards the eternal

Śakti of God which is capable of 'कर्तुम् अकर्तुम् अन्यथाकर्तुम्'.

Thus, after refuting a-sat-kāryavāda on one hand and after accepting the Śakti-theory of Āvirbhāva-tirobhāvavāda maybe said to focus the main points of it in the following verses :

तस्मादसत उत्पत्तिर्न युक्तिमधिरोहति। अतो धर्मी पूर्वसिद्धः सर्वथैवाभ्युपेयताम्॥
तथा 'नष्टो घट' इति व्यवहारस्य सिद्धये। तदाव्युपेयस्तेनायं धर्मी सिद्धः सनातनः॥
एवं च धर्मिनित्यत्वे ब्रह्मातादात्म्यमस्य च। बोध्यं 'पुरुष एवेदं' स वै सर्वमिदं जगत्॥
'इदं सर्वं यदयमात्मे'त्यादि श्रुतिदर्शनात्। तथा सति स भूतं स भव्यमेतच्छ्रुतेर्बलात्॥
तादृशव्यवहारेऽपि न क्षतिस्तस्य काचन। शक्तिस्तु सिद्धा प्राक्तेन शक्ताद्धेतोर्बहिः स्थितिः॥
आविर्भावस्तिरोभावस्तास्मिन्नेव स्थितिर्मता। अयं जनी प्रादुर्भावे नश चादर्शन इति॥

**( iii )Analysis and observations :**

We said in the beginning that there are almost as many theories as the systems of Indian Philosophy so far as this issue is concerned. It becomes clear from whatever we discussed so far, that through there is a lot of similarity between the Satkāryavāda of the Sāṅkhyas and the Āvirbhāva-tirobhāvavāda of the Vallabhas still one is apt to point the differences as well.

Again, to begin at the very beginning, two points are such which have got to be cleared to give a philosophical theory of cause and effect relationship :

(1)Whether 'effect' is just a different stage of a 'cause' or it is something newly produced that was not there in the cause previously. And

(2)How to explain that a certain thing leads to a certain another thing. What is the controlling factor ? In other words : How is it that a lump of clay gives rise to a pot and never to a cloth and threads result into (with the whole causal complex present, of course,) a clothe alone ?

We find that Vallabhas, to answer these two questions, have accepted the viewpoints of two prominent systems of Indian Philosophy, namely, Sāṅkhya and Pūrvamīmāṁsā.

To explain : So far as the first question is concerned, they have accepted the Satkāryavāda of Sāṅkhyas and on the other hand, so far as the second question is concerned, they have sided with the Mīmāṁsā view that each and everything in the universe has some Śakti some potential to produce some effect or the other. This is the reason why threads produce cloth and mud a pot.

If we consider the points of differences then they may be stated as under :

So far as Sāṅkhyas' Satkāryavāda is concerned they have accepted prakṛti as Mūlakāraṇa of everything — there is no role for God so far as the creation of universe is concerned in this system, whereas, Śuddhāvaita school

accepts Viṣṇu as the source of everything. Each and everything in the universe is related to God - understood in this way.

Another important point is that Prakṛti transforms herself into various effects whereas in Śuddhādvaita God himself manifests in each effect and at the time of Nāśa disappears from it.

So far as the Śakti theory of Mīmāṁsā is concerned, it is totally acceptable to the Śuddhādvaita School—only thing is that this Śakti is controlled by the desire of God Puru. says : ''उक्तरीत्या सिद्धाया अपि तस्याः भगवदिच्छया नियतत्वात्. नच तस्याअपि नित्यत्वात् तद्दोषतादवस्थ्यम्. इदमस्मिन् कालेऽस्मिन् देशे एवम् अस्माद् बहिर्भवतु इदं चास्मिन् अन्तर्भवतु इति तदाकारस्य फलबलेन कल्पनीयत्वात्''.

Thus even if the Śuddhādvaita school has accepted Satkāryavāda on one hand and Śaktivāda on the other, they have their own theory of Āvirbhāva - tirobhāva, which is something more than the sum of these two theories.

# चर्चा

## Satkāryavāda of Sāṅkhyas and Vāllabha Theory of Āvirbhāva-tirobhāva.

डॉ. उज्वला पानसे झा

यज्ञेश्वर शास्त्री : Metaphysically in शुद्धाद्वैत, आविर्भाव-तिरोभाव these two words denote deferent senses. Tirobhāva means concealment of certain qualities of god. See, when matter is created, Ānandaṁśa and Cidaṁśa aspects are suppressed or concealed and matter is created. And when Jīvas emanate the word is used ''विस्फुल्लिङ्गाः व्युच्चरन्ति'' then Ānandaṁśa is suppressed or concealed. And then Antaryāmī, all the three aspects are revealed. Technically calling, here, manifestation of all these quality; that is nature of Brahman. Therefore, when we talk about cause and effect, it is not still clear. Here Āvirbhāva means manifestation of objects or deferent things or Āvirbhāva means manifestation of Brahma. And Tirobhāva means it is a disappearance of certain qualities. It is not understood as Laya. It is concealment of certain qualities. That

is not very clear. Metaphysical point of view I am talking.

सुनन्दा शास्त्री : What I understood Śuddhādvaita is this that since everything is Brahma, there can not be Laya of anything. Its only the concealment. It is suppressed. That particular point or aspect of the thing is suppressed. Suppose it is bliss. Bliss is suppressed. Or it is manifested in the Anaryāmī. And it is in the inner things, matter, that is Jaḍa, only Sadaṁśa is expressed. That is what I understood. But it is not really Laya or Nāṣa of anything.

उज्वला पानसे : I think I have given the definition as per Puruṣottamacaraṇa. "आविः प्रकटं भावयति". By that he has said that "उपादानान्तस्थं कार्यं बहिः प्रकटं करोति. Now whatever is Upādanakāraṇa, ultimately it is Brahma or Kṛṣṇa. But if we talk about physical things then Upādāna is Vṛtti. And "तत्स्थं कार्यम् आविः प्रकटं करोति". He has said that the Śakti is there "यन्निष्ठाविर्भावशक्तिरूपाद् धर्माद् यस्य आविर्भावनर्धमरूपसिद्धिः तस्य तत् कारणम् इति उच्यते. So perhaps he is trying to explain from that point of view that Mṛtpinḍa is Kṛṣṇa because it manifests Ghaṭa. Ultimately everything is identical with God. So, as you said, ultimately everything is manifestation of quality of god or manifestation of himself and disappearance

or concealment. But the same thing is you have to explain for day to day causal relationships like Mṛttikā and Ghaṭa, then perhaps it can be explained by this definition.

**रामचन्द्र माझी** : आपने सत्कार्यवाद और असत्कार्यवाद का जो *क्लासिफिकेशन* दिया है उसके विषयमें एक प्रश्न है. सत् और असत् को लेकर जो ...हुवा क्या यह इस बातपर निर्भर नहीं करता है कि हम कार्य और कारण से क्या अर्थ समझते हैं. एक प्रश्न. दूसरा प्रश्न यह है कि आविर्भाव और तिरोभाव में कालकी धारणा काम करती है. और नित्यताकी जो बात है वह कालकी धारणासे सुसङ्गत नहीं बैठती है.

**बी.आर्.शुक्ल** : उनका दूसरा प्रश्न यह है कि आविर्भावकी धारणके साथ कालका सम्बन्ध है परन्तु नित्यके साथ कालका सम्बन्ध नहीं होता है. तब फिर नित्यका आविर्भाव कैसे माना जाता है?

**पा. ना. द्विवेदी** : यहां काल चेष्टा है. जिसको काल आप समझ रहे हैं वह काल यहां नहीं है. ईश्वरेच्छासे नियत आविर्भाव-तिरोभाव है.

# परमाणुकारणवादपरिशीलनं
# ब्रह्मणो अभिन्ननिमित्तोपादानत्वं च

प्रो. एन्. एस्. रामानुज ताताचार्यः

अनन्यपरशास्त्रसिद्धेषु अर्थेषु ''श्रुतेस्तु शब्दमूलत्वाद्'' इति न्यायेन गत्यन्तराभावे काचित् गमनिका स्वीकार्या. अनुमेयेषु तु अर्थेषु यथादृष्टान्तसिद्धिः, अन्यथा अतिप्रसङ्गात्. धूमादिना नित्यवह्निसिद्धौ अतिप्रसङ्गः. ततश्च अवयवातिरिक्तावयविवादिनां नैयायिकानां अवयवाः स्वावयवैः परस्परं संयुज्य अवयविनम् आरभन्ते इति सिद्धान्तः. अयञ्च सिद्धान्तो द्व्यणुकपर्यन्तं निर्विघातः. द्व्यणुकन्तु निरवयवाः परमाणवः आरभन्त इति तैः कल्पितम्. तत्र एवं प्रसङ्गावतारः : यदि परमाणवः स्वांशतः संयुज्य अवयविनम् आरभेरन् तदा सो अंशो अवयवरूपः तदन्यो वा ? आद्ये तस्यापि तथा इति अनवस्था. द्वितीयः सो अंशो धर्मिस्वरूपो वा औपाधिको वा ? आद्ये धर्मिस्वरूपमेव अंशादिभावम् आपन्नमिति भिन्नाभिन्नता स्यात्. द्वितीये उपाधिसम्बद्धः स्वयम् अंशः इति आगतम्. तथा सति उपाधिसम्बन्धः कार्त्स्न्येन भवति वा अंशतो भवति वा ? इति विकल्पावतारः. अतः परिशेषाद् अंशनिरपेक्षसंयोगवद्भिः अन्योन्यासंयुक्तांशरहितैः अर्थात् कृत्स्नसंयुक्तैः अणुभिः द्व्यणुकस्य आरम्भः स्यात्. तथाच सप्रतिघत्वविरोधः त्यक्तः. मूर्तानां वस्तूनां समानदेशत्वाभावः सप्रतिघत्वम्. स्वाक्रान्तदेशे अन्यवस्तुसम्बन्ध-प्रतिघातः, तद्रूपविरोधः.

अपिच सर्वेषु परमाणुषु एकपरमाणुप्रदेशमात्रावस्थितेषु स्वाधिकदेशव्यापि-कार्यारम्भो न स्यात्. न खलु अवयवास्पृष्टे कुत्रचित् प्रदेशे अवयवी तिष्ठेद्, अदर्शनाद् अनभ्युपगमात् च. अन्यथा बदरपरिमाणकार्योत्पादकेभ्यो

अवयवेभ्योऽपि पर्वतपरिमाणकार्योत्पत्तिः स्यात्. अतः औपाधिकांशतोऽपि अवयवासमवेतत्वं नैयायिकानभ्युपगतम्.

नच विनश्यदवस्थायाम् अवयवं विनापि अवयवी तिष्ठत्येव; तथाच अवयवाभावप्रदेशेऽपि विनश्यन्नपि अवयवी तिष्ठतु; अतएव अयुतसिद्धलक्षणे 'अविनश्यदवस्थम्' इति विशेषणं दत्तम् इति वाच्यम्, अविनश्यदवस्थस्यापि अवयविनो अवयवाभावप्रदेशे स्थित्यभ्युपगमे द्वित्रितन्तुभ्योऽपि गजशरीराच्छाद-कपटोत्पत्तिः स्यात्. अतो अवयवानवच्छिन्नप्रदेशे अवयविवृत्तिः अनिष्टेति अनिष्टप्रसङ्गः तदवस्थः. तथाच असिद्धं परमाणुं तदपेक्षया अधिकपरिमाणं द्व्यणुकं च साधयितुम् इच्छतः तव सिद्धस्य मेर्वादेः हानिः.

ननु परिमितानां सर्वेषां वस्तूनां दिग्भेदेन भागभेदो दृश्यते ऊर्ध्वभागः पूर्वो भागः दक्षिणो भागः इत्येवम् इति परमाणुष्वपि तथा अङ्गीकारो भवतु इति चेत्, मा एवं दिक्संयोगायत्तोऽपि हि भागभेदः सावयवेष्वेव दृश्यते. त्रसरेणोरपि त्वया सावयवत्वाङ्गीकारात्. अपिच विश्वव्याप्तैकदिक्तत्त्व-वादिनः तव दिक्संयोगभेदो नास्ति, प्रतियोगिदिश एकत्वात्. तथाच दिक्संयोगभेदाधीनो भागभेदो दुर्वचः. दिगुपाधिप्रतियोगिकसंयोगभेदात्तु स्यादपि भागभेदो यदि तत्रापि अंशानंशविकल्पक्षोभो अतिलङ्घ्येत. अयं भावः : परमाणवः स्वांशैः दिगुपाधिभिः संयुज्यन्ते दिगुपाधयो वा स्वांशैः परमाणुभिः संयुज्यन्ते इति विकल्पे, न आद्यः, परमाणूनां निरवयवत्वात्. न द्वितीयः, उपाधिसंयोगः परमाणौ कात्स्न्येॅ चेद्, उपाध्यन्तरसंयोगो न स्यात्. सर्वसमावेशे च सर्वदिगुपाधिसंयोगानां परमाणुषु पृथक्प्रदेशे च सर्वदिगुपाधिसंयोगानां परमाणुषु पृथक्प्रदेशरहितानां कथम् औपाधिकभागभेदापा-दकत्वम्? यदिच अंशभेदं विनापि संयुक्ताः उपाधयः स्वसंयुक्ते परमाणौ अंशभेदकल्पकाः तदा परमाणवएव तथा अंशभेदकल्पकाः भवन्तु कृतम् उपाधिभिः. तदङ्गीकारेऽपि तत्संयोगस्य परमाणौ व्याप्यविद्यमानस्य अंशभेदक्लृप्तौ अनुपयोगात्. तद् इदं सर्वम् अभिप्रेत्य आहुः **''षट्केन युगपद् योगात् परमाणोः षडंशता, षण्णां समानदेशत्वे पिण्डः स्यादणुमात्रकः''** इति.

षड्भिः परमाणुभिः एकस्य परमाणोः षट्सु पार्श्वेषु संयोगे परमाणोः षडंशता स्यात्. यदि पार्श्वभेदम् अन्तरेण संयोगः तदा अधिकपरिमाणं कार्यं न स्याद् इति तदर्थः.

ननु तार्किकैः द्व्यणुक-त्र्यणुकस्वीकाराद् अणुद्वयम् अणुषट्कं वा गृहीत्वा दोषे वक्तव्ये षड्भिः परमाणुभिः सप्तमस्य कस्यचित् संयोग इत्यस्य तदनुक्तत्वात् तद्ग्रहणेन कथम् इदं दूषणम्? इति चेद्, अत्र द्व्यणुकादिसदसद्भावोपेक्षया सामान्यतः इदम् उच्यते. लोके पदार्थेषु चतुर्दिगवच्छेदेन अधश्च ऊर्ध्वञ्च पदार्थानां संयोगो दृष्टः. तथा परमाणावपि परमाण्वादिसंयोगः सम्भाव्यते. अवयवानां संयोगेन अवयव्यारम्भवादिना तुल्यनयात् परमाणावपि ईदृशं संयोगं न वारयितुं शक्नोति. तत्र सांशत्वम् अधिकपरिमाणाभावो वा इति दोषः. एवञ्च षट्केनेति षण्णामिति च उपलक्षणम्. दिक्सम्बन्धवद् विदिक्सम्बन्धस्यापि सुग्रहतया दशदिग्गतपमणुसंयोगे दशांशता स्याद् इति भाव्यम्.

ननु बुद्धिः तावत् सर्वतन्त्रसिद्धा. सांवृति इत्यपि हि तां माध्यमिको मन्यते. समन्तात् वृत्तिः सर्वसाधारणम् आवरणम्. तिमिरकामलादीनां कतिपयप्राणिमात्रावरणत्वात् तद्वारणाय समिति. तच्च आवरणम् अज्ञानमेव. तत्कल्पितत्वाद् बुद्धिरपि सांवृति इति आह शून्यवादी. अस्तु. सा बुद्धिः एकापि अनेकविषया दृष्टा इष्टा च. निरंशाच सा प्रत्येकं कात्स्न्येंन अंशतो वा विषयीकुर्यात्. न आद्यो, अन्यानुल्लेखप्रसङ्गात्. न द्वितीयो, निरंशत्वात्. तत्र चेत् कश्चित् समाधिः अणुष्वपि तथा स्याद् इति चेद्, न, एकवियषयनिरूपितविषयिता बुद्धौ यदि कात्स्न्येंन स्यात् तदा विषयान्तरनिरूपितविषयिता तस्यां बुद्धौ न स्याद् इति न वक्तुं शक्यम्. एकस्यामेव बुद्धौ अनेकविषयकत्वस्य अनुभवात्. एवम् एकस्य निरंशस्य अनेकबुद्धिविषयत्वमपि निरूढम् (उपपन्नम्). अवयव्यारम्भकसंयोगस्तु त्वयाऽपि न क्वचिद् अंशनिरपेक्षः उक्तः. क्वचित् विशेषाङ्गीकारे च नियामकाभावः. ननु अवयविनम् अतिरिक्तम् अस्वीकुर्वतापि बौद्धेन परमाणुवादिना सङ्घातस्य

इष्टत्वात् तुल्यो दोषः. संयोगसाध्यः सङ्घातः. संयोगः कात्स्न्र्ये अंशतो वा इति विकल्पावतारात् इति चेद्, न, संयोगसाध्यस्य सङ्घातस्य अभावात्. तत्स्वीकारे हि अवयविवादएव वरम्.

ननु निरंशः संयोगः उभयवृत्तिः अङ्गीक्रियते. तत्र एकनिरूपिताधेयता संयोगे किं कात्स्न्र्येन उत अंशेन. आद्ये तत्र अन्यनिरूपिताधेयता न स्यात्. अन्त्ये संयोगस्य सांशत्वापत्तिः इति चेद्, न, विषयित्ववत् समाधेयत्वात्. संयोगोऽपि हि द्वयोः न स्वांशाभ्यां वर्तते इति दृश्यते. यथा बुद्धेः अंशाभावेऽपि अनेकनिरूपिताः विषयिताः वर्तन्ते तथा निरंशे संयोगे वस्तुद्वयनिरूपिताधेयताद्वयं भवितुम् अर्हति, दर्शनानुगुण्यात्.

एवं स्वामित्वादिकमपि न प्रतिबन्दिः दर्शनानुरोधात्. नानावस्तुस्वामिनि एकवस्तुनिरूपितस्वामित्वम् अन्यनिरूपितस्वामित्वेन सहांशावच्छेदमन्तरा वर्तते. तथा उभयस्वामिके एकस्मिन् वस्तुनि उभयनिरूपितस्वत्वद्वयम् अंशनिरपेक्षम् अस्ति, तथा अनुभवात्. प्रकृतेतु नैवम्. अंशापेक्षयाएव दर्शनात्.

**आक्षेपः**

अस्तु तर्हि संयुक्तप्रतिबन्दिः : मूर्तैः विभूनां संयोगो अस्ति न वा. न चेद्, अन्यतरकर्मजसंयोगस्य विलोपप्रसङ्गः, अविशेषात्. यदा पक्ष्यादेः अन्यतरस्य कर्मसत्वेऽपि विभुषु संयोगो न उत्पद्यते तदा तत्र व्यभिचारात् अन्यतरकर्म न संयोगकारणमिति कुत्राऽपि अन्यतरकर्मणा संयोगो न स्याद् इति. अस्ति चेद्, यदि कात्स्न्र्येन विभुद्रव्यम् एकेन स्पर्शवता मूर्तेन संयुज्यते कथं स्पर्शवन् मूर्तान्तरेण तस्य संयोगः. तथा च सर्वमूर्तद्रव्यसंयोगित्वरूपविभुत्वभङ्गः. यदि अंशतः संयुज्यते तदा सावयवत्वप्रसङ्गात्. उत्तरत्र (सङ्घातत्वे) नानात्वभेदाभेदयोः अन्यतरापातात्. एकमूर्तद्रव्यसंयुक्तात् भेदः मूर्तान्तरसंयुक्ते स्यात्. अभेदप्रतीत्या अभेदोऽपि एष्टव्यइति भेदाभेदावतारः. किञ्च सांशत्वपक्षे विभुद्रव्यांशानां मिथः संयोगो अस्ति न वा? अस्ति चेत्, तत्रापि स्वांशभेदेन संयुज्यते न वा? इत्यादिप्रसङ्गः.

नास्ति चेद्, असंहतरूपता स्यात्. एकं वस्तु विभुद्रव्यं न स्यात्. ननु औपाधिको विभूनाम् अंशभेदः इति चेत् न, उपाधिसंयोगेऽपि अंशादिविकल्पानपायात्. निरंशेऽपि संयुज्यमानं स्वरूपेण तद्भेदोपाधिः इति चेत्, न, स भेदः उपाधिना छिन्ने चेद् अवयवविश्लेषात्मा स्यात्. अच्छिन्ने तु भेदाभेदवादएव शरणम्. अतएव उपाधिसमपरिमाणेषु विभुद्रव्यस्य प्रदेशेषु तत्तदुपाधिसम्बन्धः इति व्यवस्था इति निरस्तम्. प्रदेशभेदस्यैव मृग्यमाणत्वात्.

विभुद्रव्यमेव तत्तन्मूर्ततुल्यपरिमाणं जायते इति चेत्, न, विरोधात्—विभु न कार्यत्वाभावात्, कार्यत्वे च विभुत्वव्याघातात्. तत् तुल्यपरिमाणमपि अंशभेदेन जायते उत न? उपाधिना विच्छिन्नं तत् तुल्यपरिमाणं जायते अविच्छिन्नं वा? इत्यादिदोषानतिक्रमात् च.

काल्पनिकांशभेदेन मूर्तसंयोगः इति चेत् तर्हि वस्तुतस्तु अखण्डेन इति उक्तं स्यात्, कल्पनिकस्य अंशस्य पारमार्थिकवस्तुनिर्वाहकत्वायोगात्. अपिच अंशभेदकल्पना च किं विभुद्रव्यस्वरूपमात्रे उत अंशेऽपि आहोस्विद् अंशएव? इति विकल्पगर्तो दुस्तरः, नानात्वभेदाभेदादिप्रसङ्गात्.

निरवयवनामपि विभूनां स्वभावतएव अनेकमूर्तसंयोगक्षमत्वम् इति चेद्, अणूनामपि एतद् अस्तु, अविशेषात्. एतदुक्तं भवति. अंशाभावेऽपि अणौ अण्वन्तरं स्वसंयोगेन प्रदेशकल्पकम्. तथाच पृ(थु?)...वस्त्वारम्भो भवितुम् अर्हति इति.

एवं निरवयवत्वेन अभिमते त्रसरेणावपि उक्तदोषाः न अतिवर्तन्ते. तथाहि त्रसश्चाऽसौ रेणुश्च त्रसरेणुः. जालसूर्यमरीचौ दृश्यमानं चलं रजो अतिसूक्ष्मम्. तदतिरिक्तसूक्ष्मपरमाण्वनङ्गीकारेऽपि तस्य रजसो अपलापायोगात्. तस्यैव सिद्धान्ते परमाणुत्वात् निरंशत्वाच्च. तत्र एकेन अन्यस्य रजसः किं कात्स्न्र्येन्वा सम्बन्धः इति विकल्पे संयोगस्य स्वभावतो निरंशेऽपि

प्रदेशकल्पकत्वम् इत्येव वक्तव्यम् इति.

**समाधानम्**

अत्र उच्यते. यदि वयं प्रदेशवर्तिगुणापलापाय प्रवर्त्स्यामः तदा विभुप्रतिबन्द्या अणुष्वपि तत्सम्भवः प्रदर्श्येत. किन्तु अवयव्यारम्भकानाम् अवयवैरेव संयोगः इति नियमस्य त्वयैव अन्येषु सर्वेषु कार्येषु अङ्गीकारात् कल्प्येष्वपि परमाणुषु तत्प्रसङ्गो दुर्वारः इति ब्रूमः. दृष्टानुसारेणैव हि कल्पना भवति. भवदभिमतानाम् अनंशानाम् अणूनाम् अदर्शनात्. अनुमानात् अनंशान् अणून् कल्पयाम इति चेत्, न, अनन्यथासिद्धस्य लिङ्गस्य अभावात्.

ननु अस्ति लिङ्गम्, अणुपरिमाणतारतम्यं क्वचिद् विश्रान्तं परिमाणतारतम्यत्वात् महत्परिमाणतारतम्यवद् इति चेत्, न, दृष्टे त्रसरेणावेव विश्रमसम्भवे अदृष्टस्य परमाणौ कल्पनायोगात्. तथाच सिद्धसाधनम्.

यदि त्रसरेणुरेव परमाणुः स्यात् अप्रत्यक्षः तर्हि स्याद् इति चेद्, हन्त. कुत्र एषा व्याप्तिः यत्र परमाणुत्वं तत्र अप्रत्यक्षत्वम् इत्येवं रूपा गृहीता. भवदिष्टपार्थिवादितुल्यस्य अन्यस्य अणोः अभावात् न तद्दृष्टान्तेन अप्रत्यक्षत्वं साधयितुं शक्यम्.

चाक्षुषत्व-प्रकर्षनिकर्षयोः महत्त्वप्रकर्षनिकर्षानुविधायित्वात् महत्त्वाभावे त्रसरेणोः प्रत्यक्षत्वं न स्याद् इति चेद्, न, चाक्षुषावयवकस्यैव द्रव्यस्य चाक्षुषत्वनियमदर्शनात् अचाक्षुषावयवकस्य त्रसरेणोरपि अचाक्षुषत्वप्रसङ्गे भवतां किं समाधानम् उच्यते. अगत्या इति चेद्, भवतु त्रसरेणौ महत्त्वाभावेऽपि कुतश्चित् कारणान्तरात् प्रत्यक्षत्वम्. एतद् उक्तं भवति. अतिशयित-प्रत्यक्षतारतम्ये महत्त्वतारतम्यं प्रयोजकम्. प्रत्यक्षे तु रूपादिकमेव कारणं न महत्त्वम्.

त्रसरेणोः परमाणुत्वादेव ''त्रसरेणुः कार्यद्रव्यारब्धः महत्त्वाद्'' इति

अनुमानमपि निरस्तं, महतो: असिद्धत्वात्. अस्तु ''त्रसरेणु: कार्यद्रव्यारब्धो, बाह्येन्द्रियग्राह्यत्वाद्'' इति अनुमानम् इति चेद्, न, विपक्षे बाधकाभावात्. अन्यथा त्रसरेण्वारम्भकस्य द्व्यणुकस्यापि कार्यद्रव्यारब्धत्वकल्पनायां निवारका-भावात्. तत्र विपक्षे बाधकं नास्ति इति चेद्, अत्रापि तथेति तुल्यम्. एवम् आरम्भकपरम्पराया: सावयवत्वं तद्व्यापकतया अभिमतम् अनित्यत्वं कुतश्चित् महत्त्वं च प्रयुज्यमानम् अनिवारणीयं स्यात्. सर्वम् इदम् अभिसन्धाय उक्तं तत्त्वमुक्ताकलापे जडद्रव्यसरे श्लो.१८

> कार्यं नैवारभेरन् समधिकमणव: सर्वत: सम्प्रयुक्ता:
> दिक्संयोगैकदेश्यान्न घटत इह ते दिक्कृतोऽप्यंशभेद:।
> बुद्धेस्त्वंशानपेक्षा स्फुरति विषयिता विश्रमस्त्वस्तु दृष्टे
> नोचेदारम्भकांशप्रभृतिषु नियता दुर्निवारा: प्रसङ्गा:॥

ननु कारणपरम्परानिश्रान्तिभूमे: निरवयवस्य कस्यचिद् अभावे सर्वस्यापि अनन्तावयवारब्धत्वेन मेरुसर्षपयो: तुल्यपरिमाणप्रसङ्ग: इति चेद्, न, आनन्त्यसाम्येऽपि अवयवानां न्यूनाधिकभावे परिमाणवैषम्योपपत्ते:. सत्ताप्रभृति-घटत्वादिपर्यन्तानां सर्वासां जातीनां त्रैकारिकान्तव्यक्तिवृत्तित्वाविशेषेऽपि न्यूनाधिकवृत्त्यैव परापरभावो युष्माभि: कल्पित:, तद्वद् इहापि स्यात्. तथा पक्षा मासाश्च अनन्ता: तथापि मासापेक्षया द्वैगुण्यं पक्षाणाम् एष्टव्यम्. अन्यच्च घटसमुदायाद् घटपटसमुदायो अधिक:. हिमदक्षिणदेशापेक्षया मेरुदक्षिणदेश: एकात्मदु:खजाताद् आनन्दात्मदु:खजातम् अधिकम् इत्यादिकम् उदाहर्तव्यम्. एतावता परमाणुकारणवाद: परिशीलित:.

### ब्रह्मणो अभिन्ननिमित्तोपादानकारणत्वम्

अथ ब्रह्मण: अभिन्ननिमित्तोपादानकारणत्वं निरूप्यते. भगवान् बादरायणो मुनि: ''**औपनिषदं पुरुषं पृच्छामि**'' इत्यादिश्रौतासाधरणनिर्देशै: वेदान्तैकवेद्यतया अवगतं ब्रह्म ''**अथातो ब्रह्मजिज्ञासा**'' इति जिज्ञास्यतया प्रतिज्ञाय, तदवच्छेदकापरिचये तस्य दुरवगमत्वात् तदवगमाय ''**तद्विजिज्ञासस्व**'' इति

श्रुतौ निर्दिष्टप्रतिनिर्देशकेन 'तत्'शब्देन ''**यतो वा इमानि भूतानि जायन्ते**'' इत्यादि पूर्ववाक्यप्रतिपन्नस्य अभिन्ननिमित्तोपादानत्वरूपकारणत्वस्यैव जिज्ञास्य-तावच्छेदकत्वप्रतिपत्तेः इहापि तदेव तदच्छेदकं दर्शयितुं ''**जन्माद्यस्य यतः**'' इति असूचयत्. अत्र लयाधारत्वोक्त्या उपादानत्वं पञ्चम्या निमित्तत्वं च ब्रह्मणो अवगम्यते. उपरि ''**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्**'' इति सूत्रकारो ब्रह्मणः उपादानत्वं निमित्तत्वं च सप्रमाणं न्यरूपयत्. तदेतत् सम्भवदाक्षेपनिरासपूर्वकं प्रतिष्ठाप्यते.

**आक्षेपः**

ननु न निमित्तत्वम् उपादानत्वं च एकस्य सम्भवति. तयोः भिन्नाश्रयवृत्तित्वनियमात्. अतएव हि समवायिकारणभेदघटितं निमित्तकारणल-क्षणं न्यायविदो विदन्ति ''समवाय्यसमवायिभिन्नं कारणं निमित्तकारणम्'' इति. समवायिकारणोपादानशब्दयोः एकविषयत्वं च प्रसिद्धम्. घटादिनिमित्तकार-णादेः तदुपादनभूतमृदादेः च भेदः प्रत्यक्षेण अवगम्यते. अतएव न श्रुतिभिरपि तत्सिद्धिः, प्रत्यक्षादिविरुद्धे तासां तात्पर्यायोगात्.

एवञ्च ब्रह्म न निमित्तम्, उपादानत्वाद्, मृदादिवत्; ब्रह्म न उपादानं, निमित्तत्वाद्, दण्डवद् इति अनुमानाभ्यां तयोः भिन्नाश्रयकत्वं निश्चीयते. श्रुतिस्तु ''**मायान्तु प्रकृतिं विद्यात् मायिनन्तु महेश्वरम्**'' इति मायामायिनोः उपादाननिमित्तयोः भेदं वदन्ती तयोः उपादानत्व-निमित्तत्वयोः स्वस्वाश्रयप्रतियोगिकभेदव्याप्यत्वं वह्नित्व-जलत्वयोरिव अवगमयति इति चेत्, समाधानम् उच्यते.

**समाधानम्**

न निमित्तोपादानयोः भेदः प्रत्यक्षानुमानाभ्याम् अवगन्तुं शक्यते, घटादिनिमित्तस्यापि दण्डादेः रूपाद्युपादानत्वस्य प्रत्यक्षेणैव अवगमात्. अथ तदुपादानभेदः तन्निमित्ते विवक्षितः, अतो न दण्डाद्यव्याप्तिः. न वा ब्रह्मणि तत् सम्भवः, तस्य एकं प्रत्येव उपादानत्व-निमित्तत्वयोः स्वीकाराद्

इति चेद्, मैवम्. तथा सति ध्वंसं प्रति दण्डादेः निमित्तत्वाभावप्रसङ्गः, तदुपादानाप्रसिद्ध्या तद्घटितलक्षणाप्रसिद्धेः. कालघटसंयोगादिकं प्रति कालस्य निमित्तत्वाद् उपादानत्वात् च तत्र अव्याप्तिश्च.

**आक्षेपः**

अथ स्यात् तन्निरूपितोपादानकारणताभिन्नकारणत्वं तन्निरूपितनिमित्तत्वम् इति विवक्षितम्. तद्भेदश्च तदवच्छेदकभेदात्. अस्ति च अवच्छेदकद्वयं कालघटसंयोगादौ समवायेन कार्यं प्रति तादात्म्येन द्रव्यत्वेन हेतुतया द्रव्यत्वस्य उपादानतावच्छेदकत्वात्, कार्यत्वावच्छिन्नं प्रति कालत्वेन कालस्य हेतुतया कालत्वस्य निमित्ततावच्छेकत्वाद् उपाधेयसंस्कारेऽपि उपाधेः असंस्काराच्च. अतो न कालाद्यव्याप्तिः. अतएव न दण्डाद्यव्याप्तिरपि. रूपघटाद्युपादनता-निमित्ततावच्छेदकयोः द्रव्यत्व-दण्डत्वाद्योः भेदेन तद्गतोपादानत्व-निमित्तत्वयोरपि भेदात्. उपादानकारणतानवच्छेदकधर्मावच्छिन्नकारणत्वं निमित्तत्वम् इति स्वीकाराच्च न ध्वंसं प्रति दण्डादेः निमित्तत्वानुपपत्तिः. दण्डत्वस्य क्वापि उपादानतानवच्छेदकत्वाद् इति.

**समाधानम्**

उच्यते. एवं हि ब्रह्मण्यपि न उपादानत्व-निमित्तत्वयोः विरोधः. तस्य चिदचिद्विशिष्टत्वेन उपादानोपादानत्वात् सङ्कल्प-विशिलिष्टस्वरूपेण निमित्तत्वात् च. तत्तदवच्छेदकभेदप्रयुक्त-तद्भेदस्य तत्रापि निष्प्रत्यूहत्वाद् इति.

अथ प्रकृत्यधिकरणार्थः सङ्गृह्यते : ''**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधात्**''तइ७०८कै१४. **ब्रह्म प्रकृतिश्च** उपादानकारणञ्च. न **निमित्तकारणमात्रं ब्रह्म, उपादानकारणं च ब्रह्मैव** इति अर्थः. कुतः ? **प्रतिज्ञादृष्टान्तानुपरोधात्. तथा सति हि प्रतिज्ञादृष्टान्तौ न उपरुध्येते न** बाध्येते. **प्रतिज्ञा तावत्** ''**स्तब्धोऽस्युत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति**'' इति एकविज्ञानेन सर्वविज्ञानविषया. दृष्टान्तश्च ''**यथा सौम्येकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्याद्**'' इति कारणविज्ञानात् कार्यविज्ञानविषयकः. यदि निमित्तकारणमेव

जगतो ब्रह्म तदा तद्विज्ञानात् न समस्तं जगत् विज्ञातं स्यात्. नहि कुलालादिनिमित्तकारणविषयकज्ञानेन घटादि: विज्ञायते. अत: प्रतिज्ञा-दृष्टान्तयो: बाधएव स्यात्. ब्रह्मण: उपादानत्वेतु उपादानभूत-मृत्पिण्डादिविज्ञानेन घटादि-तत्कार्यविज्ञानवत् निखिलजगदुपादानभूते ब्रह्मणि विज्ञाते तत्कार्यं निखिलं जगद् विज्ञातं स्यात्. कारणमेव अवस्थान्तरं प्राप्य कार्यं न द्रव्यान्तरमिति कार्यकारणरूपेण अविस्थितमृत्-तद्विकारादिनिदर्शनेन प्रतिज्ञासमर्थनात् ब्रह्मैव जगदुपादानं च इति निश्चीयते.

यत्तु निमित्तोपादनयो: भेद: श्रुत्यैव प्रतीयत इति तद् असत्. निमित्तोपादानयो: ऐक्यप्रतीते: "**उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवति**" इति. आदिश्यते प्रशिष्यते अनेन इति आदेश:. साधकतमत्वेन कर्ता विवक्षित:. आदेष्टा शासिता इति अर्थ:. "**एतस्य वा अक्षरस्य प्रशासने गार्गि**" इत्यादि श्रुते:. एवं च प्रशासितु: विज्ञानेन सर्वविज्ञानोक्त्या निमित्तोपादानैक्यं सिद्धम्. अपिच "**सदेव सौम्येदमग्र आसीद् एकमेवाद्वितीयम्**" इति प्राक्सृष्टे: एकत्वावधारणाद् 'अद्वितीय'पदेन अधिष्ठात्रन्तरनिवारणाच्च निमित्तोपादानयो: ऐक्यं सिद्ध्यति.

ननु एवं सति "विकारजननीमज्ञाम्" "गौरनाद्यन्तवती" इत्यादिभि: प्रकृते: आद्यन्तविरहेण नित्यत्वं जगदुपादानत्वं च श्रूयमाणं कथम् उपपद्यते तद् उच्यते. तत्रापि अविभक्तनामरूपं ब्रह्मैव कारणावस्थं प्रकृतिवाचकशब्देन अभिधीयते. ब्रह्मपृथक्सिद्ध्यभावात्. अपृथक्सिद्धविशेषणवाचकशब्दानां विशेष्यपर्यन्तत्वाच्च.

यत्तु एकस्य निमित्तत्वम् उपादानत्वं च न सम्भवति, एककारकनिष्पाद्यत्वं च कार्यस्य न सम्भवति, लोके तथानियमदर्शनात् इति. सकलेतरविलक्षणस्य परस्य ब्रह्मण: सर्वशक्ते: सर्वज्ञस्य एकस्यैव सर्वम् उपपद्यते. मृदादे: अचेतनस्य ज्ञानाभावेन अधिष्ठातृत्वायोगात् अधिष्ठातु: कुलालादे: विचित्रपरिणामशक्तिविर-हात् असत्यसङ्कल्पत्वाच्च तथादर्शननियम:. तथाच "ब्रह्म न उपादानं,

निमित्तत्वात्, कुलालवत्'' इति अनुमाने विचित्रपरिणामशक्तिविरहः उपाधिः. ''विमतं कार्यम् अनेककारकसापेक्षं, कार्यत्वाद्, घटवत्'' इति अनुमाने असत्यसङ्कल्पकर्तृकत्वम् उपाधिः इति उक्तं भवति. अपिच ''**अभिध्योपदेशाच्च**'' ''**सोऽकामयत**'' ''**बहुस्यां प्रजायेयेति**'' ''**तदैक्षत बहुस्यां प्रजायेय**'' इति सृष्टः ब्रह्मणः स्वस्यैव बहुभवनसङ्कल्पोपदेशाच्च ब्रह्मणः उपादानत्वं निमित्तत्वं च. स्वस्यैव बहुभवनात् उपादानत्वं निमित्तत्वम्.

अपिच ''**साक्षाच्चोभयाम्नात्**'' . न केवलं प्रतिज्ञादृष्टान्ताभिध्योपदेशादिभिः अयम् अर्थो निश्चीयते. ब्रह्मणएव निमित्तत्वम् उपादानत्वं च साक्षाद् आम्नायते ''**किं स्विद्वनं क उ स वृक्ष आसीत् यतो द्यावापृथिवीनिष्ठतक्षुः. मनीषिणो मनसा पृच्छतेदु तद् यदध्यतिष्ठद् भुवनानि धारयन्**'' (किं स्विद् वनम् = पूर्वं कुत्र स्थितः इति भावः. क उ स वृक्ष आसीत् = किम् उपादानम् इति अर्थः. यदध्यतिष्ठद् भुयनानि धारयन् = भुवनानि धारयता ईश्वरेण अधिष्ठेयम् उपकरणादिकं किम् इति अर्थः) इति प्रश्नः. ''**ब्रह्म वनं ब्रह्म स वृक्ष आसीत्. यतो द्यावापृथिवी निष्ठतक्षुः**'' . (ब्रह्म वनं = अधिकरणम्. ब्रह्म स वृक्षः = उपादानम्. निष्ठतक्षुः इति बहुत्वम् अविवक्षितम्. धाता यथापूर्वम् अकल्पयत् इति कर्त्रैक्यश्रुतेः). ''**मनीषिणो मनसा विब्रवीमि वः ब्रह्माध्यतिष्ठद् भुवनानि धारयन्**'' (भुवनानि धारयन् = ईश्वरः 'ब्रह्म'शब्दवाच्यस्वात्मानमेव अध्यतिष्ठत्. अधिष्ठेयम् उपकरणादिकमपि ब्रह्मैव इति अर्थः. एवञ्च अत्र श्रुतौ स्रष्टुः ब्रह्मणः किम् उपादानं कानि च उपकरणानि इति लोकदृष्ट्या पृष्टे सकलेतरविलक्षणस्य ब्रह्मणः सर्वशक्तियोगो न विरुध्यतइति ब्रह्मैव उपादानम् उपकरणानि च इति परिहृतम्. अतो ब्रह्मैव उभयम्.

''**आत्मकृतेः**'' ''**सोऽकामयत बहुस्यां प्रजायेय**'' इति सिसृक्षुत्वेन प्रकृतस्य ब्रह्मणः ''**तदात्मानं स्वयमकुरुत**'' इति सृष्टेः कर्मत्वं कर्तृत्वं च प्रतीयतइति आत्मनएव बहुत्वकरणात् तस्यैव निमित्तत्वम् उपादानत्वं च प्रतीयते. अविभक्तनामरूप आत्मा कर्ता, सएव विभक्तनामरूपः कार्यम्

इति कर्तृत्व-कर्मत्वयो: न विरोध:. स्वयमेव आत्मानं तथा अकुरुतेति निमित्तम् उपादानं च.

''**योनिश्च हि गीयते**'' . इतश्च जगतो निमित्तम् उपादानं च ब्रह्म यस्माद् योनित्वेनापि अभिधीयते ''**कर्तारमीशं पुरषं ब्रह्मयोनिम्**'' इति ''**यद्भूतयोर्नि परिपश्यन्ति धीर:**'' इति च. 'योनि'शब्दश्च उपादानवाचक: इति ''**यथोर्णनाभि: सृजते गृह्यते च**'' इति वाक्यशेषाद् अवगम्यते.

ननु स्वभावतो निरस्त-समस्तचेतनाचेतनवर्ति-दोषगन्धस्य निर्विकारस्य निरतिशय-ज्ञानानन्दैकस्वरूपस्य ब्रह्मण: विचित्रानन्तापुरुषार्थास्पदचिदचिन्मिश्रप्र-पञ्चरूपेण आत्मनो बहुभवनसङ्कल्पपूर्वक-बहुत्वकरणम् उपपद्यत इति शङ्कासमाधानपरं सूत्रं ''**परिणामाद्**'' इति. अत्र 'परिणाम'शब्द: सद्द्वारकपरिणामरूप-परिणामविशेषपर:. विवक्षितविशेषाभिप्रायेण 'साम्य'शब्द-प्रयोग: ''गाम् आनय''इत्यादिषु दृष्ट:. ''**शब्दादेव प्रमित:**'' - ''**धर्मोक्ते:**'' इत्यादिषु विशेषाभिप्रायेण सामान्यनिर्देश: सूत्रएव दृश्यते. इह प्रतिपन्नात् शब्दाद् इतिवद् इह प्रतिपन्नात् परिणामात् इति अर्थ:. शरीरप्रकृतिद्वारक-विकारान्वयाद् उपादानत्वम्. साक्षात् विकाराभावात् निर्विकारत्वं च ब्रह्मण: उपपद्यते.

**आक्षेप:**

ननु भाव्यवस्थाविशेषवत: प्रागवस्थायोगो हि उपादानत्वम्. प्रकृतिगतायाश्च पूर्वोत्तरावस्थाया: ब्रह्मगतत्वाभावात् कथं ब्रह्मण: उपादानत्वम् ?

**समाधानम्**

स्वाश्रयाश्रयत्वसम्बन्धेन प्रकृत्यवस्थाया: ब्रह्मगतत्वेन उपादानत्वोपपत्ते:. सद्द्वारकाश्रयस्यापि मुख्यम् आश्रयत्वं दृश्यते. यथा कुम्भोदरसम्भृतम् अम्भ: प्रति पुरषस्य. कुम्भव्यवहितस्य अम्भस: पुरुषानाधेयस्यापि स्वाधारघटधारकपुरु-

षायत्तस्थितित्वं हि दृश्यते. नच वाच्यं परम् आधारः स्वाधेयधारणोपक्षीणो, नतु व्यवहितधारणपर इति, पुरुषस्य सलिलधारणफलान्वयदर्शनात्. नहि निरुदकस्य उदकपूर्णस्य घटस्य धारणे गुरुत्वातिशयनिबन्धनश्रमातिशयो न भवति. यदि घटएव पुरुषेण धार्यते न जलं तर्हि निरम्भः कुम्भधारणइव श्रमातिशयो न स्यात्. कुम्भमात्रधारणस्य अविशेषात्. जलस्य घटसंसर्गमात्रता श्रमातिशयो न धार्यत्वात् इति चेद्, न, अन्येन धृतस्य सोदकघटस्य पाणिस्पर्शमात्रेण श्रमप्रसङ्गात्. विमतं देवदत्तधार्यं तदुपरिभागस्थत्वे सति तच्छ्रमहेतुत्वात् तुल्यगुरुत्वाश्रयसम्प्रतिपन्नपदार्थवत्. उदकविशिष्टघटो धार्यः इति श्रमातिशयोपपत्तिः अतो व्यवहितजलधारकत्वं न इति चेत्, तत्र विशेषणांशस्य उदकस्य धार्यत्वम् अस्ति न वा? न चेत्, श्रमातिशयो न स्यात्. अस्ति चेत् तद्वदेव महदाद्यवस्थाविशिष्टम् अचिद्द्रव्यं परमात्मधार्यमिति विशेषणभूत-महदाद्यवस्थाविशेषस्यापि परमात्मायत्तस्थितिकत्वात् तस्य तदाश्रय-त्वम् उपपन्नम्.

किञ्च अव्यवहितादपि व्यवहितस्यैव आश्रयत्वं मुख्यं दृश्यते. यथा आस्तरणांशुकादपि पर्यङ्कस्य, यथाच दर्भेभ्यो भूतलस्य. अव्यवहितमपि हि अंशुकं न पुरुषस्य धारकम् असामर्थ्यात्. श्वभ्रमुखपिधायकं विस्तीर्णम् अंशुकं हि न पदन्यासं धारयितुं प्रभवति. कूपाच्छादका हि दर्भाः तत्र निहितपदं पुरुषं न धारयन्ति. तस्माद् अंशुकस्य दर्भाणां च धारणासामर्थ्यात् पर्यङ्कभूतलयोरेव हि धारणसामर्थ्यात् मुख्यम् आश्रयत्वम्. आस्तरणादिकं शयानस्य पर्यङ्कसंयोगं परं निरूपणद्धि नतु आश्रयाश्रयिभावमपि. एवञ्च महदाद्यवस्थां प्रति प्रकृतेः आश्रयत्वासम्भवेन परमात्मनः सर्वशक्तेः तदाश्रयत्वं मुख्यम्. व्यवधायकसद्भावस्तु व्यवहितयोः न आश्रयाश्रयिभावविरोधी.

विमतं व्यवधायकं स्वसम्बन्धिनोः व्यवहितयोः न आश्रयाश्रयिभावविरोधि स्वाश्रितधारणसमर्थवस्तुनिष्ठव्यवधायकत्वाद् आस्तरणवत् दर्भवत् च. तथाच महदाद्यवस्थां प्रति चिदचिच्छरीरकस्य ब्रह्मणः आश्रयत्वोपपत्तेः जगदुपादानत्वं मुख्यम्. अयं श्रुतप्रकाशिकास्थो निर्वाहः.

न्यायसिद्धाञ्जने वेदान्तदेशिकैः अवस्थाश्रयः उपादानम्. आगन्तुको अपृथक्सिद्धधर्मो अवस्था. आगन्तुकत्वञ्च आश्रय-समानकालिक-प्रागभावप्रतियोगित्वम्. विशेषस्तु उत्तरोत्तरावस्थाविशिष्टस्वरूपापेक्षया तदनुगुण-नियतपूर्वभाव्यवस्थाविशिष्टं तदेव वस्तूपादानम्. यथा घटत्वावस्थाविशिष्टमृद्द्रव्या-पेक्षया पिण्डत्वावस्थाविशिष्टं तदेव द्रव्यम् उपादानम्. अविभक्ततमस्स्वरूप-प्रलयावस्थायाः महत्त्वावस्थाविशिष्ट-द्रव्यनियतपूर्ववृत्तितया प्रलयावस्थाविशिष्टस्य महत्त्वावस्थाविशिष्टं प्रति अव्यक्तत्वावस्थाविशिष्टस्यैव कारणतया अविभक्ततम-स्त्वावस्थायाः तत्कारणतानवच्छेदकत्वोक्तदोषः.

तथाच तादात्म्यापृथक्सिद्ध्यन्यतर-सम्बन्धावच्छिन्न- कार्यद्रव्यत्वाव-च्छिन्न-कार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणत्वम् उपादानत्वम् इति निष्कर्षः. अत्रच तादात्म्येन घटत्वावच्छिन्नं प्रति तादात्म्येन पिण्डत्वावच्छिन्न-स्येव तादात्म्येन स्थूलचिदचिद्विशिष्टत्वावच्छिन्नं ब्रह्म प्रति स्थूलचिदचिद्विशिष्टस्य ब्रह्मणः तादात्म्येन काणत्वम् इति एकः कार्यकारणभावः. अपृथक्सिद्धिसम्बन्धेन रूपादिकं प्रति तादात्म्येन घटादेरिव अपृथक्सिद्धिसम्बन्धेन कार्यसामान्यं प्रति तादात्म्येन ब्रह्मणः कारणत्वम् इति अपरः.

उपादानकरणताभिन्नकारणत्वं निमित्तकारणत्वं, मृद्घटादिष्वपि वस्तुतो मृदाद्यवस्थद्रव्यशरीरकस्य ब्रह्मणो घटाद्यवस्थद्रव्योपादानत्वम्. तथापि विशेषणभूतमृद्द्रव्यमात्रस्य कार्यकारणभावो लोकप्रसिद्धत्वाद् दृष्टान्तीकृतः. तत्तदवस्थद्रव्यशरीरकस्यैव ब्रह्मणः कार्यकारणभावस्तु लोकप्रसिद्धत्वाभावात् दार्ष्टान्तिकः इति प्रतिज्ञादृष्टान्तानुपरोधः. अस्मिन् सिद्धान्ते अधोनिर्दिश्यमानाः वेदान्तदेशिकश्लोकाः अनुसन्धानार्हा :

निःशेषं कार्यतत्त्वं जनयति स परो हेतुतत्त्वैः शरीरी
तत्तत्कार्यान्तरात्मा भवति च तदसौ विश्रुतो विश्वरूपः।
तेजोऽबन्नाभिधेये बहुभवनमभिध्यानलिङ्गं च दृष्टं
तस्मादीशाननिघ्नाः प्रकृतिविकृतयः स्वस्वकार्यप्रसूतौ ॥( त.मु.क. १।१५ )

अस्यैवाचिन्त्यशक्तेरखिलजनयितुः स्यादुपादानभावः
सूक्ष्माव्यक्तादिदेहः परिणमति यतोऽनेकधा स्थूलवृत्त्या॥
निष्कृष्टेऽस्मिन् शरीरिण्यमलगुणगणालङ्कृतानन्दरूपे
सम्पद्यन्ते समस्ताः समुचितगतयो निर्विकारादिवादाः॥( तत्रैव ३।२५ )

बालो युवा भवति इत्यत्र शरीरस्येव जीवस्यापि उपादानोपादेयभावः परीक्षकसम्मतः. जीवस्य तत्र आवृत्तौ बालशरीरस्य युवत्वासम्भवात्. अतो युवत्वास्थापन्नदेहं प्रति बालत्वावस्थापन्नदेहस्य उपादानत्ववत् स्वाश्रयाधिष्ठातृसम्बन्धेन युवत्वविशिष्टजीवं प्रति तेनैव परम्परासम्बन्धेन बालत्वविशिष्टो जीवः उपादानम् इत्येष्टव्यम्. तद्वदेव परमात्मनः तत्र सम्बन्धाभावे तत्तदवस्थोत्पत्तेः असम्भवस्य प्रामाणिकत्वात् अयं तत्र कारणम् इति स्वाश्रयाधिष्ठातृजीवाधिष्ठातृसम्बन्धेन युवत्वविशिष्टं प्रति तेन सम्बन्धेन बालत्वविशिष्टः उपादानम् इत्यपि इष्यते. एवं सद्द्वारकम् अवस्थाश्रयः उपादानम् उपादेयं च.

कर्तोपादानमेव स्वसुखमुखगुणे स्वप्रयत्नप्रसूते
संयोगं स्वस्य मूर्तौः स्वयमुपजनयन् ईश्वरोऽप्येवमिष्टः।
सर्वोपादानभावस्तत इह घटते सर्वकर्तर्यमुष्मिन्
सर्वश्रुत्यैकरस्यप्रणयिभिरुचितं द्वारमत्राभ्युपेयम्॥( तत्रैव ३।२६ )

साविद्यं केऽपि सोपाधिकमथ कतिचित् शक्तिभिर्जुष्टमन्ये
स्वीकृत्यैकाद्वितीयश्रुतिमपि जगदुस्तद्विशिष्टैक्यनिष्ठाम्।
नित्यत्वं विग्रहत्वं प्रकृतिपुरुषयोर्हेतुतां विश्वकर्तुः
तद्वैशिष्ट्यं च शास्त्रप्रथितमजहतां कोऽपराधोऽतिरिक्तः॥( तत्रैव ३।२७ )

# चर्चा

## परमाणुकारणवादपरिशीलनं ब्रह्मणः अभिन्ननिमित्तोपादानत्वं च

**प्रो. रामानुज ताताचार्य**

**पा. ना. द्विवेदी :** ''**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधाद्**'' इति सूत्रे ब्रह्म प्रकृतिः उपादानं ब्रह्म च चिदचिद्विशिष्टं, तर्हि एकविज्ञानेन सर्वविज्ञानं भवति इति प्रतिज्ञा. दृष्टान्तश्च तत्र मृद्घटादीनां दत्तम्. किन्तु ब्रह्मणो विकारो न भवति शरीरस्य विकारो भवद्भिः अङ्गीक्रियते. अचिदंशस्य विकारो नतु ब्रह्मणः. तर्हि कथं शरीरविकारस्य आत्मविज्ञानेन गृहणं भविष्यति? न हि आत्मज्ञानेन शरीरविकाराः केनचिद् विज्ञायन्ते. तर्हि कथम् उपपत्तिः भविष्यति इति मया जिज्ञास्यते.

**रा. ताताचार्य :** एकविज्ञानेन इत्यत्र 'एक'शब्दः कारणावस्थब्रह्मपरः. ''**सदेव सौम्येदमग्र आसीद् एकमेवाद्वितीयं ब्रह्म**'' इत्यत्र 'एकम्' इति शब्दो वर्तते किल. सः 'एक'शब्दः ''**बहुस्यां प्रजायेय**'' इत्यत्र यद् बहुत्वम् अस्ति तत्प्रतियोगिभूतम् एकत्वम् अत्र वर्तते. पूर्वम् एकम् आसीद् इदानीं बहु अभवत्. अत्र 'बहुत्वं' नाम ब्रह्मणः एकस्यैव बहुत्वम् इति न अर्थः. बहुत्वं नाम बहुविधः प्रपञ्चशरीरकत्वमेव बहुत्वम्. ''बहुस्याम्''इति. अत्र स्थूलचिदचिद्विशिष्टत्वमेव 'बहु'पदेन विवक्षितम्. तत्प्रतिसम्बन्धिवाचकः 'एक'शब्दः सूक्ष्मचिदचिद्विशिष्टो ब्रह्मपरः. एवञ्च ''**येनाश्रुतं श्रुतं भवति**'' इत्येव वर्तते. 'एकेन' इति नास्ति. तत्र 'येन' सच्छब्दवाच्येन श्रुतेन अश्रुतं श्रुतं भवति, 'अश्रुतं श्रुतं' इति पदद्वयम्

अस्ति तत्र. एवञ्च अश्रुतोऽपि उपपादनीयं श्रुतोऽपि उपपादनीयम्. यच्छब्द: सूक्ष्मचिदचिद्विशिष्टब्रह्मपर:. सूक्ष्मचिदचिद्विशिष्टे ब्रह्मणि ज्ञाते सति विशिष्टान्तर्गत: चिदचिदात्मक: प्रपञ्चोऽपि ज्ञातएव. तस्मिन् ज्ञाने चिदचिदात्मक: प्रपञ्चो ज्ञातो भवति. परन्तु स्थूलाकारेण न ज्ञायते. अतएव अश्रुतं श्रुतमिति स्थूलाकारेण अज्ञातमपि सूक्ष्मतया ज्ञातं भवति. तयो: द्वयो: पदयो: अभिप्राय:...

**च. शे. शुक्ल :** ''एकविज्ञानेन'' इत्यत्र ज्ञानं निर्विशेषस्य ब्रह्मण: सविशेषस्य ब्रह्मणो वा ?

**रा. ताताचार्य :** सविशेषस्यैव ब्रह्मण:. सजातीयविजातीयस्वगतभेदवर्जितं निर्विशेषम् उच्यते किल. एतेषां मते आत्मत्वेन सजातीया: जीवा: भवन्ति. विजातीयं जगत् प्रपञ्च: भवति. स्वगतत्वेन सर्वज्ञत्वादिगुणा:. एवञ्च सजातीयविजातीयस्वगतभेदविशिष्टं ब्रह्मैव अत्र सर्वदा वर्तते. परन्तु शरीरभूत: प्रपञ्च: वर्तते तत्र चेतनात्मक: प्रपञ्च: संसारदशायां सङ्कुचितज्ञानं भवति. एवञ्च ''एकविज्ञानेन सर्वविज्ञानं''नाम सूक्ष्मचिदचिद्विशिष्टब्रह्म-विज्ञानेन सर्वस्य चिदचिदात्मकस्य प्रपञ्चस्य ज्ञातता भवति. तस्मिन् ज्ञाने सर्वोऽपि विषयो भवति इति उच्यते.

**पा. ना. द्विवेदी :** एवं एकविज्ञानेन सर्वविज्ञानम् इति प्रतिज्ञानुरोधात् कथं न सर्वमेव ब्रह्मस्वरूपम् इति अङ्गीक्रियते ? तेन सुतरां प्रतिज्ञा समञ्जसा भवतु ?

**पा. ना. द्विवेदी :** सर्वमेव ब्रह्मरूपम् इति कृत्वा एकविज्ञानेन सर्वविज्ञानस्य उपपत्ति: जायते, अधिष्ठानस्यापि उपपत्ति: जायते तर्हि शरीरशरीरीभावकल्पना अनर्था इति मम भाति.

**रा. ताताचार्य :** तत्तु श्रुतिबलात् अङ्गीकृतम् अस्माभि:. अन्तर्यामिब्राह्मणे ''**यस्य पृथिवी शरीरम्**'' इत्यारभ्य सर्वाणि चेतनवस्तुनिर्दिश्य शरीरत्वम् उक्तम्. ''**यस्यात्मा शरीरम्**'' तत् सर्वं श्रुतिबलात् सिद्धम्.

**पा. ना. द्विवेदी :** श्रुतिरेव मया प्रमाणीक्रियते. ''**अकायमव्रणमस्नाविरं**

शुद्धमपापविद्धम्'' तत्र स्थूलशरीरस्य, सूक्ष्मशरीरस्य कायस्य प्रतिषेधः क्रियते. एका श्रुतिरस्ति **''यस्य पृथिवी शरीरम्''** अन्तर्यामिब्राह्मणम् आदाय शरीरशरीरीभावस्य कल्पना क्रियते. किन्तु अन्यत्र बहुतरस्थलेषु शरीरशरीरीभावस्य प्रतिषेधोऽपि क्रियते...

रा. ताताचार्य : इमाः शङ्काः बहुधा परिहृता वर्तन्ते.

सी. एच्. दवे : अन्यत्रापि **''अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः''**.

रा. ताताचार्य : एताः शङ्काः **''एको यस्यास्ति देहः स भवति विविधानन्तदुःखोपभोक्ता, विश्वं विष्णोः शरीरं... अनन्तदुःखभाक् भवेत्''**. एकः शरीरः यस्य वर्तते सएव अनन्तदुःखभाग् भवति. विश्वं शरीरं चेत् सर्वदुःखभाग् भविष्यति. इयं शङ्का परिहृता बहुधा. सः अन्तर्यामितया सर्वत्र तिष्ठति. सर्वत्र तिष्ठतोऽपि तत्तद्गतैः दोषैः असंस्पृष्टएव सो भवति इति **''एष त आत्मा अन्तर्याम्यमृतः''** इति प्रतिपर्यायम् अन्तर्यामित्वे सत्यपि शरीरान्तवर्तित्वनिमित्तको दोषो नास्ति इति सूचयितुम् 'अमृत'पदम् उक्तम्. अस्माकन्तु शरीरसम्बन्धः कर्मवशात् दुःखं जनयति. कर्मकृतशरीरसम्बन्धो अस्माकम्. ईश्वरस्तु कर्मणा न शरीरान्तर्वर्ति भवति. सतु स्वेच्छया नियमनार्थं शरीरन्तर्वर्ति भवति. अतः **''अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः''** इत्यत्र कर्मकृतशरीरवन्तमेव प्रियाप्रिये स्पृशतः, कर्मकृतशरीररहितन्तु न प्रियाप्रिये स्पृशतः इति तस्य अर्थः.

प्रह्लादाचार : द्वैतदर्शने निमित्तत्वमात्रम् अङ्गीक्रियते ब्रह्मणो, नतु उपादानत्वम्. अद्वैतसिद्धान्ते तु अभिन्ननिमित्तोपादानत्वम् अङ्गीक्रियते. उपादानत्वञ्च तत्र विवर्तोपादानत्वं नतु परिणाम्युपादानत्वम्. विशिष्टाद्वैतदर्शने परिणाम्युपादानत्वं निमित्तत्वं च ब्रह्मणो अङ्गीक्रियते. तत्र परिणाम्युपादानत्वं परिष्क्रियते. परिणामो नाम न स्वरूपविकारः. ततश्च तादृशावस्थाविशिष्टत्वरूपं

परिणामित्वं निमित्तत्वम् उभयमपि एकस्मिन् ब्रह्मणि भवति इति अङ्गीक्रियते. तत्र विकारश्च वस्तुतः प्रकृतौ भवति. चिदचिदोः भवति. चिदचिदोः साक्षात्सम्बन्धेन विकाराश्रयत्वं...

**बी.आर्.शुक्ल** : नास्ति.

**प्रह्लादाचार** : तथा अङ्गीक्रियते.

**बी.आर्.शुक्ल** : न अङ्गीक्रियते. साक्षात्सम्बन्धेन विकाराश्रयत्वं न अङ्गीकृतम्.

**प्रह्लादाचार** : परम्परासम्बन्धेन भगवतः, शरीरभूतस्य सूक्ष्मचिदचिद्रूपजगतस्तु साक्षात्सम्बन्धेन विकाराश्रयत्वम्. परम्परासम्बन्धेन विकाराश्रयत्वम् अन्तर्यामिभूतस्य ब्रह्मणः. साक्षात्सम्बन्धेन विकारशून्यत्वात् निर्विकारत्वम्. परम्परासम्बन्धेन विकाराश्रयत्वाद् उपादानत्वम्.

**बी.आर्.शुक्ल** : अभिन्ननिमित्तोपादानत्वं वर्तते.

**प्रह्लादाचार** : जीवस्य सङ्कोचविकासौ अङ्गीकृतौ धर्मभूतज्ञानस्य...

**रा. ताताचार्य** : जीवे यद् धर्मभूतज्ञानम् अस्ति, गुणभूतं यद् ज्ञानम् अस्ति तस्यैव ज्ञानस्य सङ्कोच-विकासौ अङ्गीक्रियते.

**बी.आर्.शुक्ल** : तत्र एकं वक्तव्यम् ...

**प्रह्लादाचार** : अध्यक्षवर्याः! मया न समापितम्. अनन्तरं वक्तव्यं भवद्भिः. जीवस्वरूपं निर्विकारमेव अथापि जीवस्य धर्मभूतज्ञानं यद् भवति तच्च ज्ञानं जीवस्वरूपापेक्षया भिन्नं भवति, जीवेन अपृथक्सिद्धं, जीवाश्रितं च.

**रा. ताताचार्य** : जीवस्वरूपापेक्षया भिन्नम् आश्रितञ्च. जीवस्वरूपमपि ज्ञानस्वरूपमेव.

**प्रह्लादाचार** : जीवो ज्ञानस्वरूपं ज्ञानाश्रयश्च. धर्मिभूतस्य जीवस्य विकारो नास्ति. तद्धर्मभूतस्य ज्ञानस्य सङ्कोचविकासौ भवतः. संसारदशायां सङ्कोचो भवति मुक्तदशायां विकासो भवति. एवं रीत्या विकारस्तु स्वरूपे नास्ति किन्तु तद्धर्मे कश्चन अङ्गीक्रियते. एतादृशं विकारित्वं चितो अस्ति. अचितस्तु विकारः साक्षादेव वर्तते. एवं रीत्या साक्षाद्विकाराश्रयत्वं चिदचिदोः भवति. तदद्वारा भगवतो विकाराश्रयत्वम्. दृष्टान्तः तत्र दत्तः. कुम्भस्य

जलाधारत्वं, तादृशकुम्भाधारत्वं पुरुषस्य. एवं परम्परासम्बन्धेन जलाधारोऽपि पुरुषः साक्षाज्जलाधारइव व्यवह्रियते. जलाश्रयत्वं मुख्यमेव पुरुषे व्यवह्रियते यथा तथैव विकाराश्रयत्वमपि-परिणामाश्रयत्वमपि ब्रह्मणः परंपरासम्बन्धेन विद्यमानमपि तद् मुख्यम् इति उच्यते. मुख्यत्वोपपादनार्थम् अयं दृष्टान्तो दत्तः. तत्र स्वरूपविकारस्तु सर्वथा ब्रह्मणि नास्ति. निर्विकारश्रुतिः अतएव तत्र नैव बाधिता भवति. एवं रीत्या सिद्धान्तो निरूपितः. द्वैतदर्शने एतत् सर्वम् अङ्गीक्रियते, प्रकृतेरेव विकारः परन्तु जीवस्वरूपस्य धर्मभूतज्ञानं किञ्चिद् वर्तते इति तु न अङ्गीक्रियते. जीवएव ज्ञानस्वरूपो भवति. तत्र ज्ञानस्वरूपे जीवे विकारः सर्वथा नास्ति. अतो यथा ब्रह्मणो निर्विकारत्वं तथा जीवचेतनस्यापि सर्वथा निर्विकारत्वमेव. अचितस्तु प्रकृतेः विकारो वर्तते. तादृशप्रकृत्यधिष्ठातृत्वं ब्रह्मणः स्वीक्रियते. एतत् सर्वम् अङ्गीक्रियते परन्तु परिणामित्वम् इति तु न उच्यते. शब्दप्रयोगः न क्रियते. विषये तु विवादो नास्ति. किन्तु एकविज्ञानेन कथं सर्वविज्ञानम् इत्यादि अन्यथैव उपपाद्यते. प्रधानविज्ञानेन अप्रधानविज्ञानं भवति इति प्रकारान्तरेण श्रुत्यर्थो निरूपितः. एवञ्च प्रमेये विरोधो नास्ति. निरूपणप्रकारो विलक्षणो भवति. तथापि अन्ते तावत् तादात्म्यापृथक्सिद्धिः एतदन्यतरसम्बन्धावच्छिन्नकार्यद्रव्यत्वावच्छिन्नकार्यतानिरूपित तादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वं उपादानत्वम्. एतादृशन्तु उपादानत्वं ब्रह्मणो वर्तते इति यद् उक्तं तस्मिन् विषये कापि जिज्ञासा भवति. तत्र तादात्म्यसम्बन्धो नाम स्ववृत्त्यसाधारणधर्मवत्त्वम् इति उक्तम्. एवञ्च स्ववृत्त्यसाधारण-धर्मवत्त्वाच्छिन्न-कार्यद्रव्यत्वावच्छिन्न-कार्यतानिरूपित- तादा-त्म्यसम्बन्धावच्छिन्न-कारणताश्रयत्वं ब्रह्मणो वक्तव्यं भवति. अत्र क्लेशो भवति : स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यद्रव्यम्. स्ववृत्त्यसाधारणधर्मो नाम स्थूलचिदचिद्विशिष्टत्वम्. एवञ्च

स्थूलचिदचिद्विशिष्टत्वरूप-तादात्म्यसम्बन्धावच्छिन्न- तादृशब्र-ह्मत्वावच्छिन्नकार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्न- कारणताश्रयत्वं वाच्यम्. कारणतावच्छेदकसम्बन्धो यः तादात्म्यसम्बन्धो भवति सः सूक्ष्मचिदचिद्विशिष्टत्वरूपो धर्मः. सूक्ष्मचिदविशिष्टत्वावच्छिन्नकारणताश्रये ब्रह्मणि स्थूलचिदचिद्विशिष्टत्वावच्छिन्न-कार्यद्रव्यत्वावच्छिन्न-कार्यतानिरूपितत्वं कथम् उपपद्यते? तथा सति सूक्ष्मचिदचिद्वैशिष्ट्यवति ब्रह्मणि तादृश सूक्ष्मचिदचिद्वैशिष्ट्याश्रये ब्रह्मणि स्थूलचिदचिद्वैशिष्ट्याश्रयत्वम् उक्तं स्यात्. तत्र कार्यतावच्छेदक-कारणतावच्छेदकधर्मयोः सम्बन्धयोः स्थितिः आवश्यकी खलु? अयं सम्बन्धः तत्र नास्ति. सूक्ष्मचिदचिद्विशिष्टत्वावच्छिन्ने ब्रह्मणि स्थूलचिदचिद्विशिष्टत्वावच्छिन्नत्वं तादृशसम्बन्धाश्रयत्वं नास्ति. ततश्च तादृशसम्बन्धावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं कथं भवति? इति एको अयं प्रश्नः. अन्यश्च प्रश्नो अयं भवति : अपृथक्सिद्धिसम्बन्धावच्छिन्न-कार्यद्रव्यत्वावच्छिन्नकार्यतानिरूपित-कारणताश्रयत्वम् उक्तम्. तत्र अपृथक्सिद्धिसम्बन्धेन जगद् ब्रह्मणि भवति इति वक्तव्यम्. अपृथक्सिद्धिसम्बन्धावच्छिन्न-एतादृशजगत्त्वावच्छिन्न-कार्यता-निरूपितकारणताश्रयत्वं तादात्म्यसम्बन्धावच्छिन्नकारणताश्रयत्वं ब्रह्मणि: परन्तु लोके अपृथक्सिद्धिसम्बन्धेन यत् कार्यं भवति तत् कार्यं कारणेन सह अभिन्नं दृश्यते.

**च. शे. शुक्ल :** अभिन्नं न. समवायो अपृथक्सिद्धिः.

**प्रह्लादाचार :** समवायो अपृथक्सिद्धिः न उच्यते. समवायः खण्ड्यते, निराक्रियते.

**रा. ताताचार्य :** जगद्ब्रह्मणोः भेदं स्वीकृत्य अयं प्रश्नः.

**प्रह्लादाचार :** सत्यम्. अतएव अयं प्रश्नो भवति. तत्र कार्यद्रव्यं नाम घटत्वं भवति. अपृथक्सिद्धि-सम्बन्धावच्छिन्न-घटत्वावच्छिन्नकार्यतानिरूपित -तादात्म्यसम्बन्धावच्छिन्न-

कारणताश्रयत्वं मृदः. मृद्धटयोश्च अभेदः. कारणकार्ययोः अभेदो अङ्गीकृतः. तत्तु युज्यते. परन्तु जगति अपृथक्सिद्धिसम्बन्धावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वं यदा ब्रह्मणः उच्यते तर्हि जगद्ब्रह्मणोरपि अभेदः स्वीकर्तव्यः, मृद्धटयोरिव. तत्रतु भेदः स्वीकृतो वर्तते.

**रा. ताताचार्य :** प्रश्नद्वयम् उपस्थापितम्. स्थूलचिदचिद्विशिष्टं ब्रह्म प्रति सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम् इति एकः पक्षः. चेतनाचेतनात्मकजगत् प्रत्येव सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम् इति अपरः पक्षः. प्रथमपक्षे कार्यं कारणञ्च एकमेव, अवस्थयोरेव भेदः. स्थूलचिदचिद्विशिष्टं प्रति सूक्ष्मचिदचिद्विशिष्टत्वम्. यथा मृत्त्वं घटत्वम् इति अवस्थयोः भेदः. आश्रयं वस्तु एकमेव. तद्वद् अत्रापि अवस्थयोरेव भेदः आश्रयं वस्तु एकएव, प्रथमपक्षे. द्वितीयपक्षे तु जगद् भिन्नमेव ब्रह्म भिन्नमेव. भिन्नयोरेव अत्र उपादानत्वं स्वीकृतम्. तद् उच्यते : अपृथक्सिद्धसम्बन्धो निवेशितः. तत्र दृष्टान्ततया घटरूपं प्रति घट इति उक्तम्. अत्र प्रश्नः तैः कृतः. तादात्म्यं नाम किम्? इति. तादात्म्यम् इति यः सम्बन्धः उक्तः सतु गदाधरभट्टाचार्येण **"स्ववृत्त्यसाधारणो धर्मः"** इति तैः उक्तम्. तत्र सपक्षो यदि स्वीक्रियते तर्हि कार्यतावच्छेदकसम्बन्धः तादात्म्यं स्थूलचिदचिद्विशिष्टब्रह्मगतः. तादात्म्यं नाम तद्वृत्त्यसाधारणधर्मः स्थूलचिदचिद्विशिष्टत्वरूपधर्मः. कारणतावच्छेदकसम्बन्धे तु तादात्म्यं सुक्ष्मचिदचिद्विशिष्टत्वरूपधर्मः...... भवति. एवञ्च कार्यतावच्छेदकसम्बन्धो अन्यः, कारणतावच्छेदकः सम्बन्धो अन्यः इति प्रश्नः. अत्र अस्माभिः उच्यते, तादात्म्यं नाम स्ववृत्त्यसाधारणधर्मः इत्यादिरूपेण न उच्यते. अयं कश्चित् सम्बन्धविशेषः. धर्मिणः एकत्वं यत्र वर्तते तत्र तादात्म्यं नाम कश्चन सम्बन्धविशेषः. एवं अपृथक्सिद्धिरपि समवायातिरिक्तसम्बन्धः. पृथग्व्यवहारानर्हः कश्चित् संश्लेशवि-

शेषो अपृथक्सिद्धिः इति स्वीक्रियते. तथाच इदानीं विशेषणभूतजगतं सन् प्रत्यपि कारणत्वं वक्तव्यम् इति न विलक्षणत्वाधिकरणे ''**असदितिचेन् न प्रतिषेधमात्रत्वात्**'' इति सूत्रे कार्यकारणयोः उभयोरपि ऐक्यं वर्तते. परन्तु तस्य अधिकरणस्य विषयस्तु विलक्षणयोरपि कार्यकारणभावो भवितुम् अर्हति इति तत्र साध्यते. एवञ्च विलक्षणयोरपि कार्यकारणभावः इति साध्यते तर्हि कार्यस्य ब्रह्मणो विलक्षणत्वं सूत्रकाराभिमतं प्रतीयते. तं सिद्धान्तम् अवलम्ब्य विलक्षणयोः जगद्ब्रह्मणोः कार्यकारणभावलक्षण-शरीरशरीरीभावे सत्यपि जगद्विलक्षणस्य ब्रह्मणो जगत् प्रति उपादानकारणत्वसमर्थनार्थम् अपृथक्सिद्धि-म्बन्धं निवेश्य कार्यकारणभावः. परन्तु ''**असदिति चेन्न प्रतिषेधमात्रत्वाद्**'' इति सूत्रे यदि विलक्षणयोः कार्यकारणभावः स्वीक्रियते तर्हि कार्यं कारणाद् विलक्षणं भवति. तर्हि विलक्षणस्य कार्यस्य उत्पत्तिः यदि स्वीक्रियते कार्यात् पूर्वं कारणं नासीदिति किल आगतम्. अतो असत्कार्यवादः प्रसज्यते इति आशङ्क्य विलक्षणयोः कार्यकारणभावः न भवति इति यद् उक्तं तस्य प्रतिषेधार्थम् अस्माभिः उक्तं भवति इति. तावता तु कार्यकारणयोः ऐक्यन्तु न अस्माकं सम्मतमेव... तत्र वर्तते. एवमेव ''**असद्व्यपदेशान्नेति चेन्नः धर्मान्तरेण वाक्यशेषात्**'' ''**युक्तेः शब्दान्तराच्च**'' इति सूत्रयोः कार्यं रूपान्तरेण असत् रूपान्तरेण सत्. अतो रूपभेदएव भवति धर्मितु सर्वथा अनुवर्तते इति कार्यकारणयोः धर्मिणोः ऐक्यं स्वीकृतम्. सएव मुख्यः पक्षः इति अभिप्रायः.

# कार्यकारणभावविषये विशिष्टाद्वैतिनां सिद्धान्तः

डॉ. के. ई. देवनाथन्

विशिष्टाद्वैतवेदान्ते कार्यकारणयोः अभेदः उच्यते. यथा मृदः कारणस्य कार्यस्य घटस्य च अभेदः. तत्र प्रमाणं "मृदयं घटः" इति प्रामाणिकानाम् अनुभवएव. तार्किकाः कार्यकारणयोः अभेदं निराकुर्वन्तः एतानि अनुमानानि प्रयुञ्जते. अत्र 'कारण'शब्देन उपादानकारणं विवक्षितम्. कार्यं कारणात् न अभिन्नं विलक्षणबुद्धिबोध्यत्वात्[१] विलक्षणशब्दवेद्यत्वात्[२] विलक्षणकार्यकारित्वात्[३] भिन्नकालिकत्वात्[४] भिन्नाकारवत्त्वात्[५] कारणसत्ता-समानकालिक-नाशप्रतियोगित्वात्[६] भिन्नसङ्ख्यावत्त्वात्[७] कारणसत्ता-समानकालीन-कारकव्यापार-प्रयोज्यत्वात्[८] च. अत्र तानि अनुमानानि विशदीकृत्य विशिष्टाद्वैतिनां समाधानं प्रदर्श्यते.

१. विलक्षणबुद्धिबोध्यत्वात् : 'तन्तवः'इति कारणे बुद्धिः जायते, 'पट'इति च कार्ये बुद्धिः. तेन तयोः भेदः आवश्यकः. नहि लोके विलक्षणप्रतीतिविषययोः घटपटयोः ऐक्यं दृश्यते.
२. विलक्षणशब्दवेद्यत्वात् : 'पट'इति कार्ये शब्दः प्रयुज्यते, 'तन्तव'इति कारणे. अतः तयोः भेदः सिद्धः.
३. विलक्षणकार्यकारित्वात् : घटेन कार्येण उदकम् आह्रियते न तथा कारणेन मृदा, एवञ्च तयोः भेदः सिद्धः.
४. भिन्नकालिकत्वात् : कारणं तन्तवः पूर्वकालवृत्तित्वमन्तः, पटस्तु तदनन्तरकालवृत्तिः, कथम् अनयोः अभिन्नत्वम्?
५. भिन्नाकारत्वात् : कार्यस्य घटस्य आकारः पृथुबुध्नोदरत्वम्, कारणभूतायाः मृदः ततो भिन्नः आकारइति तयोः न ऐक्यम्.
६. कारणसत्ता-समानकालिक-नाशप्रतियोगित्वात् : सत्यामेव मृदि "घटो

नष्टः'' इति व्यवह्रियते. यदि मृद्घटयोः ऐक्यं स्यात् तदा मृदि सत्यां ''घटो नष्टः'' इति व्यवहारो न स्यात्.

७. कारणसत्ता-समानकालीन-कारकव्यापार-प्रयोज्यत्वात् : कारणस्य सत्ता-काले कारकव्यापारेण कार्यं निष्पद्यते. यदि कार्यकारणयोः अनन्यत्वं स्वीक्रियते तदा कार्यस्य कारणसत्त्वकालएव सत्त्वात् तदुत्पत्यर्थं कारकव्यापारः व्यर्थः स्यात्.

८. भिन्नसङ्ख्यावत्त्वात् : एकः पटः, बहव तन्तवः इति कार्यकारणयोः सङ्ख्याभेदो दृश्यते. यदि तयोः ऐक्यं स्वीक्रियते, विरुद्धं एकत्व-बहुत्वरूपसङ्ख्याद्वयं कथं तत्र उपपद्येत ?

एवमादिभिः हेतुभिः तार्किकाः उपादानकारणस्य तदुपादेयस्य च भेदं समर्थयन्ति.

**विशिष्टाद्वैतिनां सिद्धान्तः**

विशिष्टाद्वैतिनस्तु कार्यकारणयोः अनन्यत्वम् उररीकुर्वन्ति. तेषाम् अयम् आशयः : मृद्-हिरण्यादेः संस्थानान्तरभाक्त्वमात्रेण विलक्षणबुद्ध्यादयः उपपद्यन्ते इति. यथावा एकएव देवदत्तो अवस्थाविशेषैः तदा-तदा विशिष्टो 'बालो', 'युवा', 'वृद्धः' इत्यादिविलक्षणशब्दैः निर्दिश्यते तथैव मृदेव 'घट'-'शरावा'दिशब्दैः व्यपदिश्यते. एवं बुद्धिप्रभृति वैलक्षण्यमपि उपपादनीयम्.

एवं उत्पत्तिनाशादयोऽपि कारणभूतस्य वस्तुनो अवस्थाविशेषाः इति सिद्धान्तः. एवञ्च सत्यामेव मृदि ''घटो नष्टः'' इति व्यवहारो मृदमेव कपालत्वावस्थापन्नां विषयीकरोतीति न दोषः. एवं कारकव्यापारोऽपि अवस्थाविशेषरूप-भविष्यद्धर्मविशिष्ट-वस्तुप्रयोजकत्वात् सार्थकएव.

नच कार्यकारणयोः भेदः आवश्यको, अन्यथा पूर्वमेव सतः कथम् उत्पत्तिः उपपद्येत इति वाच्यं, यतः 'उत्पत्ति'र्नाम प्रथमक्षणसम्बन्धः, सच पूर्वमेव सतः कारणस्य प्राचीनावस्थाविशिष्टस्वरूपे यद्यपि बाधितः तथापि

घटत्वाद्यवस्थाविशिष्टे अबाधितः. अयं भावः : ''घटः उत्पद्यते''इति हि व्यवहारो नतु ''मृद् उत्पद्यते'' इति. तेन मृत्स्वरूपस्य आद्यक्षणसम्बन्धरूपोत्पत्तिः न विवक्षिता. यतो ''घटः उत्पद्यत'' इति व्यवहारः, ततः घटत्वावस्थाविशिष्टएव प्रथमक्षणसम्बन्धवान् इति तद्वाक्याद् बोधः. ''**सविशेषणे हि विधिनिषेधौ**'' इति न्यायेन सोत्पत्तिः अन्ततो मृद्धर्मे घटत्वएव पर्यवस्यति इति अन्यदेतत्. नच भवन्मते कार्यकारणयोः अनन्यत्वं यत् स्वीकृतम् तत्र किं शाब्दं प्रमाणामिति वाच्यं, यतो ''**वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्**'' इति श्रुतिः (छान्दो.उप.६।७) ''**मही घटत्वं घटतः कपालः कपालिका चूर्णरजः ततोऽणुः**''इति विष्णुपुराणवचनं च तत्र प्रमाणम्.

''**वाचारम्भणम्...**''इति श्रुत्यर्थः एवम् — 'आरभ्यते'=आलभ्यते स्पृश्यते इति आरम्भणम्. ''**कृत्यल्युटो बहुलम्**'' इति कर्मणि ल्युट्. 'वाचा'=वाक्पूर्वकेण व्यवहारेण हेतुना इति अर्थः. ''घटेन उदकम् आहर'' इत्यादिवाक्पूर्वको हि उदकाहरणादिव्यवहारः, तस्य व्यवहारस्य सिद्धये तेनैव मृद्द्रव्येण पृथुबुध्नोदरत्वादिलक्षणो विकारः संस्थानविशेषः, तत्प्रयुक्तञ्च 'घटः' इत्यादिनामधेयम्. स्पृश्यते उदकाहरणादिव्यवहारविशेषसिद्ध्यर्थं मृद्द्रव्यमेव संस्थानान्तरनामधेयान्तरभाक् भवति. अतो घटाद्यपि 'मृत्तिका'इत्येव सत्यं मृत्तिकादिद्रव्यम् इत्येव सत्यं प्रमाणेन उपलभ्यते इति अर्थः, नतु द्रव्यान्तरत्वेन इति (श्रीभाष्यं पृ.सं.२०६). पुराणवचनार्थस्तु स्पष्टः.

नच सत्कार्यवादो भवदिष्टः, साङ्ख्योक्ताभिव्यक्तिवादाद् भिन्नो अभिव्यक्तिपक्षः. अभिव्यक्तिपक्षइव भवन्मतेऽपि उत्पत्तिरूपावस्थायाः उत्पत्त्यन्तरापेक्षत्वे अनवस्था, उत्पत्तेः उत्पत्तिसापेक्षत्वाभावे घटादेः नित्यत्वापत्तिः इति चोद्यम् अवशिष्यते इति वाच्यं, नहि केवलाया उत्पत्तेः उत्पत्तिः उच्यते अस्मत्सिद्धान्ते. उत्पत्तिः काचिद् अवस्था. अवस्थावत्त्वं द्रव्यस्य लक्षणम्. उत्पत्तेः उत्पत्तिमत्त्वे तस्याः द्रव्यत्वं स्यात्. परं उत्पत्तिः नाम सदेव द्रव्यस्य तत्क्षणसम्बन्धिधर्मविशेषः. एवञ्च उत्पत्तिः द्रव्यस्यैव भवति न धर्मस्येति न कोपि दोषः.

नच संस्थानस्य असतः उत्पत्तौ असत्कार्यवादप्रसङ्गः इति वाच्यम्, असत्कार्यवादेऽपि उत्पत्तेः उत्पत्त्यभावे सत्कार्यवादप्रसङ्गः. उत्पत्तेः उत्पत्तिमत्त्वे अनवस्था इति प्रतिबन्धिसम्भवात्. अवस्थानां पृथगुत्पत्ति-स्थित्यादिकं नास्ति. एवञ्च अवस्थावतएव उत्पत्त्यादिकं भवति. तथाच न अनवस्थादयो दोषाः.

नच कारणस्य कार्यस्य च सङ्ख्याभेदो दृश्यते, सच तयोः भेदं विना न उपपद्यते इति वाच्यम्, बहुतन्तुकपटस्थले तन्तुषु बहुत्वं, तन्तुगतपटत्वावस्थायाम् एकत्वम् इति स्वीकारात्. भवद्भिरपि एकतन्तुना बृहता यत्र पटादिकं कृतं तत्र कारणकार्ययोः सङ्ख्याभेदस्य वक्तुम् अशक्यत्वात्. नच ''एकः पटः'' इत्यत्र स प्रयोगे एकत्वं पटत्वावस्थाविशिष्टतन्त्वन्वयि इति विवक्ष्यते वा, पटत्वान्वयि इति विवक्ष्यते वा? आद्ये बाधः, बहुतन्तुकपटस्थले तन्तुषु बहुत्वस्यैव सत्त्वात्. द्वितीयेतु एकत्वस्य एकदेशान्वये यत्र बहवो घटाः तत्र घटत्वे एकत्वान्वयतात्पर्येण ''एको घटो अस्ति'' इति प्रयोगः स्याद् इतिवाच्यम्, अगत्या द्वितीयपक्षस्य स्वीकारात्. नहि तादृशैकदेशान्वयः सर्वथा अप्रमाणिकः. नैयायिकमतेऽपि ''पश्य मृगो धावति''इत्यत्र धावनविशिष्ट-मृगकर्मक-दर्शनबोधस्य सम्भवेऽपि धावनस्य यथा कर्मत्वं पर्यवस्यति इति उच्यते तथा पटत्वविशिष्ट-तन्तुषु एकत्वेन बोधितेऽपि पटत्वे एकत्वं पर्यवस्यति इति वक्तुं शक्यत्वात्.

केचित् अवयावयविनोः भेदाभेदं स्वीकुर्वन्ति. स च चिन्त्यः पक्षः. नहि अवच्छेदकधर्मम् अन्तरेण भेदम् अभेदे च एकत्र स्वीकर्तुं शक्नुमः. समन्वयाधिकरणभाष्ये भेदाभेदवादपरिशीलनम् स्पष्टमेवेति विरम्यते अत्रः.

नच कार्यकारणयोः अनन्यत्वे ''**सर्वाग्रहणम् अवयव्यसिद्धेः धारणाकर्षणोपपत्तेः च, सेनावनवद् ग्रहणम् इति चेद् न अतीन्द्रियत्वाद् अणूनाम्**'' इत्यादिगौत्तमसूत्रोक्तदूषणानि प्रसज्यन्ते. तथाहि अवयवातिरिक्तो अवयवी यदि न स्वीक्रियते तदा द्रव्याणां परमाणुपर्यन्तत्वमेव आपतति, तेच परमाणवो महत्त्वशून्याः न प्रत्यक्षाइति कस्यापि द्रव्यस्य प्रत्यक्षं न

स्यात्. एवं धारणम् आकर्षणं च द्व्यणुकादिक्रमेण परिनिष्पन्नस्य अवयविनो अस्वीकारे दुरुपपत्ते, नहि समुदायम् आपन्नानां एकावच्छेदरहितानां तण्डुलानां धारणम् आकर्षणं वा सम्भवति, एवं परमाणूनां समूहस्य 'अवयवि'शब्दवाच्यत्वम् इत्यपि न सम्भवति, परमाणूनाम् अतीन्द्रियत्वात्. ''नहि शतमपि अन्धानां न पश्यति'' इति न्यायेन समुदायभावेऽपि प्रत्यक्षत्वानुपपत्तेः इति वाच्यम्, अस्मन्मते एतेषां दोषाणाम् अप्रसरात्. वयं हि प्रकृतिकारणतावादिनः. तत्रहि व्यापकीभूतप्रकृतेरेव कारणत्वमिति परमाणुकारणतावादोक्तदूषणं न प्रसजति. किञ्च अस्मन्मते अदृश्यः परमाणुः नैयायिकवत् कल्प्यते. प्रकृतेः कथं कारणत्वं, तस्याः कारणत्वे प्रसक्ताः शङ्काः, तत्समाधानं च विस्तरभयात् न विमृश्यते. इति शम्.

# मध्वसिद्धान्तरीत्या कार्यकारणभावविचारः

प्रो. डी. प्रह्लादाचार

नमः सदसे सदसस्पतये च. मान्याः! मया किमपि पत्रं न लिखितं वर्तते. केवलम् अत्र मध्वसिद्धान्तरीत्या कार्यकारणभावविचारः करणीयः इत्यादेशानुसारेण द्वैतसिद्धान्तदृष्ट्या विचारः क्रियते. द्वैतसिद्धान्ते कारणम् द्विविधम् अङ्गीक्रियते—१. उपादानकारणं २. निमित्तकारणं च इति.

तत्र कार्यं किं कारणेन सह सर्वथा अभिन्नं भवति उत भिन्नं भवति, किम् अयं सत्कार्यवादः उत असत्कार्यवादः इति प्रश्नेतु तेषाम् इदम् उत्तरम् भवति : अयं सदसत्कार्यवादः इति. घटस्य मृद्रूपेण सत्ता अङ्गीक्रियते. स्वोत्पत्तेः प्राक् घटः मृद्रूपेण सद् भवति. यदा कम्बुग्रीवादिमान् भवति घटः कम्बुग्रीवादिविशिष्टतया घटः पूर्वं असन्नेव. अतः केन रूपेण कार्यं असद् भवति? एवञ्च कार्यं सच्च असच्च. असन् नाम न अत्यन्तासद् इति अर्थः किन्तु कार्यं कारणात्मना तस्य सत्ताम् अङ्गीकृत्य कार्यस्य योऽयम् असाधारणं रूपं वर्तते तादृशासाधारणरूपविशिष्टतया तस्य असत्ता स्वीक्रियते.

एवं सदसत्कार्यवादो अङ्गीक्रियते. उपादानकारणं नाम परिणामिकारणम्. विवर्तोपादानकारणम् इति किमपि नाङ्गीक्रियते. शुक्तिकातो रजतम् उत्पद्यते इत्यादि व्यवहाराः न सन्ति. कारणात् कार्यम् उत्पद्यते इति व्यवहारो दृश्यते. यदि शुक्तिः रजतस्य विवर्तोपादानं भवेत् तर्हि तादृशव्यवहाराः लोके भवेयुः. परन्तु तादृशव्यवहाराः न दृश्यन्ते लोके इति हेतोः विवर्तोपादानम् इति यदि अन्ते प्रतिपाद्यते सत्कारणत्वेन न स्वीक्रियते. उपादानञ्च विकारित्वम् परिणामित्वमेव. अत्र विकारस्वरूपविमर्शः किञ्चिदिव कर्तव्यो भवति. विकारो द्विविधो भवति. विशेषाप्तिः एकविधो विकारः, विशेषिपरिवृत्तिः

इति अन्य:. विशेषाप्तिः नाम धर्मिण: तादवस्थ्ये सति धर्ममात्रपरिवृत्तिः. धर्मी तदवस्थो भवति. धर्ममात्रस्य परिवृत्तिः जायते. अयं परिणामो विकारो विशेषाप्तिरूप:. विशेषिपरिवृत्तिरूप: परिणामस्तु तत्र भवति यत्र धर्मिस्वरूपेएव विकारो भवति, धर्मिस्वरूपस्यैव परिणामो दृश्यते. उभयविधोऽपि विकारो द्विविधो भवति : १. अनिवर्त्यो अन्यथाभाव: २. निवर्त्यो अन्यथाभावः च इति.

तत्र उदाहरणानि दीयन्ते : श्यामफलस्य पीतरूपं जायते. अयञ्च विकारो विशेषाप्तिरूपो विकार:. अत्र हि फलं धर्मी. तद्वदेव भवति. धर्मिस्वरूपे विकारो नास्ति. धर्मी तथैव अवतिष्ठते परन्तु तत्र धर्माणां रूपरसादीनां विकारो भवति, परिवृत्तिः भवति. अनन्तरमपि "इदम् आम्रफलम्" इत्येव व्यवहारो भवति. ततश्च धर्मिण: तादवस्थ्यं दृश्यते धर्माणाञ्च परिवृत्तिः दृश्यते. अयञ्च अनिवर्त्य: अन्यथाभावो भवति. यतोहि पुनः श्यामरूपतापत्तिः नास्ति. यदा श्यामरूपम् अपगच्छति, रूपान्तरम् उत्पद्यते, पुनश्च श्यामरूपतापत्तिः तत्र नास्ति इति हेतोः अनिवर्त्यो अन्यथाभावो भवति. निवर्त्यो अन्यथाभावो दृश्यते कुण्डलाकारस्य सुवर्णस्य कटकादित्वं यदा भवति. तत्र पूर्वं कुण्डलाकार: आसीत् सुवर्ण:. कटकरूपता भवति. कटकरूपता पुनश्च गच्छति. कुण्डलाकारता पुनः उत्पद्यते. एवं दृश्यते लोके. इति हेतोः अयं अन्यथाभावो निवर्त्यो अन्यथाभावो भवति. उभयविधोऽपि अयं अन्यथाभावो धर्मेएव नतु धर्मिणि. धर्मिण: तादवस्थ्यम् अस्ति. धर्ममात्रे परिवृत्तिः दृश्यते. एवं विशेषिपरिवृत्तिरूपो विकारो भवति. यथा क्षीरस्य दधिभाव:. तत्र क्षीररूपं धर्मी दधिभावम् आपद्यते. अयञ्च अन्यथाभावो अनिवर्त्यो अन्यथाभावो भवति. दधि पुनः क्षीरं न भवति खलु. अतो अनिवर्त्यो अयम् अन्यथाभाव:. निवर्त्यो अन्यथाभावोऽपि दृश्यते यथा शुल्वस्य तारत्वम्. शुल्वं तावत् औषधिविशेषेण तारं भवति इति श्रूयते. एवं तारस्य पुनः प्रबलौषधिसम्पर्कविशेषात् पुनश्च शुल्वत्वम् आयाति. एवञ्च धर्मिस्वरूपेएव परिणामो दृश्यते. अयञ्च परिणामो निवर्त्यो भवति. अतो धर्मिस्वरूपस्य यत्र परिणामो भवति तत्रापि क्वचिद् अनिवर्त्यत्वं क्वचिच्च निवर्त्यत्वम् इति द्वैविध्यं दृश्यते.

परन्तु अयं सर्वोऽपि विकारः पराधीनो दृश्यते. स्वतन्त्रः कोऽपि विकारो न दृश्यते. अस्मिन्नेव विषये शुद्धाद्वैते द्वैतवेदान्ते च विप्रतिपत्तिः भवति. यतोहि ब्रह्मणः परिणामो अङ्गीक्रियते अत्र. ब्रह्मणो विकारो अङ्गीक्रियते. ब्रह्मणश्च अयं विकारः कीदृशः स्यात्? एतेषु अन्यतमः कश्चन भवेत्. सर्वोऽपि विकारः पराधीनः दृश्यते. ब्रह्मतु अपराधीनं भवति. अतो अपराधीनस्य ब्रह्मणः कोऽपि अयं विकारो अङ्गीकर्तुं न शक्यते. अतएव ब्रह्म अपरिणामि इत्येव सिद्धान्ते अङ्गीक्रियते. अनेन किं ज्ञायते, जडेषु पदार्थेषु विकारो भवति. सर्वत्र लोके जडेष्वेव विकारो दृश्यते. चेतने विकारः कुत्रापि न दृश्यते. यत्रापि जडे विकारो दृश्यते सोऽपि पराधीनो दृश्यते. एवञ्च ब्रह्मपरिणामवादिभिः चेतने कुत्रापि अदृष्टो विकारो ब्रह्मणि कल्पनीयः. अपिच सो विकारो अपराधीनः इति कल्पनीयो भवति. तत्र इदं वक्तुं शक्येत, पराधीनः विकारो भवति जडेषु ब्रह्मणि यो विकारो भवति सो अपराधीनोऽपि भवितुम् अर्हति. यतोहि ब्रह्म स्वेच्छया लीलया विकारम् प्राप्नोति. ततश्च अपराधीनो विकारो ब्रह्मणि अङ्गीकर्तुं शक्यते इति इदम् उत्तरं भवति. किन्तु ब्रह्म प्रपञ्चात्मना परिणमते स्वेच्छया इति अङ्गीकारे ब्रह्मणः स्वेच्छया अनर्थरूपता स्वीकृता स्यात्. प्रपञ्चोऽयम् अनर्थः इति सर्वैः अनुभूयते. दुःखरूपो अयं प्रपञ्चः इति अङ्गीक्रियते, तत्र विवादो नास्ति. दुःखरूपप्रपञ्चात्मना परिणामो भगवता कथम् अङ्गीकर्तुं शक्यते? तत्र दुःखरूपेण प्रपञ्चात्मना परिणामो यदि अङ्गीक्रियते तर्हि ब्रह्मण्येव अनर्थापत्तिः अङ्गीकृता भवति. अतो हेतोः एतद् न अङ्गीकर्तुं शक्यते. परन्तु एवं वदेत्, प्रपञ्चो दुःखात्मको भवति. दुःखात्मकप्रपञ्चात्मना परिणामो ब्रह्मणो अङ्गीक्रियते चेद् अयम् अनर्थो न भवति. दुःखवत्त्वं हि अनर्थः. दुःखरूपतातु अनर्थो न भवति इति वक्तुं शक्यते वा? एतदपि विचारणीयम्. यतोहि सुखरूपता इष्टा पुरुषार्थरूपा अङ्गीक्रियते न केवलं सुखवत्त्वं किन्तु सुखरूपतापि वेदान्तिभिः इष्टत्वेन अङ्गीक्रियते. मोक्षे एते जीवाः सुखरूपाः भवन्ति. चेतनानां सुखरूपता वर्तते एवं उपनिषत्सु प्रतिपादनं दृश्यते. एवञ्च सुखरूपता यदा इष्टा भवति, दुःखरूपता तावद् अनिष्टा स्वीकार्या. येनच दुःखरूपता अनर्थप्रपञ्चरूपता ब्रह्मणः कथं वा स्वेच्छया अङ्गीकर्तुं

शक्यते ? तत्रैव विवादः.

अन्ये च प्रश्नाः अत्र उद्भवन्ति. ब्रह्मणो अनर्थभावः प्रपञ्चात्मना परिणामो अङ्गीक्रियते चेत्, परिणामः अङ्गीक्रियतां नाम अनर्थः कस्य ? अनर्थरूपतातु न निराकर्तुं शक्यते प्रपञ्चस्य. अयञ्च परिणामः ब्रह्मणएव. भवतु नाम. परन्तु अनर्थः कस्य ? अनर्थो ब्रह्मणः इति वक्तुं न शक्यते. जीवस्य इति वक्तव्यम्. पुनः जीवविषये अयं प्रश्नो जायते. किम् अयं जीवो ब्रह्मणो भिन्नो भवति उत अभिन्नः ? ब्रह्मणो भिन्नः इति अङ्गीक्रियते वा ? यतोहि जीवानामपि ब्रह्मांशत्वं स्वीकृतं वर्तते. ब्रह्मांशाः ब्रह्माभिन्नाः भवन्ति. अंशांशिनोः अभेदः स्वीक्रियते. एवञ्च एते जीवाः ब्रह्मणो अंशभूताः ब्रह्मणो अभिन्नाः भवन्ति. यदि जीवानाम् अनर्थः तर्हि ब्रह्मणएव अनर्थः इति पर्यवस्यति. तत्र भेदमात्रन्तु नास्ति. भेदो वर्तते. अतो भिन्नानां जीवानाम् अनर्थो नतु ब्रह्मणि अनर्थः इति वक्तुं शक्यते किम् ? भेदमात्रन्तु न अङ्गीक्रियते. भेदश्च अङ्गीकृतो अभेदश्च अङ्गीकृतो, भेदाभेदौ अङ्गीकृतौ वर्तेते. एवञ्च अभेदे अङ्गीकृते सति अनर्थो जीवानां यथा भवति ब्रह्मणोऽपि भवति इति अङ्गीकरणीयम् स्यात्. अयं सर्वोऽपि विचारो अनर्थरूपस्य प्रपञ्चस्य ब्रह्मात्मकत्वं ब्रह्मपरिणामरूपत्वम् अङ्गीक्रियते चेद् एते आक्षेपाः भवन्ति. अयम् अनर्थः प्रपञ्चः ब्रह्मपरिणामरूपः कस्य ? जीवस्य चेद् जीवो ब्रह्मणः सर्वथा भिन्नो नास्ति अस्मिन् सिद्धान्ते, अभिन्नो वर्तते. ततश्च अन्ततो गत्वा अयम् अनर्थो ब्रह्मणएव इति स्वीकृतं भवति.

तत्र इदम् उच्यते. श्रुतौ ब्रह्मणः परिणामः श्रूयते. "**सच्च त्यच्चाभवत्**" "**आत्मानं स्वयमकुरुत**" इत्यादिश्रुतिषु ब्रह्मणः परिणामः श्रूयते. श्रुतिसिद्धस्य परिणामस्य विषये एवं चर्चा न करणीया, अयं शुष्कः तर्कः इति शङ्का जायेत. परन्तु तर्कः तदा शुष्कः भवति यदा श्रुतिमूलो न भवति. श्रुतयस्तु उभयत्र भवन्ति. ब्रह्मणः परिणामविषयेऽपि श्रुतयः वक्तुं शक्यन्ते ब्रह्मणो विकारो नास्ति इत्यत्रापि "निर्विकारोऽक्षरः शुद्धः" इत्यादयः श्रुतयः

३५. तं.आ.भा.८ पृ.२२८ - २२९; द्विविधः कर्ता सङ्कुचितश्चासङ्कुचितश्च. कर्ता च द्विविधः प्रोक्तः कल्पिताकल्पितात्मकः, कल्पितो देहबुद्ध्यादिव्यवच्छेदेन चर्चितः. (तं.आ. ४।१६५)

३६. शि.दृ. पृ.१९७ - २०८

३७. यद्यत् सन्निवेशविशेषवत् तत्तद्बुद्धिमत्कर्तृनिमित्तं यथा घटः. (ई.सि.वृ., ई.सि. पृ.१; शि.दृ. पृ.२७ पा.टि.६)

३८. वह ईश्वर उन पदार्थोंको भासित मात्र करता है, भारूपताकी प्राप्ति नहीं कराता. वे स्वयं भारूप हैं अन्यथा तो वे भासित ही नहीं हो सकते क्योंकि जो जिस रूपका नहीं है उसे उस रूपकी प्राप्ति कोटि प्रयासोंके बावजूद भी नहीं करायी जा सकती है.

३९. कारणं च पर्यन्ततः परमशिवात्मा कर्तेति स्वीकार्यं यतः संयोगसमवायौ तदनुबन्धिनौ अन्येपि सम्बन्धा संयोजकाद्यवान्तरकर्तृसद्भावेपि पर्यन्ततः परमेश्वरेच्छानुविधायितया तस्यैव कर्तुः कार्यतया अनुभूयन्ते. (म.मं. पृ.३५)

४०. चिद्रूपएव परमेश्वरः स्वेच्छावशात् इयद्विश्वम् अवभासयति किन्तु नियतिदशायां प्रथान्तरव्यवधानेन येन बीजाद् अङ्कुरो मृदो घटः इत्येवमात्मिका लोकस्य प्रतीतिः. (तं.आ.भा.६ पृ.१०)

४१. ईश्वरकृतया नियत्यैव कुम्भकारोपि मृदादिकं घटकरणे प्रेरयितुं शक्नोति... कुम्भकारः ईश्वरस्थित्या व्यवस्थयैव घटं जनयेत न स्वतन्त्रतया... अन्यथा स कुम्भकारः घटकरणे तन्तूनपि प्रेरयेत्. व्यवस्था तत्तन्मृदादिसंस्कारक्रमेण प्रदर्शितनियतिशक्तिविजृम्भा-रूपया. (ई.प्र.वि., भा.भा.२ पृ.१६८)

४२. नियमे हि अन्योन्यापेक्षा जीवितं सा च जडानां न सम्भवति(तं.आ.भा.६ पृ.१६).

४३. जडस्य तु न सा शक्तिः सत्ता यदसतः सतः, कर्तृकर्मतत्त्वैव कार्ये कारणता ततः. (ई.प्र.का.२।४।२)

४४. यत्र-यत्र हि अनुसन्धानं तत्र-तत्र चैतन्यम्, अन्यथा घटस्यापि पटविशयानुसन्धानप्रसङ्गात्. (भा.भा.२ पृ.१९०)

४५. स्वतन्त्रता च चिन्मात्रवपुशः परमेशितुः, स्वतन्त्रं च जडं चेति तद् अन्योन्यं विरुध्यते. (तं.आ.९।९)

४६. इत्थं जडभावानां संविद्विश्रान्तिं विना असत्कल्पत्वात् स्वात्मन्यसत्स्वभावानां ज्ञातुः प्रकाशस्वभावस्य सम्बन्धितयैव सत्त्वं. (अ.प्र.सि.वृ. पृ.६)

४७. कार्यं क्रियाशक्त्या भास्यमानं कर्मैव इति कृत्येनैव आविष्कृतं, कार्यते अनेन कर्ता तत्समर्थाचरणेनेति कारणमपि कर्तरि चेतने विश्राम्यति(ई.प्र.वि., भा.भा.२ पृ.१५४)

४८. कार्यमाभासनक्रियाविषयत्वात् कर्मैव. (वही)

४९. किं च कर्मापि न मलाद् यतः कर्मक्रियात्मकम्, क्रिया च कर्तृतारूपात् स्वातन्त्र्यान्न

पुनर्मलात्. ( तं.आ.९।९८।९९ )

५०. यत् यस्य नियममनुविधत्ते/स्वरूपलाभं प्रति अपेक्षते तत् तस्य कायम् इति प्रतिघटं मृत्तिकादिरूपहेतु तद्वन्मात्रस्य आभासात्. ( वहीं, भा.१ पृ.२३३ )

५१. प्रयोज्याप्रयोजिका च सत्ता तयो: कार्यकारणयो:. ( वहीं, भा.२ पृ.१९३ )

५२. कारणानुरूपेणैव हि प्राय: कार्यस्योत्पादो भवेत्. ( तं.आ.भा.३ पृ.३ )

५३. अनेकसहकारिसम्पाद्यविशेषं कारणात् कार्यं स्थूलं भवति, व्यक्ततरत्वात् नतु सूक्ष्मम्. ( शि.दृ.वृ., शि.दृ. पृ.२६ )

५४. ...तथाभूताया: हि अन्यथाभावो यथा-यथा अधिको भवति तथा-तथा कार्यस्यापि विजातीयत्वं तारतम्येन पुष्यति. ( तं.सा. पृ.७१ )

५५. यद्धि यदन्वयव्यतिरेकानुविधायि तत्तत्कार्यं भवेद्. ( तं.आ.भा.५ पृ.२२ )

५६. यत् अचैतन्ये सत्यनेकं तत् सर्वं च कार्यं यथा घट:. ( वहीं, पृ.११९ )

५७. अन्तराभासमानस्य अर्थस्य तथारूपापरित्यागो नैव बहिराभासनं नाम कार्यत्वं. ( वहीं, भा.६ पृ.१४ )

५७. तत्त्वत: परमेश्वरस्य अप्रतिहत-स्वातन्त्र्यरूपाविच्छि-न्नस्वात्मपरामर्शे मयी अनन्योन्मुख-तारूपा इच्छैव क्रिया. ( ई.प्र.वि., भा.भा.२ पृ.२४ )

५८. अन्तराभासमानस्य तथारूपापरित्यागेनैव बहिराभासनं निर्माणम्. ( ई.प्र.वि. भा.भा.२ पृ.१६१ )

५९. तत्त्वत: परमेश्वरस्य अप्रतिहत-स्वातन्त्र्यरूपाविच्छि-न्नस्वात्मपरामर्शे मयी अनन्योन्मुख-तारूपा इच्छैव क्रिया. ( ई.प्र.वि., भा.भा.२ पृ.२४ )

६०. स्वामिनश्च आत्मसंस्थस्य भावजातस्य भासनम्. ( ई.प्र. का.१।५।८ )

६१. ई.प्र.का. १।५।१०

६२. शि. दृ. ४।४१।४२

६३. ई.प्र.का. २।१।४ - ५, भा. भा.२ पृ.११

६४. इस दर्शनमें अन्य दर्शनोंकी तरह देश व काल को स्वतन्त्र कारण न मान कर नियतिके अन्तर्गत ही स्वीकार किया गया है.

६५. यहां न्यायके अर्थमें क्रमको ही कारणकार्यका मूल केन्द्र नहीं माना गया है. वहां पूर्वापरीभाव ही कारणकार्यका नियामक है, मात्र वह पूर्वापरीभाव नियत व अनन्यथासिद्ध हो. फलत: वहां कारणका नाश हो जाने पर ही कार्यकी उत्पत्ति सम्भव होती है पर यहां सत्कार्यवादी मीमांसाका प्रतिपादन होनेसे सब कुछ आभासनसे पूर्व भी सत् है तथा बादमें भी. यहां सांख्यवत् ही किसीकी उत्पत्ति या विनाश भी सम्भव नहीं है, मात्र आविर्भाव व तिरोभाव होता है जोकि इस दर्शनकी शब्दावलीमें आभासन व अनाभासन रूप ही है. अत: यहां पूर्वता व परता मात्र प्रातीतिक हैं. उनका रूप बदल कर यहां अन्त:स्थता व बहि:स्थता कर दिया गया है.

६६. कर्तृकर्मतत्त्वैव कार्यकारणता ततः. ( ई.प्र.का. २।४।२ )
६७. ई.प्र.वि., भा. भा.१ पृ.५९
६८. ई.प्र.वि., भा. भा.१ पृ.२४ - २५
६९. द्विधा हि कर्तृत्वं शुद्धं हि मायीयं चं, तत्राद्यमनवच्छिन्नाहंपरामर्शमयं कार्यानारूशितमेव, अन्यच्च घटक्रियापटक्रिया इत्यादिकार्यारूशितम्. ( तं.आ.भा.६ पृ.१५९ )
७०. हेतुश्च द्विविधः - उपादानं निमित्तं च, उपादानं यथा घटादौ मृदादि, निमित्तं तथा तत्रैव दण्डादि. ( तं.आ.भा.२ पृ.६८ )
७१. शिवस्यैव एकस्य कारणत्वे निमित्तसमवायित्ववैचित्र्येण तस्य विचित्रता त्रितयात्माख्या न दोषः. अथवा स्वयं स तावन्निमित्तकारणं, तदिच्छा समवायिकारणं, घटादिवस्तुनः सत्तेच्छान्वयात् सएव च अवयवसंयोगसहकार्यसमवायिकारणम्. ( शि.दृ.वृ., शि.दृ. पृ.१३१ )
७२. नैयायिकस्यैव मायापदे पारमार्थिकत्वमेव. ( ई.प्र.वि., भा.भा.१ पृ.४३ )
७३. यत्कार्योत्पत्तौ नित्यमेव सम्बद्धं तत् समवायिकारणं यथा घटोत्पत्तौ मृत्तिका, दध्नि वा क्षीरम्. ( शि.दृ. पृ.६१, पा.टि.८ )
७४.
अ. उपादानकारणं हि स्वरूपविकारम् आसाद्य कार्यानुगामित्वेन वर्तते यथा घटादौ मृत् नैवमस्याः ...अस्या मायैव उपादानकारणम्. ( तं.आ., भा.६ पृ.३१ )
आ. ...यदीयरूपमेव यस्य रूपं केनचिद्धर्मेण अनुयायि भासते तदैव तस्य उपादानकरणाभ्याम्. ( वहीं, पृ.३१ )
७५. ...ये ते सहभावमापन्नाः कार्यम् आविर्भावयन्ति ते परस्परं योगे विचित्रवृत्तयः दृश्यन्ते. तथा हि बीजान्तर्गमनेन बीजभूता जलभूम्यादौ यो रसादिपरिणामात् दीर्घप्रचितसन्निवेशम् अङ्कुरं सहकारितया कुर्वन्ति. ( ई.सि. पृ.१० )
७६. सहकारिकारणप्रगुणनपरिवर्तनाद्युपकारम् अत्र चरितार्थत्वात्. ( तं.आ. भा.६ पृ.३६ )
७७. सहकारिणश्च कदाचिदसम्भवेपि न काचित् क्षतिः. (तं.आ.वि., तं.आ.भा.११ पृ.८२)
७८. यत्कार्यसिद्धौ बहुप्रकारकम् असम्बद्धं च तन्निमित्ताख्यं कारणं यथा पटोत्पत्तौ वेमादि कार्येण असदृशम्, कार्यकारणयोः पृथक्स्थितत्वात्. ( शि.दृ.पृ.६१. पा.टि.५।७ )
७९. भा. भा.२ पृ. ३९,४०
८०. कार्यं हेतुः स्वभावो वातएवोत्पत्तिमूलजः. ( ई.प्र.का.२।४।१ )
८१. समग्राणाम् एकप्रमातृविश्रान्तिसतत्त्वम् एकं रूपं सामग्री, न पुनर्व्यस्ताः समग्राः दण्डादयः कारणम्. ( तं.सा. पृ.७१ )
८२. पारमार्थिके हि भित्तिस्थानीये स्थिते रूपे सर्वम् इदम् उल्लिख्यमानं घटते न अन्यथा. अतएव सामग्र्याएव कारणत्वं युक्तम्. ( तं.सा. पृ.७० )
८३. ...सामग्रीवादोपि विषयशरीरस्य संवेदनस्यैव कर्तृतायाम् उपोद्बलकः. ( वहीं, पृ.७२ )
८४. तं. आ. भा.६ पृ.४२।४४

८५. व्यक्तिश्च प्रकाशमानता प्रकाशात्मकता, अङ्कुरादेः अनादिनिधनस्य सतएव चित्प्रकाशस्य तेन - तेन आत्मना अवस्थानम् इति अभिव्यक्तिवादिनां सत्कार्यवाद उक्ता भवति. ( शि.दृ.वृ., शि.दृ. पृ.१६५ )

८६. दीपेन क्रियते व्यक्तिर्घटादेः सतएव वा, यथा सतः क्रियाव्यक्तिर्व्यक्ते सत्त्वे तथा कृतिः. ( शि.दृ. आ.४ )

८७. तं.सा. पृ.६९।७०; यद्यपि यहां दो वर्गोंमें ही वर्गीकरण मिलता है पर इनमेंसे सृष्टको ही दो वर्गोंमें वर्गीकृत कर सकते हैं - नियत्यनुप्राणित सृष्टि तथा योगीसृष्टि.

८८. भा.भा.२ पृ.३००।३०१

८९. सृष्टो नियत्यवस्थापितः ( तं.सा. पृ.७०, पा.टि.). नियतेश्च कार्यकाणरयोर्नियमनरूपं, कार्यकारणभावश्च कर्तृमात्रपर्यवसायिएव... कर्तृत्वं च प्रमातुर्धर्मः(तं.आ. भा.६ पृ.१६३).

९०. परमशिव अनन्तशक्ति मण्डित है पर उन अनन्तशक्तियोमें विमर्श व स्वातन्त्र्यशक्तियां प्रमुख हैं जोकि क्रमशः ज्ञानात्मक व क्रियात्मक क्षेत्रोंसे सम्बद्ध हैं. नियतिशक्ति इस विमर्शशक्तिका ही व्यवस्थापनकारी पक्ष है जिसके स्फुट कर्तृत्वका प्रकाशन लौकिक सृष्टिमें ही होता है अतः वही इसका कार्यक्षेत्र है. यहां इसकी दो विधायें हैं - १. सामान्य व्यापार अर्थात् व्यवस्थापन मात्र. २. विशिष्ट व्यापार अर्थात् नियामकता व प्रतिबन्धकता.

९१. वस्त्वन्तरस्य च तेन कार्यकारणभावनियमः सामानधिकरण्यनियमश्च ईश्वरनियतिशक्त्युपजीवनएव अवधार्यो भवति न अन्यथा. ( ई.प्र.वि. भा.भा.२ पृ.८४ )

९२. एकस्मिन्नेव स्वलक्षणे प्रत्याभासं नियतिशक्त्या कार्यं नियमितं तथाभूतानेककार्यकृदाभासभेदाधिकरणम् एकं च सामानाधिकरण्याभासवशाद् वस्त्वनेकस्य एकता हिं समानाधिकरण्यम्. ( प्र.का.वृ. पृ.४५ )

९३. तं.सा. पृ.७०

९४. नियतेः कार्यकारणविषयनियमनव्यापारः तत्त्वं प्राग्भाविकारणं पश्चाद्भाविकार्यम्. ( तं.आ. भा.६ पृ.१६१ )

९५. सर्वा पाशवी सृष्टिः प्रत्ययसृष्टिः ईश्वरसृष्ट्युपजीवनी. ( ई.प्र.वि. भा.भा.२ पृ.२९८ )

९६. योगिनामपि मृद्बीजे विनैवेच्छावशेन तत्, घटादि जायते तत्तत्स्थिरस्वार्थक्रियाकरम्.

९७. एतदेव हि नाम योगिनो योगित्वं यत् निखिलमिदं विश्वं शिवात्मतया परिजानाति. ( तं.आ.भा.३ पृ.२४९ )

९८. शिवतुल्यो जायते. शि.सू. १।२५

९९. ईश्वरेण सह स्वस्यैकात्म्यं येन तादृशस्य सर्गः साधारणएव भवति येन योगिकल्पितं वस्तु सर्वएव पुरोनुभवन्ति. ( भा. भा.२ पृ.३०२ )

१००. तस्य - तस्य स्थिरस्य अर्थक्रियान्तरानुबन्धिनः कालान्तरानुबन्धिनश्च स्वस्य आत्मीयस्य अर्थक्रियाविशेषस्य करणे हेतुतच्छीलानुकूलरूपं घटादि जायते. ( ई.प्र.वि., भा.भा.२ पृ.१७१ )

सच्चिदानन्दरूपं तु ब्रह्म व्यापकमव्ययम् |

सर्वशक्ति स्वतन्त्रं च सर्वज्ञं गुणवर्जितम् ||

सजातीयविजातीयस्वगतद्वैतवर्जितम् |

सत्यादिगुणसाहस्त्रैर्युक्तमौत्पत्तिकैः सदा ||

सर्वाधारं वश्यमायमानन्दाकारमुत्तमम् |

प्रापञ्चिकपदार्थानां सर्वेषां तद्विलक्षणम् ||

जगतः समवायि स्यात् तदेव च निमित्तकम् |

कदाचिद्रमते स्वस्मिन् प्रपञ्चेऽपि क्वचित्सुखम् ||

यत्र येन यतो यस्य यस्मै यद् यद्यथा यदा |

स्यादिदं भगवादन साक्षात् प्रधानपुरुषेश्वरः ||

यः सर्वत्रैव सन्तिष्ठन्नन्तरं संस्पृशेन्न तत् |

शरीरं तं न वेदेत्थं योऽनुविश्य प्रकाशते |

सर्ववादानवसरं नानावादानुरोधि तत् ||

अनन्तमूर्ति तद् ब्रह्म कूटस्थं चलमेव च |

विरुद्धसर्वधर्माणामाश्रयं युक्त्यगोचरम् ||

आविर्भावतिरोभावैर्मोहनं बहुरूपतः |